# प्रस्तावना॰

इह खलु भारते वर्षे समस्तास्तिकपरमादरणीयानि श्रुतिस्मृतिवदुपादेयवचनानि श्रीमद्भगवन्नारायणावतारेण जगदुद्धाराय प्रवर्तमानेन योगचक्षुषाखिलं जगत्करामलकवत्प्रपश्यता भगवता श्रीमद्व्यासेन निर्मितान्यष्टादशपुराणान्युपपुराणानि च तत्त्वतो वेदार्थमधिजिज्ञासुभिरवश्यमेवालोचनीयानि धर्मार्थकाममोक्षचतुर्विधपुरुषार्थग्रामेलौकिकं च व्यावहारिकं सदसदाचरणादिज्ञानमभीप्सुभिर्बुद्धिमद्भिरिति सुप्रसिद्धमेव धर्मविदाम्। तदेषु दिवसेष्वस्माकं दौर्भाग्यविलसितेन सर्वेषां पुराणानां पुस्तकानि क्वचित्क्वचिदेवोपलभ्यमानान्यत्यन्ताशुद्धतया पारायणादौ तथैव सामान्यव्युत्पत्तिमद्भिः पौराणिकैः संहितादिपाठे विपरीतफलोत्पत्तिजनकानि जायन्त इति महानेषोऽस्मद्धर्मतरुमहत्तरस्कन्धशाखाविच्छेद एवापन्न इति सहृदयानां स्वधर्मैकनिष्णातानां मान्यजनानामाकर्ण्य परिदेवनां मत्स्यादिपुराणानामत्यन्तशुद्धसुपरिष्कृतमुद्रणाय प्रवर्तमानेन मया पूर्वं मुद्रितमेव मत्स्यपुराणं मार्कण्डेयपुराणमथ च गणेशपुराणं, लिङ्गपुराणं च इदानीं तथैव वामनपुराणमपिमुद्रणीयमिति कृतनिश्चयेन कायस्थलिपिलिखितानि पुस्तकानि पञ्चषाणि संपाद्य शोधनादिविषयेऽभ्यर्थितैरत्रत्यदक्षिणविद्यालयप्रधानशास्त्रिभिर्वाराणसेयैः भारद्वाजगोविन्दशास्त्रिभिर्विषमस्थलकृतविशेषटिप्पणं तथैव च वैराजक्षेत्रस्थकानडोपाभिधश्रीदामोदराचार्यैः संशोधितं विविच्य च तत्रतत्र पाठभेदान् युक्तायुक्तपुष्कलपुस्तकसंमतपाठांश्च बृहद्भिः सीसकाक्षरैस्सटिप्पणं सोपक्रमणिकं मुद्रयितुं स्वीये जगद्धितेच्छुनाम्नि यन्त्रालये लोकोपकारार्थमारब्धमेतदगादिदानीं समाप्तिमिति सोऽयं मे परिश्रमो मान्यविदुषां हर्षप्रकर्षदो भूयाच्चार्यजनानां पठनपाठनश्रवणादिविविधोपयोगेन सफल इति सर्वान्तर्यामिणं विश्वनाथमभ्यर्थये प्रीयतां च श्रीमान् जगन्नियन्ता विश्वनाथ एवमेव महता परिश्रमेण सर्वाणि पुराणान्यथ चोपपुराणानि मुद्रयितुमस्ति मनीषा यद्युपलभ्येत महोदारेभ्य आश्रय इति शम् ।

# वामनपुराणस्यानुक्रमणिका.

# वामनपुराणस्यानुक्रमणिका.



॥ इत्यनुक्रमणिका ॥

ॐनमः ॥ श्रीगजवदनभारतीभ्यांनमः ॐनमोभगवतेवासुदेवायनमः ॥ त्रैलोक्यराज्यमाच्छिद्यबलेरिंद्राययोददौ ॥
नमस्तस्मैसुरेशायसदा वामनरूपिणे ॥ १ ॥ पुलस्त्यमृषिमासीनमाश्रमेवाग्विदांवरम् ॥ नारदःपरिपप्रच्छपुराणं
वामनाश्रयम् ॥२॥ कथंभगवताब्रह्मन्विष्णुनाप्रभविष्णुना ॥ वामनत्वंधृतंपूर्वंतन्ममाचक्ष्वपृच्छतः ॥ ३ ॥ कथंचवैष्ण-
वोभूत्वाप्रह्लादोदैत्यसत्तमः ॥ त्रिदशैर्युयुधेसार्द्धमत्रमेसंशयोमहान् ॥४॥ श्रूयतेचद्विजश्रेष्ठदक्षस्यदुहितासती ॥ शंक-
रस्यप्रियाभार्याबभूववरवर्णिनी ॥ ५ ॥ किमर्थंसापरित्यज्यस्वशरीरंवरानना ॥ जाताहिमवतोगेहेगिरींद्रस्यमहात्मनः
॥ ६ ॥ पुनश्चदेवदेवस्यपत्नीत्वमगमच्छुभा ॥ एतन्मेसंशयंछिंधिसर्वविस्त्वंमतोऽसिमे ॥ ७ ॥ तीर्थानांचैवमाहात्म्यंदा-
नानांचैवसत्तम ॥ व्रतानांविविधानांचविधिमाचक्ष्वमेद्विज ॥ ८ ॥ एवमुक्तोनारदेनपुलस्त्योमुनिसत्तमः ॥ प्रोवाचवद-
तांश्रेष्ठोनारदंतपसोनिधिम् ॥ ९ ॥ पुलस्त्यउवाच ॥ पुराणंवामनंवक्ष्येक्रमान्निखिलमादितः ॥ अवधानंस्थिरंकृत्वा
शृणुष्वमुनिसत्तम ॥ १० ॥ पुराहैमवतीदेवीमंदरस्थंमहेश्वरम् ॥ उवाचवचनंदृष्ट्वाग्रीष्मकालमुपस्थितम् ॥ ११ ॥
ग्रीष्मःप्रवृत्तोदेवेशनचमेविद्यतेगृहम् ॥ यत्रवातातपौभीष्मौस्थितयोर्नौगमिष्यतः ॥ १२ ॥ एवमुक्तोभवान्यैतच्छंकरो
वाक्यमब्रवीत् ॥ निराश्रयोऽहंसुदतिसदाऽरण्यचरःशुभे ॥ १३ ॥ इत्युक्ताशंकरेणाथवृक्षच्छायासुनारद ॥ निदाघ-
कालमनयत्समंशर्वेणसासती ॥ १४ ॥ निदाघांतेसमुद्भूतोनिर्जनाचरिताद्भुतः ॥ घनांधकारिताशोवैप्रावृट्कालोऽति-
राववान् ॥ १५ ॥ तंदृष्ट्वादक्षतनुजाप्रावृट्कालमुपस्थितम् ॥ प्रोवाचवाक्यंदेवेशंसतीसप्रणयंतदा ॥ १६ ॥ सत्यु-

१ त्रयाणां लोकानां समाहारस्त्रिलोकी सैव त्रैलोक्यं २ बलेराच्छिद्य बलिसकाशाद्गृहीत्वेत्यर्थः ३ वामनावतारधारिणे ४ समर्थेन अलंकृञित्यादिनेष्णुच् प्रत्यय. । ५ भयकरौ भीमादयोपादाने इत्यनेन साधुः । ६ जनानामाचरितामितस्ततो देशान्तरेषुच संचारस्सनिर्गतोयस्मात्सः । घनैर्मेघैरन्धकारिता अन्धकारपूरिता आशाः दिशो यस्मिन् सः अति अत्यन्तं रावो घनगर्जितं विद्यते यस्मिन सः ७ प्रणयेन प्रार्थनया सहितं युक्तं

वाच ॥ निर्वांतिवाताहृदयावदारणागर्जंत्यमीतोयधरामहेश ॥ स्फुरंतिनीलाभ्रगणेषुविद्युतोवाशंतिकेकारवमेवबर्हिणः ॥१७॥ पतंतिधारागगनात्परिच्युताबकाबलाकाश्चभजंतितोयदान् ॥ कदंबसर्ज्जार्जुनकेतकीनांपुष्पाणिमुंचंतिचमारुताहिना ॥ १८ ॥ श्रुत्वैवमेघस्यदृढंतुगर्जितंत्यजंतिहंसाश्चसरांसितत्क्षणात् ॥ नीचोद्धतान्सत्पुरुषायथाश्रयान्प्रवृद्धमूलानपिसंत्यजंति ॥ १९ ॥ इमानियूथानितथामृगाणांत्वरंतिधावन्तिरमंतिशंभो ॥ धावंतिदृष्टानिवनस्थलीषुसर्वाभुवस्तोयदसंप्रवृद्ध्या ॥ २० ॥ राजंतिशष्पावृतसस्ययुक्तास्तथाऽचिराभाःसुतरांस्फुरंति ॥ रम्येषुनीलेषुघनेषुदेवनूनंसमृद्धिंर्मलिनस्यदृष्ट्वा ॥ २१ ॥ चरंतिशूरास्तरणोद्गमेषुउद्वृत्तवेगाःसहसैवनिम्नगाः ॥ जाताःशशांकांकितचारुमौलेकिमत्रचित्रंयदनुज्वलंजनम् ॥ २२ ॥ श्रयंतिनीचानुगताहियोषितोनीलेषुमेघेषुसमाश्रितंनभः ॥ पुष्पेषुसर्ज्जामुकुलेषुनीपाःफलेषुचश्रीश्चपयस्स्वथापगाः ॥ २३ ॥ पत्रेषुपद्मेषुमहासरांसिसुदुस्तरःसंप्रतिवर्षकालः ॥ इतीदृशेशंकरदुःसहेद्भुतेकालेसुरौद्रेननुतेब्रवीमि ॥ २४ ॥ गृहंकुरुष्वात्रमहाचलोत्तमेसुनिर्वृतायेनभवामिशंभो ॥ इत्थंत्रिनेत्रश्रुतिरामणीयकंश्रुत्वावचोवाक्यमिदंबभाषे ॥२५॥ नमेऽस्तिवित्तंगृहसंचयार्थेमृगारिचर्मावृतदेहिनःप्रिये ॥ममोपवीतंभुजगेश्वरःफणी

---

१ हृदयं विदारयन्ति भयकंपादिनेतिभावः बर्हिणोमयूराः मयूरो बर्हिणोबर्हीत्यमरः केकारवं केकाशब्दं केकावाणीमयूरस्येतिकोशः वाशन्ति भाषन्तइत्यर्थः । २ नीचान् निकृष्टान् उद्धतान् असमीक्ष्यकारिण आश्रयभूतान् प्रवृद्धं प्रकर्षेणवृद्धिं प्राप्तं मूलमाश्रयो येषु एवंभूतानपि सत्पुरुषास्त्यजन्तीत्यर्थः । ३ धावन्ति शुद्धाभवन्ति वर्षोदकेन निर्मलाभवन्तीत्यर्थः धावुगतिशुद्ध्योः । वनस्थलीषु वनसंबन्धीनीष्वकृत्रिमभूमिष्वित्यर्थः स्थलीत्यत्राकृत्रिमेर्थे जानपदेतिङीष् धावन्ति पलायन्ते । ४ शष्पैर्बालतृणैरावृतानियानिसस्यानितैर्युक्ता भुवस्तोयदानां मेघानां संप्रवृद्ध्या भुवाराजन्ति शोभन्ते इत्यर्थः । ५ अचिरा क्षणनश्वरा आभाकान्तिर्यासांता विद्युत इत्यर्थः घनेषु स्फुरन्तीत्यन्वयः । ६ शूरामलिनस्य दुर्जनस्य समृद्धिंदृष्ट्वा तदपहरणार्थं चरन्ति तद्वत् । तरणैस्तरणसाधननौकादिभिरुद्गमेषु गमनेषु निम्नगाः नद्यः उद्वृत्तोत्पन्नो वेगोयासामेवं जाताः । ७ नीचानुगता नीचजनसहवासवत्योयोषितोनुज्वलं मलिनं दुर्वृत्तमितियावत् जनमाश्रयन्ति किमत्र चित्रमाश्चर्यं किमपिनास्तीत्यर्थः असज्जनसहवासेन किंकिंदुष्कर्म न जायतेऽपितु सर्वं भवतीत्यर्थः । ८ मेघेषु नभः समाश्रितं मेघविशिष्टमितिफलितार्थः एवमग्रेपि । ९ सुनिर्वृता स्वस्था । १० मृगारिः व्याघ्रः ।

कर्णोपिपद्मश्चतथैवपिंगलः ॥ २६ ॥ केयूरमेकंममकंबलस्त्वहिर्द्वितीयमन्योभुजगोधनंजयः ॥ नागस्तथैवाश्वतरोहिकं-
कर्णंसव्येतरेतक्षकउत्तरंतथा ॥ नीलोपिनीलांजनतुल्यवर्णःश्रोणीतटेराजतिसुप्रतिष्ठः ॥ २७ ॥ पुलस्त्यउवाच ॥ इति
वचनमथोग्रंशंकरात्साम्दडानीश्रुतमपितदसत्यंश्रीमदाकर्ण्यभीता ॥ अवनितलमवेक्ष्यस्वामिनोवासकृच्छात्परिवदतिस-
रोषंलज्जयोच्छ्वस्यचोष्णम् ॥२८॥ देव्युवाच ॥ किमेवंसंश्रितायास्तुप्रावृट्कालोगमिष्यति ॥ वृक्षमूलेस्थितायास्तुसु-
नयेनवदाव्यय ॥ २९ ॥ शंकरउवाच ॥ घनावस्थितदेहायाःप्रावृट्कालःप्रयास्यति ॥ यथांबुधारानतवनिपतिष्यंति
विग्रहे ॥ ३० ॥ पुलस्त्यउवाच ॥ ततोहरस्तद्घनखंडमुन्नतमारुह्यतस्थौसहदक्षकन्यया ॥ ततोऽभवन्नामममहेश्वरस्य
जीमूतकेतुस्त्वितिविश्रुतंदिवि ॥ ३१ ॥ इतिश्रीवामनपुराणेहरललितेप्रथमोऽध्यायः ॥ १ ॥ पुलस्त्यउवाच ॥
ततस्त्रिनेत्रस्यगतःप्रावृट्कालोघनोपरि ॥ लोकानंदकरीरम्याशरत्समभवन्मुने ॥ १ ॥ त्यजंतिनीलांबुधरानभस्तलं
वृक्षांश्चकंकाःसरितस्तटानि ॥ पद्मानिगंधंनिलयानिवायसारुरुर्विपाणंकलुषंजलाशयाः ॥ २ ॥ विकासमायांतिचपंक-
जानिचंद्रांशवोभांतिलताःसुपुष्पाः ॥ नंदंतिहृष्टान्यपिगोकुलानिसंतश्चसंतोषमनुव्रजंति ॥ ३ ॥ सरस्सुपद्मंगगनेच
तारकाजलाशयेष्वेवतथापयांसि ॥ सतांचचित्तंहिदिशांमुखैःसमंवैमल्यमायांतिशशांककांतयः ॥ ४ ॥ एतादृशेहरः
कालेमेघपृष्ठाधिवासिनीम् ॥ सतीमादायशैलेंद्रंमंदरंसमुपाययौ ॥ ५ ॥ ततोमंदरपृष्ठेऽसौस्थितःसमशिलातले ॥ रे-
मेसशंभुर्भगवान्सत्यासहमहाद्युतिः ॥६॥ ततोगतायांशरदिप्रबुद्धेचैवकेशवे ॥ दक्षःप्रजापतिश्रेष्ठोयष्टुमारभतक्रतुम् ॥७॥

---

१ पद्मपिङ्गलकंबलधनंजयाश्वतरतक्षकनीलेति नागविशेषाणांसंज्ञाः । २ घनानांमेघानामुपर्यवस्थितो देहोयस्याः मेघोर्ध्वभागस्थितेतियावत् । ३ जीमूतानांमेघानां केतुरिव उप-
रिस्थितत्वात्केतुसदृशइत्यर्थः । ४ रुरुर्मृगविशेषः । ५ बोधिन्येकादश्युत्तरम् ।

द्वादशैवसचादित्याञ्शक्रादींश्चसुरोत्तमान् ॥ सकश्यपान्समामंत्र्यसदस्यान्समचीकरत् ॥ ८ ॥ अरुंधत्यानुसहितंव-
सिष्ठंशंसितव्रतम् ॥ सहानुसूयया त्रिंचसहधृत्याचकौशिकम् ॥ ९ ॥ अहल्ययागौतमंचभरद्वाजममायया ॥ चंद्रयासहितं
ब्रह्मन्ऋषिमंगिरसंतथा ॥ १० ॥ आमंत्र्यकृतवान्दक्षः सदस्यान्यज्ञकर्मणि ॥ सदस्यान्गुणसंपन्नान्वेदवेदांगपारगान्
॥ ११ ॥ धर्मंचससमाहूयभार्ययाऽहिंसयासह ॥ निमंत्र्ययज्ञवाटस्यद्वारपालार्थमादिशत् ॥ १२ ॥ अरिष्टनेमिनंचक्रेइध्माहर-
णकारिणं ॥ चंद्रयासहितंब्रह्मन्ऋषिमंगिरसंतथा ॥ १३ ॥ मृष्टान्नपानसंस्कारेसम्यक्दक्षःप्रयुक्तवान् ॥ भृगुंचस-
त्रसंस्कारेसम्यक्दक्षःप्रयुक्तवान् ॥ १४ ॥ तथाचंद्रमसंदेवंरोहिण्यासहितंशुचिम् ॥ धनानामाधिपत्येसयुक्तवान्हि
प्रजापतिः ॥ १५ ॥ जामातॄन्दुहितॄश्चैवदौहित्रांश्चप्रजापतिः ॥ सशंकरांसतींमुक्त्वामखेसर्वान्न्यमंत्रयत् ॥ १६ ॥
नारदउवाच ॥ किमर्थंलोकपतिनाधनाध्यक्षोमहेश्वरः ॥ ज्येष्ठःश्रेष्ठोवरिष्ठोपिआद्योपिननिमंत्रितः ॥ १७ ॥ पुलस्त्य
उवाच ॥ ज्येष्ठःश्रेष्ठोवरिष्ठोपिआद्योपिभगवाञ्शिवः ॥ कपालीतिविदित्वेशोदक्षेणननिमंत्रितः ॥ १८ ॥ नारदउवाच ॥
किमर्थंदेवताश्रेष्ठःशूलपाणिस्त्रिलोचनः ॥ कपालीभगवान्जातःकर्मणाकेनशंकरः ॥ १९ ॥ पुलस्त्यउवाच ॥ शृणुष्वाव-
हितोभूत्वाकथामेतांपुरातनीम् ॥ प्रोक्तांह्याद्यादिपुराणेषुब्रह्मणाऽव्यक्तमूर्त्तिना ॥ २० ॥ पुरात्वेकार्णवेलोकेनष्टेस्थावरजं-
गमे ॥ नष्टचंद्रार्कनक्षत्रेप्रनष्टपवनानले ॥ २१ ॥ अप्रतर्क्यमविज्ञेयंभावाभावविवर्जितं[1] ॥ निमग्नवीरुत्सतृणंतमोभूतं
सुदुर्दिनम् ॥ २२ ॥ तस्मिन्सशेतेभगवान्निशांवर्षसहस्रकीम् ॥ रात्र्यंतेसृजतेलोकान्राजसंरूपमास्थितः ॥ २३ ॥
रेजेसपंचवदनोवेदवेदांगपारगः ॥ स्रष्टाचराचरस्यास्यजगतोद्भुतदर्शनः ॥ २४ ॥ तमोमयस्तथैवान्यःसमुद्भूतस्त्रिलो-

१ भावाद्रव्यगुणकर्मसामान्याविशेषसमवायात्मकाः अभावाःप्रागभावादयः ।

चनः ॥ शूलपाणिःकपर्दीचअक्षमालांचदर्शयन् ॥ २५ ॥ ततोमहात्माह्यसृजदहंकारंसुदारुणं ॥ येनाक्रांतावुभौदेवौ
तावेवब्रह्मशंकरौ ॥ २६ ॥ अहंकारावृतोरुद्रःप्रत्युवाचपितामहम् ॥ कोभवानिहसंप्राप्तःकेनसृष्टोऽसिमांवद ॥ २७ ॥
पितामहोप्यहंकारीप्रत्युवाचाथकोभवान् ॥ भवतोजनकःकोऽत्रजननीवातदुच्यताम् ॥ २८ ॥ इत्यन्योन्यंपुराताभ्यां
ब्रह्मेशाभ्यांकिलप्रियः ॥ परिवादोभवत्तत्रउत्पत्तिर्भवतोऽभवत् ॥ २९ ॥ भवानप्यंतरिक्षंहिजातमात्रस्तदोत्पतत् ॥
धारयन्नतुलांवीणांकुर्वन्किलकिलाध्वनिम् ॥ ३० ॥ ततोविनिर्जितःशंभुर्मानिनाब्रह्मयोनिना ॥ तस्थावधोमुखोदीनो
ग्रहाक्रांतोयथाशशी ॥ ३१ ॥ पराजितेलोकपतौदेवेनपरमेष्ठिना ॥ क्रोधांधकारितंरुद्रंपंचमंमुखमब्रवीत् ॥ ३२ ॥
अहंतेप्रतिजानामि[1]नमोमूर्तेत्रिलोचन ॥ दिग्वासावृषभारूढोलोकक्षयकरोभवान् ॥ ३३ ॥ इत्युक्तःशंकरःक्रुद्धोब्रह्मा-
णंघोरचक्षुषा ॥ निर्दग्धुकामस्त्वनिशंददर्शभगवानजः ॥ ३४ ॥ ततस्त्रिनेत्रस्यसमुद्भवंतिवक्त्राणिपंचाथसुदुर्दृशानि ॥
सितंचरक्तंकनकावदातंनीलंतथापिंजरकंचरौद्रम् ॥ ३५ ॥ वक्त्राणिदृष्ट्वाऽर्कसमानिसद्यःपितामहोवाक्यमुवाचरुद्रम् ॥
समाहतस्याथजलस्यबुद्बुदाभवंतिकिंतेषुपराक्रमोऽस्ति ॥ ३६ ॥ तच्छ्रुत्वाक्रोधयुक्तेनशंकरेणमहात्मना ॥ नखाग्रेण
शिरश्छिन्नंब्राह्मंपरुषवादिनम् ॥ ३७ ॥ तच्छिन्नंशंकरस्यैवसव्येकरतलेऽपतत् ॥ पततेनकदाचिच्चतदाकरतलाच्छिरः
॥ ३८ ॥ अथक्रोधावृतेनाथब्रह्मणाद्भुतकर्मणा ॥ सृष्टस्तुपुरुषोधीमान्कवचीकुंडलीशरी ॥ ३९ ॥ धनुःपाणिर्महा-
बाहुर्बाणशक्तिधरोऽव्ययः ॥ चतुर्भुजोमहातूणीआदित्यसमदर्शनः ॥ ४० ॥ सत्वाहगच्छदुर्बुद्धेमात्वांशूलिन्निपातये ॥
भवान्पापसमायुक्तःपापिष्ठंकोजिघांसति ॥ ४१ ॥ इत्युक्तःशंकरस्तेनपुरुषेणमहात्मना ॥ त्रियायुक्तोजगामाथरुद्रो

१ एवंभूते कलहे भवतो नारदस्य ।

बदरिकाश्रमम् ॥ ४२ ॥ नरनारायणस्थानंपर्वतेहिहिमालये ॥ सरस्वतीयत्रपुण्यास्यंदतेसरितांवरा ॥ ४३ ॥ तत्र गत्वाचतंदृष्ट्वानारायणमुवाचह ॥ भिक्षांप्रयच्छभगवन्महाकारुणिकोसिभोः ॥ ४४ ॥ इत्युक्तोधर्मपुत्रस्तुरुद्रंवचनमब्रवीत् ॥ सव्यंभुजंताडयस्वत्रिशूलेनमहेश्वर ॥ ४५ ॥ नारायणवचःश्रुत्वात्रिशूलेनमहेश्वरः ॥ सव्यंनारायणभुजंताडयामासवेगवान् ॥ ४६ ॥ त्रिशूलाभिहतान्मार्गात्तिस्रोधाराविनिर्ययुः ॥ एकागगनमाश्रित्यास्थिताताराभिमंडितम् ॥ ४७ ॥ द्वितीयान्यपतद्भूमौतांजग्राहतपोधनः ॥ अत्रिस्तस्मात्समुद्भूतोदुर्वासाःशंकरांशतः ॥ ४८ ॥ तृतीयान्यपतद्धाराकपालेरौद्रदर्शने ॥ तस्माच्छिशुःसमभवत्सनद्धःकवचीयुवा ॥ ४९ ॥ श्यामावदातःशरचापपाणिर्गर्जन्यथाप्रावृषितोयदोऽसौ ॥ इत्थंब्रुवन्कस्यविनाशयामिस्कंधाच्छिरस्तालफलंयथैव ॥ ५० ॥ तंशंकरोवेत्यवचोबभाषेनरंहिनारायणबाहुजातं ॥ निपातयैनंनरदुष्टवाक्यंब्रह्मात्मजंसूर्यशतप्रकाशम् ॥ ५१ ॥ इत्येवमुक्तःसतुशंकरेणआद्यंधनुस्त्वाजगवंप्रसिद्धं ॥ जग्राहतूणानितथाक्षयाणियुद्धायवीरःसमतिंचकार ॥ ५२ ॥ ततःप्रबुद्धौसुभृशंमहाबलौब्रह्मात्मजोबाहुभवश्चशार्वः ॥ दिव्यंसहस्रंपरिवत्सराणांततोहरेणापिविरंचिरूचे ॥ ५३ ॥ जितस्त्वदीयःपुरुषःपितामहनरेणदिव्याद्भुतकर्मणाबली ॥ महापृषत्कैरभिपत्यताडितःस्तदद्भुतंचेहदिशोदशैव ॥ ५४ ॥ ब्रह्मातमीशंवचनंबभाषेनेहास्यजन्मन्यजितस्यशंभो ॥ पराजितंचेष्यतेऽसौत्वदीयोनरोमदीयःपुरुषोमहात्मा ॥ ५५ ॥ इत्येवमुक्त्वावचनंत्रिनेत्रंचिक्षेपसूर्येपुरुषंविरंचिः ॥ नरंनरस्यैवतदासविग्रहेचिक्षेपधर्मप्रभवस्यदेवः ॥ ५६ ॥ इतिश्रीवामनपुराणेहरललिते नरोत्पत्तिप्रलयोनामद्वितीयोऽध्यायः ॥ २ ॥

१ महाकारुणिकइतिपाठे महाकरुणापात्रं महाकापालिक इतिपाठे ब्रह्मकपालधारिणमित्यर्थः । २ वा एत्य वेत्य ओमाङोश्चेतिपररूपम्+अवहीतिदत्ताधुः एत्य आगत्येत्यर्थः ३ नरोतिसंबुध्यन्तं पृथक्पदम् । ४ अजेनब्रह्मणागम्यते प्राप्यतेतदजगवं गम्लृधातोरन्येभ्योपिदृश्यते इतिडः । अजगोविष्णुरस्तिशरत्वेन यस्मिन्निति वा गाण्डवजगात्संज्ञायामितिवः

पुलस्त्यउवाच ॥ ततः करतलेरुद्रःकपालेदारुणेस्थिते ॥ संतापमगमद्ब्रह्मन्चिंतयाकुलितेंद्रियः ॥ १ ॥ ततःसमाग-
तारौद्रानीलांजनचयप्रभा ॥ संरक्तमूर्धजाभीमाब्रह्महत्याहरांतिकम् ॥ २ ॥ तामागतांहरोदृष्ट्वापप्रच्छविकरालिनी-
म् ॥ कासित्वमागतारौद्रेकेनाप्यर्थेनतद्वद ॥ ३ ॥ कपालिनीमथोवाचब्रह्महत्यासुदारुणा ॥ ब्रह्महत्यास्मिसंप्राप्ता-
मांप्रतीच्छत्रिलोचन ॥ ४ ॥ इत्येवमुक्त्वावचनंब्रह्महत्याविवेशतम् ॥ त्रिशूलपाणिनंरुद्रंसंप्रतापितविग्रहम् ॥ ५ ॥
ब्रह्महत्याभिभूतश्चशर्वोबदरिकाश्रमम् ॥ आगच्छन्नोददर्शाथनरनारायणावृषी ॥ ६ ॥ अदृष्ट्वाधर्मतनयौचिंताशोक-
समन्वितः ॥ जगामयमुनांस्नातुंसापिशुष्कजलाऽभवत् ॥ ७ ॥ कालिंदींशुष्कसलिलांनिरीक्ष्यवृषकेतनः ॥ प्लक्षजां
स्नातुमगमदंतर्धानंचसागता ॥ ८ ॥ ततोऽनुपुष्करारण्यंमागधारण्यमेवच ॥ सैंधवारण्यमेवासौगत्वास्नातोयदृच्छया
॥ ९ ॥ तथैवनैमिषारण्यंधर्मारण्यंतथेश्वरः ॥ स्नातोनैवचसारौद्राब्रह्महत्याव्यमुंचत ॥ १० ॥ सरित्सुतीर्थेषुतथाश्र-
मेषुपुण्येषुदेवायतनेषुसर्वतः ॥ समाप्लुतोयोगयुतोपिपापान्नावापमोक्षंवृषभध्वजोऽसौ ॥ ११ ॥ ततोजगामनिर्विण्णः
शंकरःकुरुजांगलम् ॥ तत्रगत्वाददर्शाथचक्रपाणिंखगस्थितम् ॥ १२ ॥ तंदृष्ट्वापुंडरीकाक्षंशंखचक्रगदाधरम् ॥ कृतांज-
लिपुटोभूत्वाहरःस्तोत्रमुदीरयत् ॥ १३ ॥ हरउवाच ॥ नमस्तेदेवतानाथनमस्तेगरुडध्वज ॥ शंखचक्रगदापाणेवासुदे-
वनमोऽस्तुते ॥१४॥ नमस्तेनिर्गुणानंतअप्रतर्क्यायवेधसे ॥ ज्ञानाज्ञाननिरालंबसर्वालंबनमोऽस्तुते ॥१५॥ रजोयुक्त[1]-
नमस्तेस्तुब्रह्ममूर्तेसनातन ॥ त्वयासर्वमिदंनाथजगत्सृष्टंचराचरम् ॥१६॥ सत्त्वाधिष्ठित[2]लोकेशविष्णुमूर्तेअधोक्षज ॥ प्र-
जापालमहाबाहोजनार्दननमोऽस्तुते ॥ १७ ॥ तमोमूर्ते[3]अहंह्येषत्वदंशक्रोधसंभवः ॥ गुणाभियुक्तोदेवेशसर्वव्यापिन्न-

१ रजोयुक्त रजोगुणप्रधान एतेन सृष्टिकरस्त्वमेवेतिसूचित तदेवाह ब्रह्ममूर्तेइति । २ सत्त्वाधिष्ठित सत्त्वगुणप्रधान । ३ तमोमूर्ते तमोगुणप्रधान ।

मोऽस्तुते ॥ १८ ॥ भूरियंत्वंजगन्नाथजलमम्बरपावकौ ॥ वायुर्बुद्धिर्मनश्चापिशर्वरीत्वंनमोस्तुते ॥ १९ ॥ धर्मोयज्ञ-
स्तपःसत्यमहिंसाशौचमार्जवम् ॥ क्षमादानंदयालक्ष्मीर्ब्रह्मचर्यंत्वमीश्वरः ॥ २० ॥ त्वंसांगाश्चचतुर्वेदास्त्वंवेद्योवेदपा-
रगः ॥ उपवेदाभवानीशसर्वोसित्वंनमोऽस्तुते ॥ २१ ॥ नमोनमस्तेऽच्युतचक्रपाणेनमोऽस्तुतेवामनमीनमूर्ते ॥ लोकेभ-
वान्कारुणिकोमतोमेत्रायस्वमांकेशवपापबंधात् ॥ २२ ॥ ममाशुभंनाशयविग्रहस्थंयद्ब्रह्महत्याभिभवंबभूव ॥ दग्धो-
स्मिनष्टोस्म्यसमोक्ष्यकारीपुनीहितीर्थोसिनमोनमस्ते ॥ २३ ॥ पुलस्त्यउवाच ॥ एवंस्तुतश्चक्रधरःशंकरेणमहात्मना ॥
प्रोवाचभगवान्वाक्यंब्रह्महत्याक्षयायहि ॥२४॥ हरिरुवाच ॥ महेश्वरशृणुष्वेमांममवाचंकलस्वनां ॥ ब्रह्महत्याक्षयक-
रींशुभदांपुण्यवर्द्धनीम् ॥ २५ ॥ योसौब्रह्मांडकेपुण्येमदंशप्रभवोऽव्ययः ॥ प्रयागेवसतेनित्यंयोगशायीतिविश्रुतः
॥ २६ ॥ चरणाद्दक्षिणात्तस्यविनिर्यातासरिद्वरा ॥ विश्रुतावरणेत्येवंसर्वपापहराशुभा ॥ २७ ॥ सरिदन्याद्वितीयाच
असिरित्येवविश्रुता ॥ तेउभेतुसरिच्छ्रेष्ठेलोकपूज्येबभूवतुः ॥ २८ ॥ तयोर्मध्येतुयोदेशस्तत्क्षेत्रंयोगशायिनः ॥ त्रैलो-
क्यप्रवरंतीर्थंसर्वपापप्रमोचनम् ॥ २९ ॥ तत्रादृशास्तिनगरीपुण्यावाराणसीशुभा ॥ यस्यांहिभोगिनोपीशप्रयांतिभव-

१ कलोमधुरः स्वनोयस्यांसा । २ योगेयोगासने शयनरूपं व्रतं यस्य स योगशायी व्रते णिनिः । ३ वरंचतेअनमीश्च वरानसी अर्शायग्णारूपे तयोर्दूरभवानगरी वाराणसी वरानस्शब्दाददूरभवश्चेत्यञ् । वरंचतदनश्चगङ्गारूपं तस्यादूरभवेतिवा । ४ भोगिनः संसारलंपटा अपि भवतः संसारतो लयं नाशं प्राप्नुवन्ति संसारविनिर्मुक्ता भवन्तीत्यर्थः. काशीमरणान्मुक्तिरितिश्रुतेः यद्यप्ययोध्यामथुरामायाकाशीकाञ्चीह्यवन्तिका । पुरीद्वारावतीचैव सप्तैता मोक्षदायका इति वचसा समानामपि मुक्तिप्रदत्वमथापि वाराणस्यादिनगरीणां नामपरजन्मनिकाशीमरणद्वारामुक्तिप्रयोजकत्वमेतस्या एव साक्षान्मुक्तिप्रदत्वमिति विभावनीयम् नच ऋते ज्ञानान्नमोक्षइति श्रुतिविरोधः. मरणाव्यवहितोत्तरकाले शिवकर्तृकतारको-पदेशेन ज्ञानस्य सत्त्वात्काशीमरणमुक्तिबोधकवचसामर्थवादत्वं महापातकप्रयोजकत्वादविभावनीयमेवेत्यलम् ।

तोलयमं ॥ ३० ॥ विलासिनीनांरसनास्वनेनश्रुतिस्वरोब्राह्मणपुंगवानाम् ॥ शुचिस्वरत्वंगुरवोनिशम्यहास्यान्विताः सन्तिमुहुर्मुहुस्ताः ॥ ३१ ॥ व्रजत्सुयोपित्सुचतुःपथेषुपदान्यलक्तारुणितानिदृष्ट्वा ॥ ययौशशीविस्मयमेवयस्यांकिंस्वित्त्रयातास्थलपद्मनीयम् ॥ ३२ ॥ तुंगानियस्यांसुरमंदिराणिरुंधंतिचंद्रंरजनीमुखेषु ॥ दिवापिसूर्यंपवनान्विताभिर्दीर्घाभिरेवंसुपताकिकाभिः ॥ ३३ ॥ भृंगाश्चयस्यांशशिकांतभित्तौप्रलोभ्यमानाःप्रतिबिंबितेषु ॥ आलक्ष्ययोषिद्विमलाननाब्जेष्वायुर्भ्रमान्नैवचपुष्पकांतरम् ॥३४॥ परिश्रमश्चापिपराजितेषुनरेषुसंमोहनखेलनेन ॥ यस्यांजलक्रीडनसंगतासु नस्त्रीषुशंभोगृहदीर्घिकासु ॥ ३५ ॥ नचैवकश्चित्परमंदिराणिरुणद्धिशंभोसहमारुतेनम् ॥ नचाबलानांतरसापराक्रमंकरोतियस्यांसुरतंहिमुक्त्वा ॥ ३६ ॥ पाशग्रंथिर्गजेंद्राणांदानच्छेदोमदच्युतौ ॥ यस्यांमानमदौपुंसांकरिणां-

---

१ विलासिनीनां विलासवतीनां रसनानां काञ्चीनां स्वनेन ध्वनिना संमिश्र इत्यध्याहारः ब्राह्मणपुंगवानां ब्राह्मणश्रेष्ठाना पठतां श्रुतिस्वर श्रुतिपठनकालीनः शब्दः शुचिस्वरत्वं रमणीयशब्दत्वं प्राप्तस्तमध्यापकागुरवो निशम्य श्रुत्वा मुहुर्मुहुस्ताश्च विलासिनीर्वीक्ष्येत्यध्याहारः हास्यान्विता हास्ययुक्ताः सन्ति हास्यविशिष्टा भवन्तीत्यर्थ । एतेन वाराणस्यां पठनपाठनप्राचुर्यमन्यदेशापेक्षयेति सूचितम् । २ पवनान्विताभिः पवनलोलाभि सुपताकिकाभि. ध्वजैर्युक्तानिमन्दिराणिदिवादिवसेसूर्य रुन्धन्ति । काश्यां देवालयानां प्राचुर्येण तद्ध्वजैः सूर्योपिनावलोकयितुं शक्यत इतिभावः । ३ चन्द्रकान्तमणिमयभित्तिप्रतिबिम्बिते सुविमलरमणीमुखेषु सुरभिगन्धमालक्ष्य पर्यालोच्य पुष्पकान्तरं पुष्पमेव पुष्पकमन्यत्पुष्पकं पुष्पकान्तरं न ईयुर्नगता भृङ्गाभ्रमराइत्यर्थः इणधातोर्लिव्युसि रूपम् । ४ संमोहनार्थं परवञ्चनार्थं खेलनं क्रीडनं तेन पराजितेषु परिश्रमो नाध्ययनादिष्वित्यर्थः गृहदीर्घिकासु वापीषु जलक्रीडार्थं प्राप्तासु हे शंभो न परिश्रमो लक्ष्यते । ५ मारुतेन वायुनासह साकं परगृहाणि न कश्चिद्रुणद्धि केवलं वायुरेव गृहावरोधको न शत्रुतोवरोधादिकं तत्रेत्याशय । तरसावेगेन अबलानां विषये सुरतं मुक्त्वा सुरतं विहाय पराक्रममाक्रमणंकश्चिन्नकरोति । अबलाः सुरतसमये एव स्वस्वपतिभिराक्रम्यन्ते नान्यैः शत्रुभिरित्याशयः । ६ गजेन्द्राणां बन्धने इतिशेष. पाशग्रन्थिर्भवति पादबन्धनार्थं पाशग्रन्थिः क्रियते नतुचौरादिबन्धनेषु चौराभावादितिभाव । मदच्युतौ मदस्रवणे सति दानच्छेदो मदनाशोभवति न तु ब्राह्मणेषुयद्दानं वितरणं तस्य नाशोभवति किंतु सदादानादिक्रियास्तत्र प्रवर्तन्तइतिभाव पुंसां पुरुषाणां करिणांगजानां च यौवनागमे यौवनप्राप्तौ मानमदौस्तो नान्यत्र । अत्रत्याः सर्वेजना निरभिमाना निर्मदाश्चेतिभावः ।

यौवनागमे ॥ ३७ ॥ प्रियदोषाःसदायेषांकौशिकानेतरेजनाः ॥ तारागणेऽकुलीनत्वंमेघेवृत्तच्युतिर्विभो ॥ ३८ ॥
भूतिलुब्धाविलासिन्योभुजंगपरिवारिताः ॥ चंद्रभूषितदेहाश्चयस्यांत्वमिवशंकर ॥ ३९ ॥ ईदृशायांसुरेशानवाराण-
स्यांमदाश्रमे ॥ वसतेभगवान्लोलःसर्वपापहरोरविः ॥ ४० ॥ दशाश्वमेधंयत्प्रोक्तंमदंशोयत्रकेशवः ॥ तत्रगत्वासुर-
श्रेष्ठपापमोक्षमवाप्स्यसि ॥४१॥ इत्येवमुक्तोगरुडध्वजेनवृषध्वजस्तंशिरसाप्रणम्य ॥ जगामवेगाद्गरुडोयथाऽसौवारा-
णसींपापविमोचनाय ॥ ४२ ॥ गत्वासुपुण्यांनगरींसुतीर्थांदृष्ट्वाचलोलंसदशाश्वमेधं ॥ स्नात्वाचतीर्थेषुविमुक्तपापःसके-
शवंद्रष्टुमुपाजगाम ॥ ४३ ॥ केशवंशंकरोदृष्ट्वाप्रणिपत्येदमब्रवीत् ॥ त्वत्प्रसादाद्धृषीकेशत्वत्प्रसादात्क्षयंगता ॥४४॥
नेदंकपालंदेवेशमद्धस्तंपरिमुंचति ॥ कारणंवेद्मिनैवैतत्तन्मेत्वंवक्तुमर्हसि ॥ ४५ ॥ पुलस्त्यउवाच ॥ महादेववचःश्रु-
त्वाकेशवोवाक्यमब्रवीत् ॥ विद्यतेकारणंवत्सतत्सर्वंकथयामिते ॥४६॥ योऽसौममाग्रतोदिव्योह्रदःपद्मोत्पलैर्वृतः ॥ ए-
षतीर्थवरःपुण्योदेवगंधर्वपूजितः ॥ ४७ ॥ एतस्मिन्प्रवरेपुण्येस्नानंशोभनमाचर ॥ स्नातमात्रस्यचाद्यैवकपालंपरिमो-
क्ष्यति ॥ ४८ ॥ ततःकपालीलोकेचख्यातोरुद्रभविष्यसि ॥ कपालमोचनेत्येवंतीर्थंचेदंभविष्यति ॥ ४९ ॥ पुल-
स्त्यउवाच ॥ एवमुक्तःसुरेशेनकेशवेनमहेश्वरः ॥ कपालमोचनेसस्नौवेदोक्तविधिनामुने ॥ ५० ॥ स्नास्यततीर्थेत्रिपु-

१ कौशिका उलूकपक्षिविशेषाः प्रियादोषारात्रयो येषां तेषां दिवान्धतयारात्रिप्रियत्वमितरे जनाब्राह्मणादयो न प्रियद्दोषाः प्रियाः दोषा आमनादिदोषा येषां तथान-त्याशयः । तारागणे नक्षत्रसमुदाये कुः पृथ्वीतस्यामलीनत्वं सदातेषामाकाशस्थितत्वं मितिभावः । न तु जनानामकुलीनत्वं किंतु तत्रत्याः सर्वे एव कुलीनाइतिभावः । वृत्तात् स्वगोलात्च्युतिर्मेघेषु वृष्टयर्थं न तु तत्रत्यानां जनानां वृत्ताच्युत्तिर्भवति सर्वे स्वस्वधर्मनिरता इत्यर्थः । २ भूतिरैश्वर्यं लुब्धा ऐश्वर्येच्छावत्योवारविलासिन्योवारवध्वो नान्यं भुजगैर्विटैश्च परिवारिना युक्ताः चन्द्रैश्चन्द्रकान्तमणि भिस्तदाकाराभरणविशेषै भूषिता देहायासां तथाविधाः । त्वमिव त्वं यथ.भूतिषु भस्मसु लुब्धो भरमधमर. भुजङ्गैः सर्पैश्च वेष्टितश्चन्द्रेण सुधाकरेण भूपितदेहस्तद्वत्ता इत्यर्थः । यद्वामरणोत्तरं तत्रस्थानां जनानां सायुज्यमुक्त्या शिवस्वरूपत्वं वेश्याजनानामपि भवतीत्याशयः । ३ लोलनामागविः. लोलार्कः असीसंगमे प्रसिद्धः । ४ यत्र वरणासंगमे ।

रांतकस्यपरिच्युतंहस्ततलात्कपालम् ॥ नाम्नाबभूवाथकपालमोचनंतत्तीर्थवर्यंभगवत्प्रसादात् ॥ ५१ ॥ इतिश्रीवाम-
नपुराणेपुलस्त्यनारदसंवादेहरललितोनामतृतीयोऽध्यायः ॥
पुलस्त्यउवाच ॥ एवंकपालीसंजातोदेवर्षेभगवान्हरः ॥ अनेनकारणेनासौदक्षेणननिमंत्रितः ॥ १ ॥ एतस्मिन्नंतरेदे-
वींद्रष्टुंगौतमनंदनी ॥ जयाजगामशैलेंद्रंमंदरंचारुकंदरम् ॥ २ ॥ तामागतांसतींदृष्ट्वाजयामेकामुवाचह ॥
किमर्थंविजयानागाज्जयंतीचापराजिता ॥ ३ ॥ सादेव्यावचनंश्रुत्वाउवाचपरमेश्वरी ॥ गतानिमंत्रिताःस-
र्वामखेमातामहस्यताः ॥ ४ ॥ समंपित्रागौतमेनमात्राचैवाप्यहल्यया ॥ अहंसमागताद्रष्टुंत्वांतत्रगमनोत्सुका-
॥ ५ ॥ किंत्वंनव्रजसेतत्रतथादेवोमहेश्वरः ॥ नामंत्रितासितातेनउताहोस्विद्व्रजिष्यसि ॥ ६ ॥ गतास्तुऋषयःसर्वे-
ऋषिपत्न्यस्तथासुराः ॥ मातृष्वस्रःशशांकश्चसपत्नीकोगतःक्रतुम् ॥ ७ ॥ चतुर्दशसुलोकेषुजंतवोयेचराचराः ॥ निमं-
त्रिताःक्रतौसर्वेकिंवात्वंननिमंत्रिता ॥८॥ पुलस्त्यउवाच ॥ जयायास्तद्वचःश्रुत्वावज्रपातोपमंसती ॥ मन्युनाभिप्लुताब्र-
ह्मन्पंचत्वमगमत्तदा ॥ ९ ॥ जयामृतांसतींदृष्ट्वाक्रोधशोकपरिप्लुता ॥ मुंचतीवारिनेत्राभ्यांसुस्वरंविललापह ॥ १० ॥
आक्रंदितध्वनिंश्रुत्वाशूलपाणिस्त्रिलोचनः ॥ आःकिमेतदितीत्युक्त्वाजयाभ्याशमुपागतः ॥११॥ आगतोददृशेदेवींल-
तामिववनस्पतेः ॥ कृत्तांपरशुनाभूमौश्लथांगींपतितांसतीम् ॥ १२ ॥ देवींनिपतितांदृष्ट्वाजयांपप्रच्छशंकरः ॥ किमियंपति-
ताभूमौनिकृत्तेवलतासती ॥ १३ ॥ साशंकरवचःश्रुत्वाजयावचनमब्रवीत् ॥ श्रुत्वामखेचस्वावज्ञांभगिन्यःपतिभिःसह-
॥ १४ ॥ आदित्यास्त्रिषुलोकेषुसमंशक्रादिभिःसुरैः ॥ मातृष्वसाविपन्नेयमंतर्दुःखेनदह्यती ॥ १५ ॥ पुलस्त्यउवाच ॥

१ छिन्ना कर्ताछेदने । २ पतिभिः सार्कं भगिन्यो याताः शक्रादिभिः सुरैः साकमादित्यायाता इति स्वावज्ञां ज्ञाता भग्वे श्रुत्वेत्यन्वय ।

तच्छ्रुत्वाथवचोरौद्रंरुद्रःक्रोधाप्लुतोबभौ । क्रुद्धःस्यसर्वगात्रेभ्योनिश्चेरुःपावकार्चिषः ॥ १६ ॥ ततःक्रोधात्रिनेत्रस्यगात्र-
रोमोद्भवान्मुने ॥ गणाःसिंहमुखाजातावीरभद्रपुरोगमाः ॥ १७॥ गणैःपरिवृतस्तस्मान्मंदराद्धिमसाह्वयम् ॥ ततः
कनखलंतस्माद्यत्रदक्षोऽयजत्क्रतुम् ॥ १८ ॥ ततोगणानामधिपोवीरभद्रोमहाबलः ॥ दिशिप्रत्युत्तरायांचतस्थौशूल-
धरोमुने ॥ १९ ॥ जयाक्रोधाद्धदागृह्यपूर्वदक्षिणतःस्थिता ॥ मध्येत्रिशूलभृच्छर्वस्तस्थौक्रुद्धोमहाकृतौ ॥ २० ॥
मृगारिवदनंदृष्ट्वादेवाःशक्रपुरोगमाः ॥ ऋषयोदेवगंधर्वाःकिमिदंत्वित्यचिंतयन् ॥ २१ ॥ ततस्तुधनुरादायशराना-
शीविषोपमान् ॥ द्वारपालस्तदाधर्मोवीरभद्रमुपाद्रवत् ॥ २२ ॥ तमापतंतंसहसाधर्मंदृष्ट्वागणेश्वरः ॥ करेणैकेनजग्रा-
हत्रिशूलंवज्रसन्निभम् ॥ २३ ॥ कार्मुकंचद्वितीयेनतृतीयेनाथमार्गणान् ॥ चतुर्थेनगदांगृह्यधर्ममभ्यद्रवद्गणः ॥ २४ ॥
ततश्चतुर्भुजंदृष्ट्वाधर्मराजोगणेश्वरम् ॥ तस्थावष्टभुजोभूत्वानानायुधधरोऽव्ययः ॥ २५ ॥ खड्गचर्मगदाप्रासपरश्वध-
वरांकुशैः ॥ चापमार्गणभृत्तस्थौहंतुकामोगणेश्वरम् ॥ २६ ॥ गणेश्वरोपिसंक्रुद्धोहंतुंधर्मंसनातनम् ॥ ववर्षमार्गणां-
स्तीक्ष्णान्यथाप्रावृषितोयदः ॥ २७ ॥ तावन्योन्यंमहात्मानौशरचापधरौमुने ॥ रुधिरारुणसिक्तांगौकिंशुकाविवरे-
जतुः ॥ २८ ॥ मृधेवरास्त्रैर्गणनायकेनजितःसधर्मस्तरसाप्रसह्य ॥ पराङ्मुखोभूद्विमनामुनींद्रसवीरभद्रःप्रविवेशयज्ञम्
॥ २९ ॥ यज्ञवाटंप्रविष्टंतुवीरभद्रंगणेश्वरम् ॥ दृष्ट्वातुसहसादेवाउत्तस्थुःसायुधामुने ॥ ३० ॥ वसवोऽष्टौमहाभागाग्र-
हानसुदारुणाः ॥ इंद्राद्याद्वादशादित्याः रुद्रास्त्वेकादशैवहि ॥ ३१ ॥ विश्वेदेवाश्चसाध्याश्चसिद्धगंधर्वपन्नगाः यक्षाः

१ निष्क्राताः । २ ल्यपछान्दसः धृत्वेतिवापाठः । ३ ल्यबार्षः । ४ हंतुंकामः इच्छा यस्य । लुंपेदवश्यमः कृत्ये तुं काममनसोरपीति मलोपः । ५ मृधे युद्धे ।

किंपुरुषाभूताःखगाश्चक्रधरास्तथा ॥ ३२ ॥ नृपावैवस्वताद्वंशाद्विविधायेचविश्रुताः ॥ सोमवंशोद्भवाश्चान्येभोजकीर्तिमहीभुजः ॥३३॥ दितिजादानवाश्चान्येयेऽन्येतत्रसमागताः ॥ तेसर्वेऽप्यद्रवन्रौद्रंवीरभद्रमुदायुधाः ॥३४॥ तानापततएवाशुबाणचापधरोगणः ॥ अभिदुद्राववेगेनसर्वानेवशरोत्करैः ॥ ३५ ॥ तेशस्त्रवर्षमतुलंगणेशायसमुत्सृजन् ॥ गणेशोपिवरास्त्रैस्तांश्चिच्छेदचबिभेदच ॥ ३६ ॥ शरैःशस्त्रैश्चसततंवध्यमानामहात्मना ॥ वीरभद्रेणदेवाद्यास्त्ववहारमरोचयन् ॥ ३७ ॥ ततोविवेशगणपोयज्ञमध्यंसुविस्तृतम् ॥ जुह्वानाऋषयोयत्रहवींषिप्रतिबंधते ॥ ३८ ॥ ततोमहर्षयोदृष्ट्वामृगेंद्रवदनंगणम् ॥ भीताहोत्रंपरित्यज्यजग्मुःशरणमच्युतम् ॥३९॥ तानार्तांश्चक्रभृद्दृष्ट्वामहर्षींस्त्रस्तमानसान् ॥ नभेतव्यमितीत्युक्त्वासमुत्तस्थौवरायुधः ॥ ४० ॥ समानम्यततःशार्ङ्गंशरानाशीविषोपमान् ॥ मुमोचवीरभद्रायकायावरणदारणान् ॥ ४१ ॥ तेतस्यकायमासाद्यअमोघावैहरेःशराः ॥ निपेतुर्भुविभग्नाशानास्तिकादिवयाचकाः ॥ ४२ ॥ शरांस्त्वमोघान्मोघत्वमापन्नान्वीक्ष्यकेशवः ॥ दिव्यैरस्त्रैर्वीरभद्रंप्रच्छादयितुमुद्यतः ॥ ४३ ॥ तानस्त्रान्वासुदेवेनप्रक्षिप्तान्गणनायकः ॥ वारयामासशूलेनगदयामार्गणैस्तथा ॥ ४४ ॥ दृष्ट्वाविपन्नान्यस्त्राणिगदांचिक्षेपमाधवः ॥ त्रिशूलेनसमाहत्यपातयामासभूतले ॥४५॥ तांगदांविफलांदृष्ट्वालांगलंप्राक्षिपद्धरिः ॥ लांगलंचगणेशोऽपिगदयाप्रत्यवारयत् ॥ ४६ ॥ मुसलंवीरभद्रायसंचिक्षेपहलायुधः ॥ मुसलंसंहतंदृष्ट्वालांगलंचनिवारितम् ॥ वीरभद्रायचिक्षेपचक्रंक्रोधात्खगध्वजः ॥ ४७ ॥ तमापतंतंशतसूर्यकल्पंसुदर्शनंप्रेक्ष्यगणेश्वरस्तु ॥ शूलंपरित्यज्यजगारचक्रंयथा

---

१ विवस्वतः सूर्याद्भवाः सूर्यवंशजाः। २ भोजकीर्तिनामानोराजानः । ३ गणेश्वरायवीरभद्राय तमुद्दिश्येत्यर्थः। ४ तत्तद्देवतोद्देशेनत्यजन्तीत्यर्थ । ५ अडभाव आर्ष। ६ निगीर्णवान् यथा सुरेन्द्रः सुरश्रेष्ठो मत्स्यावतारवान् विष्णुर्मधुनामकं दैत्यं तद्वत् ।

मधुंमीनवपुःसुरेंद्रः ॥ ४८ ॥ चक्रेनिगीर्णैंगणनायकेनक्रोधातिरक्तोऽसितधारुनेत्रः ॥ मुरारिरभ्येत्यगणाधिपेंद्रमुत्क्षिप्य-
वेगाद्भुविनिष्पिपेष ॥ ४९ ॥ हरिबाहूरुवेगेनविनिष्पिष्टस्यभूतले ॥ सहितंरुधिरोद्गारैर्मुखाच्चक्रंविनिर्गतम् ॥ ५० ॥
ततोनिःसृतमालोक्यचक्रंकैटभनाशनः ॥ समादायहृषीकेशोवीरभद्रंमुमोचह ॥ ५१ ॥ हृषीकेशेनमुक्तस्तुवीरभद्रोजटा-
धरम् ॥ गत्वानिवेदयामासवासुदेवात्पराजयम् ॥ ५२ ॥ ततोजटाधरोदृष्ट्वागणेशंशोणिताप्लुतं ॥ निश्वसंतंयथानागं
क्रोधंचक्रेतदाव्ययः ॥ ततःक्रोधाभिभूतेनवीरभद्रोऽथशंभुना ॥ पूर्वाद्दिष्टेतदास्थानेसायुधस्तुनिवेशितः ॥ ५३ ॥ वी-
रभद्रमथादिश्यभद्रकालीचशंकरः ॥ विवेशक्रोधताम्राक्षोयज्ञवाटंत्रिशूलभृत् ॥ ५४ ॥ ततस्तुदेवप्रवरेजटाधरेत्रिशू-
लपाणौत्रिपुरांतकारिणि ॥ दक्षस्ययज्ञंविशतिक्षयंकरेजातोमुनीनांप्रवरोहिसाध्वसः ॥ ५५ ॥ इतिश्रीवामनपुराणेपुल-
स्त्यनारदसंवादेहरललितोनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुलस्त्यउवाच ॥ जटाधरंहरिर्दृष्ट्वाक्रोधादारक्तलोचनम् ॥ तस्मात्स्थानादपाक्रम्यकुब्जाम्रेंतर्हितःस्थितः ॥ १ ॥ वसवोऽष्टौह-
रंदृष्ट्वासस्रुपुर्वेगतोमुने ॥ सातुजातासरिच्छ्रेष्ठासीतानामसरस्वती ॥ २ ॥ एकादशतथारुद्रास्त्रिनेत्रावृषकेतनाः ॥ कां-
दिशीकालयंजग्मुःसमभ्येत्याथशंकरम् ॥ ३ ॥ विश्वेऽश्विनौचसाध्याश्चमरुतोऽनलभास्कराः ॥ समासाद्यपुरोडाशं
भक्षयंतोमहामुने ॥ ४ ॥ चंद्रःसमंऋक्षगणैर्निशांसमुपदर्शयन् ॥ उत्पत्यारुह्यगगनंस्वमधिष्ठानमास्थितः ॥ ५ ॥ क-
श्यपाद्याश्चऋषयोजपंतःशतरुद्रियम् ॥ पुष्पांजलिपुटाभूत्वाप्रणताःसंस्थितामुने ॥ ६ ॥ असकृद्दक्षदयितादृष्ट्वारुद्रं
बलाधिकं ॥ शक्रादीनांसुरेशानांकृपणंविललापह ॥ ७ ॥ ततःक्रोधाभिभूतेनशंकरेणमहात्मना ॥ तलप्रहारैरमराब-

१ भयेन पलायिताः कां दिशं यामइत्याहुर्येते तथोक्ताः । तदाहेतिमाशब्दादिभ्य उपसंख्यानमितिठक् । २ शतरुद्राः देवता यस्य तत्सूक्तम् ।

हवोविनिपातिताः ॥ ८ ॥ पादप्रहारैरपरेत्रिशूलेनापरेमुने ॥ दृष्ट्वाग्निनातथैवान्येदेवाद्याःप्रलयंगताः ॥ ९ ॥ ततःपूषाहरंवीक्ष्यविनिघ्नंतंसुरासुरान् ॥ क्रोधाद्बाहूप्रसार्याथप्रदुद्रावमहेश्वरम् ॥ १० ॥ तमापतंतंभगवान्संनिरीक्ष्यत्रिलोचनः ॥ बाहुभ्यांप्रतिजग्राहकरेणैकेनशंकरः ॥ ११ ॥ कराभ्यांप्रगृहीतस्यशंभुनांशुमतोऽपिहि ॥ करांगुलिभ्योनिश्चेरुरसृग्धाराःसमंततः ॥ १२ ॥ ततोवेगेनमहताअंशुमंतंदिवाकरम् ॥ भ्रामयामाससततंसिंहोमृगशिशुंयथा ॥ १३ ॥ भ्रामितस्यातिवेगेननारदांशुमतोपिहि ॥ भुजौह्रस्वत्वमापन्नौत्रुटितस्नायुबंधनौ ॥ १४ ॥ रुधिराप्लुतसर्वांगमंशुमंतंमहेश्वरः ॥ सन्निरीक्ष्योत्ससर्जैनमन्यतोभिजगामह ॥ १५ ॥ ततस्तुपूषाविहसन्दशनानिविदर्शयन् ॥ प्रोवाचैह्येहिकापालिन्पुनःपुनरपीश्वरम् ॥ १६ ॥ ततःक्रोधाभिभूतेनपूष्णोवेगेनशंभुना ॥ मुष्टिनाऽऽहत्यदशनाःपातिताधरणीतले ॥ १७ ॥ भग्नदंतस्तथापूषारुधिराभिप्लुताननः॥ पपातभुविनिःसंज्ञोवज्राहतइवाचलः ॥ १८ ॥ भगोऽपिवीक्ष्यपतितंपूषाणंरुधिरोक्षितम् ॥ नेत्राभ्यांघोररूपाभ्यांवृषभध्वजमैक्षत ॥ १९ ॥ त्रिपुरघ्नस्ततःक्रुद्धस्तलेनाहत्यचक्षुषी ॥ निपातयामासभुविक्षोभयन्सर्वदेवताः ॥ २० ॥ ततोदिवाकराःसर्वेपुरस्कृत्यशतक्रतुम् ॥ मरुद्भिश्चहुताशैश्चभयाज्जग्मुर्दिशोदश ॥२१॥ प्रतियातेषुदेवेषुप्रह्लादाद्यादितीश्वराः ॥नमस्कृत्यततःसर्वेतस्थुःप्रांजलयोमुने ॥२२॥ ततस्तंयज्ञवाटंतुशंकरोघोरचक्षुषा ॥ ददर्शदग्धुंकोपेनसर्वांश्चैवसुरासुरान् ॥ २३ ॥ ततोनिलिल्यिरेवीराःप्रणेमुर्दुद्रुवुस्तथा ॥ भयादन्येहरंदृष्ट्वागतावैवस्वतक्षयम् ॥ २४ ॥ ततोऽग्नयस्त्रिभिर्नेत्रैर्दुःसमंसमवैक्षत ॥ दृष्टमात्रास्त्रिनेत्रेणभस्मीभूताभवन्क्षणात् ॥ २५ ॥ अग्नौप्रणष्टेयज्ञोपिभूत्वादिव्यवपुर्मृगः ॥ दुद्रावविक्लवगतिर्दक्षिणासहितोऽबरे ॥ २६ ॥ तमे-

१ लीना गुप्ता जाता इत्यर्थः । २ यमसदनम् । ३ अभवन्निति च्छेदः । संधिरार्षः

वानुससारेशश्चापमानस्यवेगवान् ॥ शरंपाशुपतंकृत्वाकालरूपीमहेश्वरः॥ २७॥ अर्द्धेनयज्ञवाटांतेजटाधरइतिश्रुतः॥
अर्द्धेनगगनेशर्वःकालरूपीचकथ्यते ॥२८॥ नारदउवाच॥ कालरूपीत्वयाख्यातःशंभुर्गगनगोचरः ॥ लक्षणंचस्वरूपं
चसर्वंव्याख्यातुमर्हसि ॥ २९ ॥ पुलस्त्यउवाच ॥ स्वरूपंत्रिपुरघ्नस्यवदिष्येकालरूपिणः ॥ येनांबरंमुनिश्रेष्ठव्याप्तं
लोकहितेप्सुना ॥ ३० ॥ यत्राश्विनीचभरणीकृत्तिकायास्तथांशकः ॥ मेषोराशिःकुजक्षेत्रंतच्छिरःकालरूपिणः ॥३१॥
आग्नेयांशास्त्रयोब्रह्मन्प्राजापत्यंकवेर्गृहं ॥ सौम्यार्द्धंवृषनामेदंवदनंपरिकीर्त्तितम् ॥ ३२ ॥ मृगार्धमार्द्राऽदित्यांशास्त्र-
यःसौम्यगृहंत्विदम् ॥ मिथुनंभुजयोस्तस्यगगनस्थस्यशूलिनः ॥ ३३ ॥ आदित्यांशश्चपुष्यंचआश्लेषाशशिनोगृह-
म् ॥ राशिःकर्कटकोनामपार्श्वेमखविनाशिनः ॥ ३४ पित्र्यर्क्षंभगदैवत्यमुत्तरांशश्चकेसरी ॥ सूर्यक्षेत्रंविभोर्ब्रह्मन्हृदयं
परिगीयते ॥ ३५ ॥ उत्तरांशास्त्रयःपाणिश्चित्रार्द्धंकन्यकात्विदं॥ सोमपुत्रस्यसद्मैतद्द्वितीयंजठरंविभोः ॥ ३६ ॥ चि-
त्रांशद्वितयंस्वातिर्विशाखायांशकत्रयं ॥ द्वितीयंशुक्रसदनंतुलानाभिरुदाहृता ॥ ३७ ॥ विशाखांशमनुराधाज्येष्ठाभौ-
मगृहंत्विदम् ॥ द्वितीयंवृश्चिकोराशिर्मेढ्रंकालस्वरूपिणः ॥३८॥ मूलंपूर्वोत्तरांशश्चदेवाचार्यगृहंधनुः ॥ ऊर्वोर्युगलमीश-
स्यअपरार्द्धंप्रगीयते ॥ ३९ ॥ उत्तरांशास्त्रयश्चर्क्षंश्रवणंमकरोमुने ॥ धनिष्ठार्द्धंशनिक्षेत्रंजानुनीपरिकीर्त्तिते ॥ ४० ॥
धनिष्ठार्धंशतभिषाप्रोष्ठपादांशकत्रयं ॥ सौरेःसद्मापरमिदंकुंभोजंघेचविश्रुते ॥ ४१ ॥ प्रोष्ठपादांशमेकंतुउत्तरारेवती
तथा ॥ द्वितीयंजीवसदनंमीनस्तौचरणावुभौ ॥ ४२ ॥ एवंकृत्वाकालरूपंत्रिनेत्रोयज्ञंक्रोधान्मार्गणैराजघान ॥ विद्ध-
श्चासौवेदनाबुद्धिमुक्तःखेसंतस्थौतारकाभिश्चितांगः ॥ ४३ ॥ नारदउवाच ॥ राशयःकथिताब्रह्मंस्त्वयाद्वादशवैम-
म ॥ तेषांविस्तरतोब्रूहिलक्षणानिस्वरूपतः ॥ ४४ ॥ पुलस्त्यउवाच ॥ स्वरूपंतववक्ष्यामिराशीनांशृणुनारद ॥ या-

दृशायत्रसंचारायस्मिन्स्थानेवसंतिच ॥ ४५ ॥ संचरस्थानमेवास्यधान्यरत्नाकरादिषु ॥ नवशाड्वलसंछन्नवसुधायां
चसर्वशः ॥ ४६ ॥ नित्यंचरतिफुल्लेषुसरसांपुलिनेषुच ॥ मेषःसमानमूर्त्तिश्चअजाविकधनादिषु ॥ ४७ ॥ वृषःसदृश-
रूपेषुचरतेगोकुलादिषु ॥ तस्याधिवासभूमिस्तुकृषीवलधराश्रयः ॥ ४८ ॥ स्त्रीपुंसयोःसमंरूपंशय्यासनपरिग्रह-
म् ॥ वीणावाद्यधृङ्मिथुनंगीतनर्त्तनशिल्पिषु ॥ ४९ ॥ स्थितंक्रीडारतिर्नित्यंविहारंध्वनिकस्यतु ॥ मिथुनंनामविख्या-
तंराशिर्द्वंधात्मकःशिवः ॥ ५० ॥ कर्किःकुलीरेणसमःसलिलस्थःप्रकीर्त्तितः ॥ केदारवापीपुलिनविविक्तावनिरेवच
॥ ५१ ॥ सिंहस्तुपर्वतारण्यदुर्गकंदरभूमिषु ॥ वसतेव्याधपल्लीषुगह्वरेषुगुहासुच ॥ ५२ ॥ व्रीहिप्रदीपिककराभावारूढाच
कन्यका ॥ चरतेस्त्रीरतिस्थानेवसतेनड्वलेषुच ॥ ५३ ॥ तुलापाणिश्चपुरुषोवीथ्यापणविचारकः ॥ नगराध्वनिशाला-
सुवसतेतत्रनारद ॥ ५४ ॥ श्वभ्रवल्मीकसंचारीवृश्चिकोवृश्चिकाकृतिः ॥ विषगोमयकीटादिपाषाणादिषुसंस्थितः
॥ ५५ ॥ धनुस्तुरंगजघनोदीप्यमानोधनुर्धरः ॥ वाजिशूरास्त्रविद्वीरःस्थायीगजरथादिषु ॥ ५६ ॥ मृगास्योमकरो
नामवृषस्कंधेक्षणोगजः ॥ मकरोऽसौनदीचारीवसतेचमहोदधौ ॥ ५७ ॥ रिक्तकुंभश्चपुरुषःस्कंधचारीजलाप्लुतः ॥
द्यूतशालाचरःकुंभःस्थायीशौंडिकसद्मसु ॥ ५८ ॥ मीनद्वयमथासक्तंमीनस्तीर्थाब्धिसंचरः ॥ वसतेपुण्यदेशेषुदेवब्राह्म-
णसद्मसु ॥ ५९ ॥ लक्षणागदितास्तुभ्यंमेषादीनांमहामुने ॥ नकस्यचित्त्वयाख्येयंगुह्यमेतत्पुरातनम् ॥ ६० ॥
एतन्मयातेकथितंसुरर्षेयथात्रिनेत्रःप्रथमोथयज्ञम् ॥ पुण्यंपुराणंपरमंपवित्रमाख्यातवान्पापहरंशिवंच ॥ ६१ ॥ इति
श्रीवामनपुराणेहरललितोनामपंचमोध्यायः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥



॥ पुलस्त्यउवाच ॥ बह्वृचोब्राह्मणोयोसौधर्मोदिव्यवपुःसदा ॥ तस्यभार्यात्वहिंसाचतस्यामजनयत्सुतान् ॥ १ ॥ ह-
रिंकृष्णंचदेवर्षेनरनारायणौतथा ॥ योगाभ्यासरतौनित्यंहरिकृष्णौबभूवतुः ॥ २ ॥ नरनारायणौचैवजगतोहितकाम्य-
या ॥ तप्येतांचतपःसौम्यौपुराणऋषिसत्तमौ ॥३॥ प्रालेयाद्रिंसमागम्यतीर्थेबदरिकाश्रमे ॥ गृणंतौतत्परंब्रह्मन्गंगाया
विपुलेतटे ॥ ४ ॥ नरनारायणाभ्यांचजगदेतच्चराचरम् तापितंतपसाब्रह्मन्संक्षोभंपरमंययौ ॥ ५ ॥ संक्षुब्धस्तपसा
ताभ्यांक्षोभणायशतक्रतुः ॥ रंभामप्सरसांश्रेष्ठांप्रेषयत्समहाश्रमम् ॥ ६ ॥ कंदर्पश्चसुदुर्धर्षश्चूतांकुरमहायुधः ॥ स-
मंसहचरेणैववसंतेनाशुसंगतः ॥ ७ ॥ ततोमाधवकंदर्पौसाचैवाप्सरसांवरा ॥ बदर्याश्रममागम्यविचिक्रीडुर्यथेच्छया
॥ ८ ॥ ततोवसंतेसंप्राप्तेकिंशुकाज्ज्वलनप्रभाः ॥ निष्पत्राःसततंरेजुःशोभयंतोधरातलम् ॥ ९ ॥ शिशिरंनाममातंगंवि-
दार्यनखरैरिव ॥ वसंतःकेसरीप्राप्तः पलाशकुसुमैर्मुने ॥ १० ॥ मयातुषारैश्चकरीनिर्जितःस्वेनतेजसा ॥ तमेवमहस-
ल्लोघ्रैर्वसंतःकुंदकुड्मलैः ॥ ११ ॥ वनानिकर्णिकाराणांपुष्पितानिविरेजिरे ॥ यथानरेंद्र[2]पत्राणिकनकाभरणानिवै
॥१२॥ तेषामनुतथानीपाःकिंकराइवरेजिरे ॥ स्वामिसंलब्धसंमानाभृत्याराजसुताइव ॥ १३ ॥ रक्ताशोकवनौभांति
पुष्पिताःसहसोज्ज्वलाः ॥ भृत्यावसंतनृपतेःसंग्रामासृक्क्षताइव ॥१४॥ भृंगवृंदापिंजरिताराजंतेगहनेवने ॥ पुलका-
भिवृतायद्वत्सज्जनाःसुहृदागमे ॥ १५ ॥ मंजरीभिर्विराजंतेनदीकूलेषुवेतसाः ॥ वक्तुकामाइवांगुल्याकोऽस्माकंसदृ-
शोनगः ॥ १६ ॥ रक्ताशोककरातन्वीदेवर्षेकिंशुकांघ्रिका ॥ नीलाशोककचश्यामाविकासिकमलानना ॥ १७ ॥
नीलेंदीवरनेत्राचब्रह्मन्बिल्वफलस्तनी ॥ प्रोत्फुल्लकुंददशनामंजरीकरशोभिता ॥ १८ ॥ बंधुजीवाधराशुभ्रासिंदुवार-

१ स्तुवन्तावित्यर्थः । २ नरेंद्राणां राज्ञां पत्राणि वाहनानि गजादीनि । ३ पुंस्त्वमार्षम् ।

नवांकुरा ॥ पुंस्कोकिलस्वनादिव्याकंकोलवसनाशुभा ॥ १९ ॥ बर्हिवृंदकलापाचसारसस्वरनूपुरा ॥ प्राग्वंशर-
सनाब्रह्मन्मत्तहंसगतिस्तथा ॥ २० ॥ पुत्रजीवांशुकासंगरोमराजिविराजिता ॥ वसंतलक्ष्मीःसंप्राप्तातस्मिन्बदरि-
काश्रमे ॥ २१ ॥ ततोनारायणोदृष्ट्वाआश्रमस्यानवद्यताम् ॥ समीक्ष्यसदिशःसर्वास्ततोऽनंगमपश्यत ॥ २२ ॥ ना-
रदउवाच ॥ कोऽसावनंगोब्रह्मर्षेतस्मिन्बदरिकाश्रमे ॥ यंददर्शजगन्नाथोदेवोनारायणोऽव्ययः ॥ २३ ॥ पुलस्त्यउ-
वाच ॥ कंदर्पोहर्षतनयोयोऽसौकामोनिगद्यते ॥ सशंकरेणसंदग्धोह्यनंगत्वमुपागतः ॥ २४ ॥ नारदउवाच ॥ कि-
मर्थंकामदेवोसौदेवदेवेनशंभुना ॥ दग्धश्चकारणेकस्मिन्नेतद्व्याख्यातुमर्हसि ॥ २५ ॥ पुलस्त्यउवाच ॥ यदाद-
क्षसुताब्रह्मन्सतीयातायमक्षयं ॥ विनाश्यदक्षयज्ञंतंविचचारत्रिलोचनः ॥ २६ ॥ ततोवृषध्वजंदृष्ट्वाकंदर्पःकुसुमायुधः ॥
अपत्नीकंतदास्त्रेणउन्मादेनाभ्यताडयत् ॥ २७ ॥ ततोहरःशरेणाथउन्मादेनाशुताडितः ॥ विचचारततोन्मत्तःकान-
नानिसरांसिच ॥ २८ ॥ स्मरन्सतींमहादेवस्तथोन्मादेनताडितः ॥ नशर्मलेभेदेवर्षेबाणविद्धइवाद्विपः ॥ २९ ॥ त-
तःपपातदेवेशःकालिंदीसरितंमुने ॥ निमग्नेशंकरेचापोदग्धाःकृष्णत्वमागताः ॥ ३० ॥ तदाप्रभृतिकालिंद्याभृंगांजन-
निभंजलं ॥ आस्यंदत्पुण्यतीर्थासाकेशपाशइवावनेः ॥ ३१ ॥ ततोनदीषुपुण्यासुसरस्सुचसरित्सुच ॥ पुलिनेषुचर-
म्येषुवापीषुनलिनीषुच ॥ ३२ ॥ पर्वतेषुचरम्येषुकाननेषुचसानुषु ॥ विचरन्स्वेच्छयानैवशर्मलेभेमहेश्वरः ॥ ३३ ॥
क्षणंगायतिदेवर्षेक्षणंरोदितिशंकरः ॥ क्षणंध्यायतितन्वंगींदक्षकन्यांमनोरमां ॥ ३४ ॥ ध्यात्वाक्षणंस्वपितिचक्षणं
स्वप्नायतेहरः ॥ स्वप्नेतथेदंगदतिदृष्ट्वादक्षस्यकन्यकां ॥ ३५ ॥ निर्घृणेतिष्ठकिंमूढेत्यजसेमामनिंदिते ॥ मुग्धेत्वयावि‍र-

१ संधिरार्षः २ परस्मैपदमार्षम् ३ आत्मनेपदमार्षम् ।

हितोदग्धोस्मिमदनाग्निना ॥ ३६ ॥ सत्यंप्रकुपितादेविमाकोपंकुरुसुंदरि ॥ पादप्रणामावनतमभिभापितुमर्हसि ॥ ३७ ॥ श्रूयसेदृश्यसेनित्यंस्पृश्यसेवंद्यसेप्रिये ॥ आलिंग्यसेचसततंकिमर्थंनाभिभापसे ॥ ३८ ॥ विपलपंतंजनं दृष्ट्वाकृपाकस्यनजायते ॥ विशेषतःपतिंबालेननुत्वमतिनिर्घृणा ॥ ३९ ॥ त्वयोक्तानिवचांस्येवंपूर्वंममकृशोदरि ॥ त्वयाविनानजीवेयंतदसत्यंत्वयाकृतम् ॥ ४० ॥ एह्येहिकामसंतप्तंपरिष्वजसुलोचने ॥ नान्यथानश्यतेतापःसत्येनापि शपेप्रिये ॥ ४१ ॥ इत्थंविलप्यस्वप्नांतेप्रतिबुद्धस्तुतत्क्षणात् ॥ उत्कूजतितथारण्येमुक्तकंठंपुनःपुनः ॥ ४२ ॥ तंकूजमानंविलपंतमारात्समीक्ष्यकामोवृषकेतनंहि ॥ विव्याधचापंतरसाविनाम्यसंतापनाम्नासुशरेणभूयः ॥ ४३ ॥ संतापनास्त्रेणतदासविद्धोभूयःससंतप्ततरोबभूव ॥ संतापयंश्चापिजगत्समस्तंफूत्कृत्यफूत्कृत्यविवाशतेस्म ॥ ४४ ॥ तंचापिभूयोमदनोजघानविजृंभणास्त्रेणततोविजृंभे ॥ ततोभृशंकामशरैर्वितुन्नोविजृंभमाणःपरितोभ्रमंश्च ॥ ४५ ॥ ददर्शयक्षाधिपतेस्तनूजंपांचालिकंनामजगत्प्रधानम् ॥ दृष्ट्वात्रिनेत्रोधनदस्यपुत्रंपार्श्वंसमभ्येत्यवचोबभाषे॥भ्रातृव्यवक्ष्यामिवचोयदद्यतत्त्वंकुरुष्वामितविक्रमोसि ॥ ४६ ॥ पांचालिकउवाच ॥ यन्नाथमांवक्ष्यसितत्करिष्येसुदुष्करंयद्यपिदेवसंघैः ॥ आज्ञापयस्वातुलवीर्यशंभोदासोस्मितेभक्तियुतस्तथेश ॥ ४७ ॥ ईश्वरउवाच ॥ नाशंगतायांवरदांबिकायांकामाग्निनाप्लुष्टसुविग्रहोस्मि ॥ विजृंभणोन्मादशरैर्विभिन्नोधृतिंनविंदामिरतिंसुखंच ॥ ४८ ॥ विजृंभणंपुत्रतथैवतापमुन्मादमुग्रंमदनप्रणुन्नं[1] ॥ नान्यःपुमान्धारयितुंहिशक्तोमुक्त्वाभवंतांहिततःप्रतीच्छ ॥ ४९ ॥ पुलस्त्यउवाच ॥ इत्येवमुक्तोवृषभध्वजेनयक्षःप्रतीच्छन्सविजृंभणादीन् ॥ तोषंजगामाशुततस्त्रिशूलीतुष्टस्तदेवंवचनंबभाषे ॥ ५० ॥ हर

१ मदनेन कामेन प्रणुन्नं प्रेरितम् ।

उवाच ॥ यस्मात्त्वयापुत्रसुदुर्धराणिविजृंभणादीनिप्रतीच्छितानि ॥ तस्माद्वरंत्वांप्रतिपूजनायदास्यामिलोकस्यचदा-
स्यकारी ॥ ५१ ॥ यस्त्वांयदापश्यतिचैत्रमासेस्पृशेन्नरोवार्चयतेचभक्त्या ॥ वृद्धोऽथबालोऽथयुवाथयोषित्सर्वेतदोन्मा-
दधराभवंति ॥ ५२ ॥ गायंतिनृत्यंतिरमंतियक्षवाद्यानियत्नादपिवादयंति ॥ तवाग्रतोहास्यवचोऽभिरक्ताभवंतितेयो-
गयुतास्तुतेस्युः ॥ ५३ ॥ ममैवनाम्नाभवितासिपुज्यःपांचालिकेशःप्रथितःपृथिव्याम् ॥ ममप्रसादाद्वरदोनराणांभ-
विष्यसेपूज्यतमोभिगच्छ ॥ ५४ ॥ इत्येवमुक्तोविभुनासयक्षोजगामदेशान्सहसैवसर्वान् ॥ कालंजरस्योत्तरतःसुपु-
ण्योदेशोहिमाद्रेरपिदक्षिणस्थः ॥ ५५ ॥ तस्मिन्सुपुण्येविषयेनिविष्टोरुद्रप्रसादादपिपूज्यतेऽसौ ॥ तस्मिन्प्रयातेभग-
वांस्त्रिनेत्रोदेवोपिविंध्यंगिरिमभ्यगच्छत् ॥ ५६ ॥ तत्रापिमदनोगत्वाददर्शवृषकेतनम् ॥ दृष्ट्वाप्रहर्त्तुकामश्चततःप्रा-
दुद्रुवेहरः ॥ ५७ ॥ ततोदारुवनंघोरंमदनाभिसृतोहरः ॥ विवेशऋषयोयत्रसपत्नीकाव्यवस्थिताः ॥ ५८ ॥ तेचापि
ऋषयःसर्वेदृष्ट्वामूर्ध्नानताभवन् ॥ ततस्तान्प्राहभगवान्भिक्षामेप्रतिदीयताम् ॥५९॥ ततस्तेमौनिनस्तस्थुः सर्वएवमह-
र्षयः ॥ तदाश्रमाणिपुण्यानिपरिचक्रामनारद ॥ ६० ॥ तंप्रविष्टंतदादृष्ट्वाभार्गवात्रेययोषितः ॥ प्रक्षोभमगमन्सर्वाही-
नसत्त्वाःसमंततः ॥ ६१ ॥ ऋतेत्वरुंधतीमेकामनसूयांचभामिनीम् ॥ एतयोभर्तृपूजासुतच्चित्तासुस्थितंमनः ॥ ६२ ॥
ततःसंक्षोभिताःसर्वायत्रायातिमहेश्वरः ॥ तत्रप्रयांतिकामार्त्तामदविह्वलितेंद्रियाः ॥ ६३ ॥ त्यक्त्वाश्रमाणिशून्या-
निस्वानितामुनियोषितः ॥ अनुजग्मुर्यथामत्तंकरिण्यइवकुंजरम् ॥ ६४ ॥ ततस्तुऋषयोदृष्ट्वाभार्गवांगिरसोमुने ॥ क्रोधा-
न्वितोब्रुवन्सर्वेलिंगमापततांभुवि ॥ ६५ ॥ ततःपपातदेवस्यलिंगंपृथ्वींविदारयत् ॥ अंतर्द्धानंजगामाथत्रिशूलीनीललो-

१ संधिरार्पः । २ संधिरार्षः ।

हितः ॥ ६६ ॥ ततस्तत्पतितंलिंगंविभेद्यवसुधातलम् ॥ रसातलंविवेशाथब्रह्मांडेचोर्ध्वतोभिनत् ॥ ६७ ॥ ततश्चचालपृथि-
वीगिरयःसरितोनगाः ॥ पातालभुवनाःसर्वेजंगमाजंगमाश्रिताः ॥ ६८ ॥ संक्षुब्धान्भुवनान्दृष्ट्वाभूर्लोकादीन्पिता-
महः ॥ जगाममाधवंद्रष्टुंक्षीरोदंनामसागरम् ॥ ६९ ॥ तत्रदृष्ट्वाहृषीकेशंप्रणिपत्यचभक्तितः ॥ उवाचदेवभुवनाःकिम-
र्थंक्षुभिताविभो ॥ ७० ॥ अथोवाचहरिर्ब्रह्मन्शार्वोलिंगोमहर्षिभिः ॥ पातितस्तस्यभारार्तासंचचालवसुंधरा
॥ ७१ ॥ ततस्तदद्भुततमंश्रुत्वादेवःपितामहः ॥ तत्रगच्छामदेवेशएवमाहपुनःपुनः ॥ ७२ ॥ ततःपितामहो
देवःकेशवश्चजगत्पतिः ॥ आजग्मतुस्तमुद्देशंयत्रलिंगंभवस्यतत् ॥ ७३ ॥ ततोऽनंतंहरिर्लिंगंदृष्ट्वारुह्यखगेश्व-
रम् ॥ पातालंप्रविवेशाथविस्मयांतरितोविभुः ॥ ७४ ॥ ब्रह्मापद्मविमानेनऊर्ध्वमाक्रम्यसर्वतः ॥ नैवांतमलभद्ब्र
ह्माविस्मितःपुनरागतः ॥ ७५ ॥ विष्णुर्गत्वाथपातालान्सप्तलोकपरायणः ॥ चक्रपाणिर्विनिष्क्रांतोलेभेऽतंनमहामुने
॥ ७६ ॥ विष्णुःपितामहश्चोभौहरलिंगंसमेत्यह ॥ कृतांजलिपुटौभूत्वास्तोत्रंदेवौप्रचक्रतुः ॥ ७७ ॥ हरिब्रह्माणावू-
चतुः ॥ नमोस्तुतेशूलपाणेनमोस्तुवृषभध्वज ॥ जीमूतवाहनकवेशर्वत्र्यंबकशंकर ॥ ७८ ॥ महेश्वरमहेशानसुवर्णाक्षवृ-
षाकपे ॥ दक्षयज्ञक्षयकरकालरूपनमोस्तुते ॥ ७९ ॥ त्वमादिरस्यजगतस्त्वंमध्यंपरमेश्वर ॥ भवानंतश्चभगवान्सर्व-
गस्त्वंनमोस्तुते ॥ ८० ॥ पुलस्त्यउवाच ॥ एवंसंस्तूयमानस्तुतस्मिन्दारुवनेहरः ॥ स्वरूपीताविदंवाक्यमुवाचवदतांवरः ॥ ८१ ॥
हरउवाच ॥ किमर्थंदेवतानाथौपरिभूतक्रमंत्विह[1] ॥ मांस्तुवातेभृशा[2]स्वस्थंकामतापितविग्रहम् ॥ ८२ ॥ देवावूचतुः ॥
भवतःपातितंलिंगंयदेतद्भुविशंकर ॥ एतत्प्रगृह्यतांभूयःअतोदेववदावहे ॥ ८३ ॥ हरउवाच ॥ यद्यर्चयंतित्रिदशाम-

१ परिभूतः त्यक्तः क्रमो मर्यादा येन तम् । २ भृशं निरन्तरमस्वस्थं संजापयुक्तम् ।

मलिंगंसुरोत्तमौ ॥ तदेतत्प्रतिगृह्णीयांनान्यथेतिकथंचन ॥ ८४ ॥ ततःप्रोवाचभगवानेवमस्त्वितिकेशवः ॥ ब्रह्मास्व-यंचजग्राहलिंगंकनकपिंगलम् ॥ ८५ ॥ ततश्चकारभगवांश्चातुर्वर्ण्यंहरार्चने ॥ शास्त्राणिचैषांमुख्यानिनानोक्तिविदि-तानिच ॥ ८६ ॥ आद्यंशैवंपरिख्यातमन्यत्पाशुपतंमुने ॥ तृतीयंकालदमनंचतुर्थंचकपालिकम् ॥ ८७ ॥ शिवश्चासी-त्स्वयंशक्तिर्वसिष्ठस्यप्रियःसुतः॥तस्यशिष्योबभूवाथगोपायनइतिश्रुतः ॥८८॥ महापाशुपतश्चासीद्भरद्वाजस्तपोधनः॥ तस्यशिष्योप्यभूद्राजाऋषभःसोमकेश्वरः ॥ ८९ ॥ कालास्योभगवानासीदापस्तंबस्तपोधनः ॥ तस्यशिष्योब-भूवाथनाम्नाक्राथेश्वरोमुने ॥ ९० ॥ महाव्रतीचधनदस्तस्यशिष्यश्चवीर्यवान् ॥ अर्णोदरइतिख्यातोजात्याशूद्रोमहात पाः ॥ ९१ ॥ एवंसभगवान्ब्रह्मापूजनायशिवस्यतत् ॥ कृत्वातुचातुराश्रम्यंस्वमेवभुवनंगतः ॥ ९२ ॥ गतेब्रह्मणि-शर्वोपिउपसंहृत्यतत्तदा ॥ लिंगंचित्रवनेसूक्ष्मंप्रतिष्ठाप्यचचारह ॥ ९३ ॥ विचरंतंतदाभूयोमहेशंकुसुमायुधः ॥ आरा-त्स्थित्वाग्रतोधन्वीसंतापयितुमुद्यतः ॥ ९४ ॥ ततस्तमग्रतोदृष्ट्वाक्रोधाध्मातदृशाहरः ॥स्मरमालोकयामासशिखाग्राच-रणांतिकम् ॥ ९५ ॥ आलोकितस्त्रिनेत्रेणमदनोद्युतिमानपि ॥ प्रादह्यततदाब्रह्मन्पादादाराभ्यकक्षवत् ॥ ९६ ॥ प्रदह्यमानौचरणौदृष्ट्वासौकुसुमायुधः ॥ उत्ससर्जधनुःश्रेष्ठंतज्जगामाथपंचधा ॥९७॥ यदासीन्मुष्टिबंधेतद्रुक्मपृष्ठंमहा-प्रभम् ॥ सचम्पकतरुर्जातःसुगंधाढ्योमहाद्युतिः ॥ ९८ ॥ नाभिस्थानंशुभाकारंयदासीद्वज्रभूषितम् ॥ तज्जातंकेस-रारण्यंबकुलंनामतोमुने ॥ ९९ ॥ याचकोटीशुभाह्यासीदिंद्रनीलविभूषिता ॥ जातासापाटलारम्याभृंगराजिविभूषि-ता ॥ १०० ॥ नाहोपरितथामुष्टौस्थानंचंद्रमणिप्रभम् ॥ पंचगुल्माभवज्जातीशशांककिरणोज्ज्वला ॥ १०१ ॥ ऊर्द्ध्व

१ नानोक्तैरनेकोक्तिभिर्विदितानिप्रसिद्धानि । २ चातुर्वर्ण्यादित्वात्ष्यञ् । ३ चित्रनाम्निअरण्ये । ४ कक्ष:शुष्कतृणम्

मुष्ट्याअधःकोट्योःस्थानंविद्रुमभूषितम् ॥ तस्माद्बहुपटामल्लीसंजाताविविधामुने ॥ १०२ ॥ पुष्पोपगानिरम्याणि
सुरभीणिचनारद ॥ जातियुक्तानिदेवेनस्वयमाचरितानिच ॥ १०३ ॥ मुमोचमार्गणान्रम्यान्शरीरेदह्यतिस्मरः ॥ फ-
लोपगानिवृक्षाणिसंभूतानिसहस्त्रशः ॥१०४॥ चूतादीनिसुगंधीनिस्वादूनिविविधानिच ॥ हरप्रसादाज्जातानिभोज्या-
न्यपिसुरोत्तमैः ॥ १०५ ॥ एवंदग्ध्वास्मरंरुद्रःसंयम्यस्वतनुंविभुः ॥ पुण्यार्थीशिशिराद्रिंसजगामतपसेऽव्ययः ॥१०६॥
एवंपुरादेववरेणशंभुनाकामस्तुदग्धः सशरःसचापः ॥ ततस्त्वनंगेतिमहाधनुर्द्धरोदेवैस्तुतोदेववरैस्तुपूजितः ॥ १०७ ॥
इतिश्रीवामनपुराणेपुलस्त्यनारदसंवादेवामनप्रादुर्भावेकामदाहोनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥
पुलस्त्यउवाच ॥ ततोऽनंगंविभुर्दृष्ट्वाब्रह्मन्नारायणोमुनिः ॥ विहस्यैवंवचःश्रुत्वाकंदर्पइहआस्यतां ॥१॥ तदक्षुब्धत्वमी-
क्ष्यास्यकामोविस्मयमागतः ॥ वसंतोपिमहाचिंतांजगामाशुमहामुने ॥ २ ॥ ततश्चाप्सरसोदृष्ट्वास्वागतेनाभिपूज्यच ॥
वसंतमाहभगवानेह्येहिस्थीयतामितः[1] ॥ ३ ॥ ततोविहस्यभगवान्मंजरींकुसुमावृताम् ॥ आदायप्राक्सुवर्णांगीमूर्वो-
र्बालांविनिर्म्ममे ॥ ४ ॥ ऊरूद्भवांसकंदर्पोदृष्ट्वासर्वांगसुंदरीम् ॥ अमन्यततदानंगःकिमियंसाप्रियारतिः ॥ ५ ॥ तदेव
वदनंचारुस्वक्षिभ्रूकुटिलालकम् ॥ सुनासावंशाधरोष्ठमालोकनपरायणम् ॥६॥ तावेवाहार्यविरलौपीवरौमग्नचूचुकौ ॥
राजेतेऽस्याः[4]कुचौपीनौसज्जनाविवसंहतौ ॥ ७ ॥ तदेवतनुचार्वंग्यावलित्रयविभूषितम् ॥ उदरंराजतेश्लक्ष्णंरोमावलिवि-
भूषितम् ॥ ८ ॥ रोमावलीचजघनाद्यातिस्तनतटद्वयम् ॥ राजतेभृंगमालेवपुलिनात्कमलाकरम् ॥ ९ ॥ जघनंत्व-
तिविस्तीर्णंभात्यस्यारसनावृतं ॥ क्षीरोदमथनेनद्धंभुंजगेनेवमंदरम् ॥ १० ॥ कदलीस्तंभसदृशैरूर्ध्वमूलैरथोरुभिः ॥

१ अत्र तृजन्तत्वमार्षम् २ अत्रेत्यर्थः सार्वविभक्तिकस्तसिः । ३ ऊर्वोर्मध्ये प्राक् प्रागग्रमादाय सुवर्णसदृशाङ्गीं बालां निर्मितवान् इत्यर्थः ४ सन्धिरार्षः

१२

विभातिसासुचार्वंगीपद्मकिंजल्कसन्निभा ॥ ११ ॥ जानुनीगूढगुल्फेचशुभेजंघेत्वरोमशे ॥ विभात्यस्यास्तथापादाव-
लक्तकसमत्विषौ ॥ १२ ॥ इतिसंचिंतयन्कामस्तामनिंदितलोचनां ॥ कामातुरोसौसंजातःकिमुतान्योजनोमुने ॥१३॥
माधवोप्युर्वशींदृष्ट्वासंचिंतयतिनारद ॥ किंस्वित्कामनरेंद्रस्यराजधानीस्वयंस्थिता ॥ १४ ॥ अज्ञाताशशिनोनूनमियं
कांतिर्निशाक्षये ॥ रविरश्मिप्रतापार्तिभीताशरणमागता ॥ १५ ॥ इत्थंसंचिंतयन्नेवअवष्टभ्याप्सरोगणम् ॥ तस्थौ
मुनिरिवध्यानमास्थितःसतुमाधवः ॥ १६ ॥ ततःसविस्मितान्सर्वान्कंदर्पादीन्महामुने ॥ दृष्ट्वाप्रोवाचवचनंस्मितंकृत्वा
शुभव्रतः ॥ १७ ॥ इयंममोरुसंभूताकामाप्सरसमाधवी ॥ नीयतांसुरलोकायदीयतांवासवायच ॥ १८ ॥ इत्युक्ताःकं-
पमानास्तेजग्मुर्गृह्योर्वशींदिवम् ॥ सहस्राक्षायतेप्रोचूरूपयौवनशालिनीं ॥ १९ ॥ आचक्षुश्चरितंताभ्यांधर्मज्ञाभ्यांम-
हामुने ॥ देवराजायकामाद्यास्ततोभूद्विस्मयःपरं ॥ २० ॥ एतादृशंहिचरितंख्यातिमध्यंजगामह ॥ पातालेपुतथाम-
र्त्यांदिक्ष्वष्टासुजगामच ॥ २१ ॥ एकदान्धिहतेरौद्रेहिरण्यकशिपौमुने ॥ अभिषिक्तस्तदाराज्येप्रह्लादोनामदानवः
॥ २२ ॥ तस्मिन्शासतिदैत्येंद्रेदेवब्राह्मणपूजके ॥ मखान्भूम्यांनृपतयोयजंतेविधिवत्तदा ॥ २३ ॥ ब्राह्मणाश्चतपो
धर्मंतीर्थयात्रांचकुर्वते ॥ वैश्याश्चपशुवृत्तिस्थाःशूद्राःशुश्रूपणेरताः ॥ २४ ॥ चातुर्वर्ण्यंततस्तस्थावाश्रमेधर्मकर्मणि ॥
अवर्तततततोदेवावृत्त्यायुक्ताभवन्मुने ॥ २५ ॥ ततस्तुच्यवनोनामभार्गवेंद्रोमहातपाः ॥ जगामनर्मदांस्नातुंतीर्थंवैनाकु-
लेश्वरं ॥ २६ ॥ तत्रदृष्ट्वामहादेवंनदींस्नातुमवातरत् ॥ अवतीर्णंप्रजग्राहनागःकेकरलोहितः ॥ २७ ॥ गृहीतस्तेन
नागेनसस्मारमनसाहरिम् ॥ संस्मृतेपुंडरीकाक्षेनिर्विषोभून्महोरगः ॥ २८ ॥ नीतस्तेनातिरौद्रेणपन्नगेन

१ कामरूपिणो महाराजस्य ।

रसातलम् ॥ निर्विषश्चापितत्याजच्यवनंभुजगोत्तमः ॥ २९ ॥ संत्यक्तमात्रोनागेनच्यवनोभार्गवोत्तमः ॥ चचारनागकन्याभिःपूज्यमानःसमंततः ॥ ३० ॥ विचरन्प्रविवेशाथदानवानांमहत्पुरम् ॥ संपूज्यमानोदैत्यें-द्रैःप्रह्लादोथददर्शतम् ॥ ३१ ॥ भृगुपुत्रोमहातेजाःपूजांचक्रेयथार्हतः ॥ संपूजितोपविष्टश्चपृष्टश्चानामयंप्रति ॥ ३२ ॥ सचोवाचमहातेजामहातीर्थंमहाफलं ॥ स्नातुमेवागतोस्म्यद्यद्रष्टुंवैनाकुलेश्वरं ॥ ३३ ॥ नद्यामेवावतीर्णोस्मिगृहीत-श्चाहिनाबलात् ॥ समानीतोऽस्मिपातालेदृष्टश्चात्रभवानपि ॥ ३४ एतच्छ्रुत्वाचवचनंच्यवनस्यदितीश्वरः ॥ प्रोवाचध-र्मसंयुक्तंसवाक्यंवाक्यकोविदः ॥ ३५ ॥ प्रह्लादउवाच ॥ भगवन्कानितीर्थानिपृथिव्यांकानिचांबरे ॥ रसातलेचकानि स्युरेतद्वक्तुंत्वमर्हसि ॥ ३६ ॥ च्यवनउवाच ॥ पृथिव्यांनैमिषंतीर्थमंतरिक्षेचपुष्करम् ॥ चक्रतीर्थंमहाबाहोरसातलसृं-तंविदुः ॥३७॥ पुलस्त्यउवाच ॥ श्रुत्वातद्भार्गववचोदैत्यराजोमहामुने ॥ नैमिषंगंतुकामोभूद्दानवानिदमब्रवीत् ॥३८॥ प्रल्हादउवाच ॥ उत्तिष्ठध्वंगमिष्यामःस्नातुंतीर्थंहिनैमिषं ॥ द्रक्ष्यामःपुंडरीकाक्षंपीतवाससमच्युतं ॥ ३९ ॥ पुलस्त्य उवाच ॥ इत्युक्तादानवेंद्रेणसर्वेतेदैत्यदानवाः ॥ चक्रुरुद्योगमतुलंनिर्जग्मुश्चरसातलात् ॥ ४० ॥ तेसमभ्येत्यदैतेया दानवाश्चमहाबलाः ॥ नैमिषारण्यमागम्यस्नानंचक्रुर्मुदान्विताः ॥ ४१ ॥ ततोदितीश्वरःश्रीमान्मृगयांसचचारह ॥ चरन्सरस्वतींपुण्यांददर्शविमलोदकाम् ॥ ४२ ॥ तस्यादूरेमहाशाखंसालवृक्षंशरैश्चितम् ॥ ददर्शबाणानपरान्मुखेल-ग्नान्परस्परम् ॥ ४३ ॥ ततस्तानद्भुताकारान्बाणान्नागोपवीतकान् ॥ दृष्ट्वाऽतुलंतदाचक्रेक्रोधंदैत्येश्वरःकिल ॥ ४४ ॥ सददर्शततोदूरात्कृष्णाजिनधरौमुनी ॥ समुन्नतजटाभारौतपस्यासक्तमानसौ ॥ ४५ ॥ तयोश्चपार्श्वयोर्दिव्येधनुषी लक्षणान्विते ॥ शार्ङ्गमाजगवंचैवअक्षय्यौचमहेषुधी ॥४६॥ तौदृष्ट्वामन्यततदादांभिकाविितिदानवः ॥ ततःप्रोवाचवचनंता-

वुभौपुरुषोत्तमौ ॥ ४७ ॥ किंभवद्भ्यांसमारब्धोदंभोधर्मविनाशनः ॥ कृतपःकृजटाभारःकृचेमौप्रवरायुधौ ॥ ४८ ॥ अ-
थोवाचनरोदैत्यंकांतेचिंतादितीश्वर ॥ सामर्थ्येसतियत्कुर्यात्तत्संपद्येततस्यहि ॥ ४९ ॥ अथोवाचदितीशस्तौकाशक्ति-
र्युवयोरिह ॥ मयितिष्ठतिदैत्येंद्रेधर्मसेतुप्रवर्त्तके ॥ ५० ॥ नरस्तंप्रत्युवाचाथआवाभ्यांशक्तिरूर्जिता ॥ नकश्चिच्छक्नु-
याज्जेतुंनरनारायणौयुधि ॥ ५१ ॥ दैत्येश्वरस्ततःक्रुद्धःप्रतिज्ञामारुरोहच ॥ यथाकथंचिज्जेष्यामिनरनारायणौरणे
॥५२॥ इत्येवमुक्त्वावचनंमहात्मादितीश्वरःस्थाप्यबलंवनांते ॥ वितत्यचापंगुणमाविकृष्यतलध्वनिंघोरतरंचकार ॥५३॥
ततोनरस्त्वाजगवंहिचापमानम्यबाणान्सुबहून्सिताग्रान् ॥ मुमोचतानप्रतिमैःपृषत्कैश्चिच्छेददैत्यस्तपनीयपुंखैः ॥५४॥
छिन्नान्समीक्ष्याथनरःपृषत्कान्दैत्येश्वरेणाप्रतिमेनसंख्ये ॥ क्रुद्धःसमानम्यमहाधनुस्ततोमुमोचचान्यान्विविधान्पृष-
त्कान् ॥५५॥ एकंनरोद्वौदितिजेश्वरश्चत्रीन्धर्मसूनुःश्चतुरोदितीशः ॥ नरस्तुबाणान्प्रमुमोचपंचःपड्दैत्यनाथोनिशिता-
न्पृषत्कान् ॥ ५६ ॥ सचर्षिमुख्योद्विचतुश्चदैत्यानरस्तुषट्त्रीणिचदैत्यमुख्ये ॥ षट्सप्तचाष्टौनवपन्नरेणाद्विसप्ततिंदै-
त्यपतिःससर्ज्ज ॥ ५७ ॥ शतंनरस्त्रीणिशतानिदैत्यःषट्धर्मपुत्रोदशदैत्यराजः ॥ ततोथसंख्येयतरान्हिबाणान्मुमो-
चतुस्तौसुभृशंहिकोपात् ॥ ५८ ॥ ततोनरोबाणगणैरसंख्यैरवास्तरद्भूमिमथोदिशःखं ॥ सचापिदैत्यप्रवरःपृषत्कैश्चि-
च्छेदवेगात्तपनीयपुंखैः ॥ ५९ ॥ ततःपतत्रिभिर्वीरौसुभृशंनरदानवौ ॥ तदावरास्त्रैर्युयुधातेघोररूपैःपरस्परम् ॥ ६० ॥
ततस्तुदैत्येनवरास्त्रपाणिनाचापेनियुक्तंतुपितामहास्त्रं॥ नरस्तुचापेपरमायुधेपुनर्युयोजनारायणमस्त्रमुग्रम्॥६१॥महेश्वरा-
स्त्रंपुरुषोत्तमेनसमंसमाहत्यनिपेततुस्तौ ॥ ६२ ॥ ब्रह्मास्त्रेतुप्रशमितेप्रल्हादःक्रोधमूर्छितः ॥ गदांप्रगृह्यतरसाप्रचस्कं-

१ बलं सैन्यम् ।

दरथोत्तमात् ॥ ६३ ॥ गदापाणिंसमायांतंदैत्यंनारायणस्तदा ॥ दृष्ट्वातत्पृष्ठतश्चक्रेनरंयोद्धुमनाःस्वयम् ॥ ६४ ॥ ततोदितीशःसगदःसमाद्रवत्सशार्ङ्गबाणंतपसांनिधानम् ॥ ख्यातंपुराणर्षिमुदारविक्रमंनारायणंनारदलोकपालम् ॥६५॥

इतिश्रीवामनपुराणेप्रल्हादयुद्धंनामसप्तमोऽध्यायः ॥ ७॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुलस्त्यउवाच ॥ शार्ङ्गपाणिनमायांतंदृष्ट्वाग्रेदानवेश्वरः ॥ परिभ्राम्यगदांवेगान्मूर्ध्निसाध्यमताडयत् ॥ १ ॥ ताडितस्याथगदयाधर्मपुत्रस्यनारद॥ नेत्राभ्यामपतद्वारिवह्निवर्षनिभंभुवि ॥ २ ॥ मूर्ध्निनारायणस्यापिसागदादानवार्पिता ॥ जगामशतधाब्रह्मन्शैलशृंगेयथाशनिः ॥ ३ ॥ ततोनिवृत्यदैत्येंद्रःसमास्थायरथंद्रुतम् ॥ आदायकार्मुकंवीरस्तूणाद्बाणंसमाददे ॥ ४ ॥ आनम्यचापंवेगेनगार्ध्रपत्रान्शिलीमुखान् ॥ मुमोचसाध्यायतदाक्रोधांधीकृतमानसः ॥ ५ ॥ तानापततएवाशुबाणांश्चंद्रार्द्धसन्निभान् ॥ चिच्छेदबाणैरपरैर्निर्बिभेदचदानवम् ॥ ६ ॥ ततोनारायणंदैत्योदैत्यंनारायणःशरैः ॥ आविध्येतांतदान्योन्यंमर्मभिद्भिरजिह्मगैः[1] ॥ ७ ॥ ततोऽबरेसंनिपातो[2]देवानामभवन्मुने ॥ दिदृक्षूणांतदा युद्धंलघुचित्रंचसुष्ठुच ॥ ८ ॥ ततःसुराणांदुंदुभ्यःस्ववाद्यंतमहास्वनाः ॥ पुष्पवर्षमनौपम्यंमुमुचुःसाध्यदैत्ययोः ॥ ९ ॥ ततःपश्यत्सुदैत्येषुगगनस्थेषुतावुभौ ॥ अयुध्येतांमहेष्वासौप्रेक्षकप्रीतिवर्द्धनं ॥ १० ॥ बबंधतुस्तदाकाशंतावुभौशरवृष्टिभिः ॥ दिशश्चविदिशश्चैवछादयेतांशरोत्करैः ॥ ११ ॥ ततोनारायणश्चापंसमाकृष्यमहामुने ॥ बिभेदमार्गणैस्तीक्ष्णैःप्रह्लादंसर्वमर्मसु ॥ १२ ॥ तदादैत्येश्वरःक्रुद्धश्चापमानम्यवेगवान् ॥ बिभेदहृदयेबाह्वोर्वदनेचनरोत्तमम् ॥१३॥ ततोस्यतोदैत्यपतेःकार्मुकंमुष्टिबंधनात् ॥ चिच्छेदैकेनबाणेनचंद्रार्धाकारवर्चसा ॥ १४ ॥ अपश्यतधनुश्छिन्नंचापमा-

१ अजिह्मगैः बाणैः । २ सान्निपातः समुदायः ।

दायचापरम् ॥ अधिज्यंलाघवात्कृत्वाववर्षनिशितान्शरान् ॥ १५ ॥ तानप्यस्यशरान्साध्यश्छित्वाबाणैरवाकिरत् ॥ कार्मुकंचक्षुरप्रेणचिच्छेदपुरुषोत्तमः ॥ १६ ॥ छिन्नंछिन्नंधनुर्दैत्यस्त्वन्यदन्यत्समाददे ॥ समादत्तंतदासाध्योमुनेश्चिच्छेदलाघवात् ॥ १७ ॥ संछिन्नेष्वथचापेषुजग्राहादितिजेश्वरः ॥ परिघंदारुणंदीर्घंसर्वलोहमयंदृढं ॥ १८ ॥ परिगृह्याथपरिघंभ्रामयामासदानवः ॥ भ्राम्यमाणंसचिच्छेदनाराचेनमहामुने ॥ १९ ॥ छिन्नेतुपरिघेश्रीमान्प्रह्लादोदानवेश्वरः ॥ मुद्गरंभ्राम्यवेगेनप्रचिक्षेपनरोत्तमे ॥ २० ॥ तमापतंतंबलवान्मार्गणैर्दशभिर्मुने ॥ चिच्छेददशधासाध्यःसच्छिन्नोन्यपतद्भुवि ॥ २१ ॥ मुद्गरेवितथेजातेपाशमादायवेगवान् ॥ प्रचिक्षेपनराग्रायतंचचिच्छेदधर्मजः ॥ २२ ॥ पाशेछिन्नेततोदैत्यःशक्तिमादायचिक्षिपे ॥ तांचचिच्छेदबलवान्क्षुरप्रेणमहातपाः ॥ २३ ॥ छिन्नेषुतेषुशस्त्रेषुदानवोन्यन्महद्धनुः ॥ समादायततोबाणैरवतस्तारनारद ॥ २४ ॥ ततोनारायणोदेवोदैत्यनाथंजगद्गुरुः ॥ नाराचेनाजघानाथहृदयेऽसुरतापनः ॥ २५ ॥ सभिन्नहृदयोब्रह्मन्देवेनाद्भुतकर्मणा ॥ निपपातरथोपस्थेतमपोवाह[1]सारथिः ॥ २६ ॥ ससंज्ञांतुचिरेणैवप्रतिलभ्यदितीश्वरः ॥ सुदृढंचापमादायभूयोयोद्धुमुपागतः ॥ २७ ॥ तमागतंसंनिरीक्ष्यप्रत्युवाचनराग्रजः ॥ गच्छदैत्येंद्रयोत्स्यामःप्रातस्त्वाह्निकमाचर ॥ २८ ॥ एवमुक्तोदितीशस्तुसाध्येनाद्भुतकर्मणा ॥ जगामनैमिषारण्यंक्रियांचक्रेतदाह्निकीम् ॥ २९ ॥ एवंयुध्यतिदेवेचप्रह्लादोथास्मरन्मुने ॥ रात्रौचिंतयतेयुद्धेकथंजेष्यामिदांभिकम् ॥ ३० ॥ एवंनारायणेनासौसहायुध्यतनारद ॥ दिव्यंवर्षसहस्रंतुदैत्योदेवंनचाजयत् ॥ ३१ ॥ ततोवर्षसहस्रांतेह्यजितेपुरुषोत्तमे ॥ पीतवाससमभ्येत्यदानवो

१ अपोवाह युद्धपराङ्मुखं कृतवान् ।

वाक्यमब्रवीत् ॥ ३२ ॥ किमर्थंदेवदेवेशसाध्यंनारायणंहरिम् ॥ विजेतुंनाऽद्यशक्नोमिएतन्मेकारणंवद ॥३३॥ पीतवा-
साउवाच ॥ दुर्जयोऽसौमहाबाहुस्त्वयाप्रल्हादधर्मजः ॥ साध्योविप्रवरोधीमान्मृधेदेवासुरैरपि ॥३४॥ प्रल्हादउवाच ॥
यद्यसौदुर्जयोदेवमयासाध्योरणाजिरे ॥ तत्कथंयत्प्रतिज्ञातंतदसत्यंभविष्यति ॥ ३५ ॥ हीनप्रतिज्ञोदेवेशकथंजीवेत
मादृशः ॥ तस्मात्तवाग्रतोविष्णोकरिष्येकायशोषणम् ॥ ३६ ॥ पुलस्त्यउवाच ॥ इत्येवमुक्त्वावचनंदेवाग्रेदानवेश्वरः ॥ शि-
रःस्नातस्तदातस्थौगृणन्ब्रह्मसनातनम् ॥३७॥ ततोदैत्यपतिंविष्णुंपीतवासाऽब्रवीद्वचः ॥ गच्छजेष्यसिभक्त्यातंनयुद्धे
नकदाचन ॥३८॥ प्रल्हादउवाच ॥ असौयद्यजयोदेवत्रैलोक्येष्वपिसुव्रत ॥ नस्थातुंत्वत्प्रसादेनशक्यंकिमुतरोपतः॥३९॥
मयाजितंदेवदेवत्रैलोक्यमपिसुव्रत ॥ जितोयंत्वत्प्रसादेनशक्रःकिमुतधर्मजः ॥ ४० ॥ पीतवासाउवाच ॥ सोऽहंदानव
शार्दूललोकानामनुकंपया ॥ धर्मप्रवर्त्तनार्थायतपश्चर्यांसमास्थितः ॥ ४१ ॥ तस्माद्यदीच्छसिजयंतमाराधयदानव ॥
तंपराजेष्यसेभक्त्यातस्माच्छुश्रूषधर्मजम् ॥४२॥ पुलस्त्यउवाच ॥ इत्युक्तःपीतवस्त्रेणदानवेंद्रोमहात्मना ॥ अब्रवीद्वचनंहृ-
ष्टःसमाहूयांधकंमुने ॥ ४३ ॥ प्रल्हादउवाच ॥ दैत्याश्चदानवाश्चैवपरिपाल्यास्त्वयांधक ॥ मयोत्सृष्टमिदंराज्यंप्रतीच्छ
त्वंमहीभुज ॥ ४४ ॥ इत्येवमुक्तोजग्राहराज्यंहैरण्यलोचनः ॥ प्रल्हादोपितदागच्छन्पुण्यंबदरिकाश्रमम् ॥ ४५ ॥
दृष्ट्वानारायणंदेवंनरंचदितिजेश्वरः ॥ कृतांजलिपुटोभूत्वाववंदेचरणौतयोः ॥ ४६ ॥ तमुवाचमहातेजावाक्यंनारायणो-
ऽव्ययः ॥ किमर्थंप्रणतोसीहमामजित्वामहासुर ॥ ४७ ॥ प्रल्हादउवाच ॥ कस्त्वांजेतुंप्रभोशक्तःकस्त्वत्तःपुरुषोऽ-
धिकः ॥ त्वंहिनारायणोऽनंतःपीतवासाजनार्दनः ॥ ४८ ॥ त्वंदेवःपुंडरीकाक्षस्त्वंविष्णुःशार्ङ्गचापधृक् ॥ त्वमव्ययोमहे-

१ संधिरार्षः ।

शानःशाश्वतःपुरुषोत्तमः ॥ ४९ ॥ त्वांयोगिनश्चिंतयंतिचार्चयंतिमनीषिणः ॥ जपंतिस्नातकास्त्वांचयजंतित्वांचयाज्ञि-
काः ॥ ५० ॥ त्वमच्युतोहृषीकेशश्चक्रपाणिर्धराधरः ॥ महामीनोहयशिरास्त्वमेववरकच्छपः ॥ ५१ ॥ हिरण्याक्ष-
रिपुःश्रीमान्भगवान्कार्यसूकरः ॥ मत्पितुर्नाशमकरोर्भगवानपिकेसरी ॥५२॥ ब्रह्मात्रिनेत्रोऽमरराड्हुताशःप्रेताधिपो-
नीरपतिःसमीरः ॥ सूर्योमृगांकोचलजंगमाद्योभवान्विभोनाथखगेंद्रकेतो ॥ ५३ ॥ त्वंपृथ्वीज्योतिराकाशजलंभूत्वा-
सहस्रशः ॥ त्वयाव्याप्तंजगत्सर्वंकस्त्वांजेष्यतिमाधव ॥ ५४ ॥ भक्त्यायदिहृषीकेशतोषमेतिजगद्गुरो ॥ नान्यथा
त्वंप्रशक्योसिजेतुंसर्वगताव्ययः ॥ ५५ ॥ भगवानुवाच ॥ परितुष्टोस्मितेदैत्यस्तवेनानेनसुव्रत ॥ भक्त्यात्वनन्य-
याचाहंत्वयादैत्यपराजितः ॥ ५६ ॥ पराजितश्चपुरुषोदैत्यदंडंप्रयच्छति ॥ दंडार्थंतेप्रयास्यामिवरंवृणुयमि-
च्छसि ॥ ५७ ॥ प्रल्हादउवाच ॥ नारायणवरंयाचेयत्त्वंमेदातुमर्हसि ॥ तन्मेपापंलयंयातुशारीरंमानसंत-
था ॥ ५८ ॥ वाचिकंचजगन्नाथयत्त्वयासहयुध्यतः ॥ नरेणयद्वाप्यभवद्वरमेनंप्रयच्छमे ॥ ५९ ॥ नारायणउवाच ॥
एवंभवतुदैत्येंद्रपापंतेयातुसंक्षयं ॥ द्वितीयंप्रार्थयवरंतंददामितवासुर ॥ ६० ॥ प्रल्हादउवाच ॥ यायाजायतमेबुद्धिः
सासाविष्णोत्वदाश्रिता ॥ देवार्चनेचनिरतात्वच्चित्तात्वत्परायणा ॥ ६१ ॥ नारायणउवाच ॥ एवंभविष्यत्यसुरवरमन्यं
यमिच्छसि ॥ तंवृणीष्वमहाबाहोप्रदास्याम्यविचारयन् ॥ ६२ ॥ प्रल्हादउवाच ॥ सर्वमेवमयालब्धंत्वत्प्रसादादधो-
क्षज ॥ त्वत्पादपंकजाभ्यांहिख्यातिरस्तुसदामम ॥ ६३ ॥ नारायणउवाच ॥ एवमस्त्वपरंचास्तुनित्यमेवाक्षयोऽव्ययः ॥
अजरश्चामरश्चापिमत्प्रसादाद्भविष्यसि ॥ ६४ ॥ गच्छत्वंदैत्यशार्दूलस्वमावासंक्रियारतः ॥ नकर्मबंधोभवतोमच्चित्त-

१ खगेन्द्रोगरुडःकेतौध्वजेयस्यसः ।

६

स्यभविष्यति ॥ ६५ ॥ प्रशासयदमून्दैत्यान्राज्यंपालयशाश्वतं ॥ स्वजातिसदृशंदैत्यकुरुधर्ममनुत्तमम् ॥ ६६ ॥
पुलस्त्यउवाच ॥ इत्युक्तोलोकनाथेनप्रल्हादोदेवमब्रवीत् ॥ कथंराज्यंसमादास्येपरित्यक्तंजगद्गुरो ॥ ६७ ॥ तमु-
वाचजगत्स्वामीगच्छत्वंनिजमाश्रमम् ॥ हितोपदेष्टादैत्यानांदानवानांतथाभव ॥ ६८ ॥ नारायणेनैवमुक्तःसतदादै-
त्यनायकः ॥ प्रणिपत्यविभुंतुष्टोजगामनगरंनिजम् ॥ ६९ ॥ दृष्टःसभाजितश्चापिदानवैरंधकेनच ॥ निमंत्रितश्चरा-
ज्यायनप्रत्यैच्छत्सनारद ॥ ७० ॥ राज्यंपरित्यज्यमहासुरेंद्रोन्ययोजयत्सत्पथिदानवेंद्रान् ॥ ध्यायन्स्मरन्केशवमप्रमे-
यंतस्थौतदायोगविशुद्धदेहः ॥ ७१ ॥ एवंपुरानारददानवेंद्रोनारायणेनोत्तमपूरुषेण ॥ पराजितश्चापिविमुच्यराज्यं
तस्थौमनोधातरिसन्निवेश्य ॥ ७२ ॥ इतिश्रीवामनपुराणेप्रल्हादवरप्रदानोनामाष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥
नारदउवाच॥नेत्रहीनःकथंराज्येप्रल्हादेनांधकोमुने॥अभिषिक्तोजानतापिराजधर्मंसनातनम्॥१॥पुलस्त्यउवाच॥लब्धच-
क्षुरसौभूयोहिरण्याक्षेपिजीवति ॥ ततोऽभिषिक्तोदैत्येनप्रल्हादेननिजेपदे ॥ २ ॥ नारदउवाच ॥ सचराज्येभिषिक्तस्तु
किमाचरतसुव्रत ॥ देवादिभिःसहकथंसमास्तेतद्वदाशुमे ॥३॥ पुलस्त्यउवाच ॥ राज्येऽभिषिक्तोदैत्येंद्रोहिरण्याक्षस्तदां-
धकः ॥ तपसाराध्यदेवेशंशूलपाणिंत्रिलोचनम् ॥ ४ ॥ अजेयत्वमवध्यत्वंसुरसिद्धर्षिपन्नगैः ॥ अदाह्यत्वंहुताशेनअक्ले-
द्यत्वंजलेनच ॥ ५ ॥ एवंसवरलब्धस्तुदैत्योराज्यमपालयत् ॥ शुक्रंपुरोहितंकृत्वासमाध्यास्तेततोऽधकः ॥ ६ ॥ तत-
श्चक्रेसमुद्योगंदेवानामंधकोऽसुरः ॥ आक्रम्यवसुधांसर्वान्मनुजेंद्रान्पराजयत् ॥ ७ ॥ पराजित्यमहीपालान्सहाया-
र्थेनियोज्यच ॥ ततस्तुमेरुशिखरंजगामाद्भुतदर्शनम् ॥ ८ ॥ शक्रोपिसुरसैन्यानिसमुद्योज्यमहागजम् ॥ समारुह्याम-
रावत्यांगुप्तिंकृत्वापुनर्ययौ ॥९॥ शक्रस्यानुतथैवान्येलोकपालामहौजसः॥आरुह्यवाहनंस्वंस्वंस्वायुधानियुर्बहिः॥१०॥

देवसेनापिचसमंशक्रेणाद्भुतकर्मणा ॥ निर्जगामातिवेगेनगजवाजिरथादिभिः ॥ ११ ॥ अग्रतोद्वादशादित्याःपृष्ठतश्च
त्रिलोचनः ॥ मध्येऽष्टौवसवोविश्वेसाध्याश्विमरुतांगणैः ॥ १२ ॥ यक्षविद्याधराद्याश्चस्वंस्वंवाहनमास्थिताः ॥ नारद
उवाच ॥ रुद्रादीनांवदस्वेहवाहनानिचसर्वशः ॥ १३ ॥ एकैकस्यापिधर्मज्ञपरंकौतूहलंमम ॥ पुलस्त्यउवाच ॥ शृणु-
ष्वकथयिष्यामिसर्वेषामपिनारद ॥ १४ ॥ वाहनानिसमासेनएकैकस्यानुपूर्वशः ॥ दनुहस्ततलोत्पन्नंमहासत्त्वंमहागजम्
॥ १५ ॥ श्वेतवर्णंमहावीर्यंदेवराजस्यवाहनम् ॥ रुद्रौजःसंभवंभीमंकृष्णवर्णंमनोजवम् ॥ १६ ॥ पौंड्रकंनाममहिषं
धर्मराजस्यनारद ॥ रुद्रकर्णमलोद्भूतंश्यामंजलधिसंज्ञकम् ॥ १७ ॥ शिशुमारंदिव्यगतिंवाहनंवरुणस्यच ॥ रौद्रंश-
कटचक्राक्षंशैलाकारंनरोत्तमम् ॥ १८ ॥ अंबिकापादसंभूतंवाहनंधनदस्यतु ॥ एकादशानांरुद्राणांवाहनानिमहामुने
॥ १९ ॥ गंधर्वाश्चमहावीर्याभुजगेंद्राःसुदारुणाः ॥ श्वेतानिसौरभेयाणिवृषाण्युग्रजवानिच ॥ २० ॥ रथंचंद्रमसश्चा-
र्द्धसहस्रंहंसवाहनम् ॥ हयोष्ट्ररथवाहाश्चआदित्यामुनिसत्तम ॥ २१ ॥ कुंजरस्थाश्चवसवोयक्षाश्चनरवाहनाः ॥ कि-
न्नराभुजगारूढाहयारूढौतथाश्विनौ॥२२॥सारंगाधिष्ठिताब्रह्मन्मरुतोघोरदर्शनाः॥ शुकारूढाश्चकवयोगंधर्वाश्चपदाति-
नः ॥२३॥ आरुह्यवाहनान्येवंस्वानिस्वान्यमरोत्तमाः ॥ संनद्धानिर्ययुर्हृष्टायुद्धायसुमहौजसः ॥२४॥ नारदउवाच॥ ग-
दितानिसुरादीनांवाहनानित्वयामुने ॥ दैत्यानांवाहनान्येवयथावद्वक्तुमर्हसि ॥२५॥ पुलस्त्यउवाच ॥ शृणुष्वदानवादीनां
वाहनानिद्विजोत्तम ॥ कथयिष्यामितत्त्वेनयथावच्छ्रोतुमर्हसि ॥ २६ ॥ अंधकस्यरथोदिव्योयुक्तःपरमवाजिभिः ॥ कृ-
ष्णवर्णःसहस्रारस्त्रिनल्वपरिमाणवान् ॥ २७ ॥ प्रह्लादस्यरथोदिव्यश्चंद्रवर्णैर्हयोत्तमैः ॥ उह्यमानस्तथाष्टाभिःश्वेतरु-
क्ममयःशुभः ॥ २८ ॥ विरोचनस्यचगजःकुजंभस्यतुरंगमः ॥ जंभस्यतुरथोदिव्योहयैःकांचनसन्निभैः ॥२९॥ शंकुक-

र्णस्यतुरगोहयग्रीवस्यकुंजरः ॥ १रथोमयस्यविख्यातोदुंदुभेश्चमहोरगः ॥ ३० ॥ शंबरस्यविमानोभूदयःशंकोर्मृगाधिपः
बलिवृतौचबलिनौगदामुसलधारिणौ ॥ ३१ ॥ पद्भ्यांदैवतसैन्यानिअभिद्रवितुमुद्यतौ ॥ ततोरणेभूत्तुमुलःसंकुलो-
तिभयंकरः ॥ ३२ ॥ रजसासंवृतोलोकोपिंगवर्णेननारद ॥ नाज्ञासीच्चपितापुत्रंनपुत्रःपितरंतथा ॥ ३३ ॥ स्वानेवा-
न्येनिजघ्नुर्वैपरानन्येचसुव्रत ॥ अभिद्रुतोमहावेगोरथोपरिरथस्तदा ॥३४॥ गजोमत्तगजेंद्रंचसादीसादिनमन्वगात् ॥ प-
दातिरपिसंक्रुद्धःपदातिनमथोल्बणम् ॥ ३५ ॥ परस्परंचप्रत्यघ्नन्नन्योन्यजयकांक्षिणः ॥ ततस्तुसंकुलेतस्मिन्युद्धेदेवा-
सुरेमुने ॥ ३६ ॥ प्रावर्त्ततनदीघोराशमयंतीरणेरजः ॥ असृक्तोयारथावर्त्तायोधसंघट्टवाहिनी ॥ ३७ ॥ गजकुं-
भमहाकूर्माशरमीनादुरत्यया ॥ तीव्राग्रप्रासमकरामहासिग्राहवाहिनी ॥३८॥ अंत्रशेवालसंकीर्णापताकाफेनमालिनी ॥
गृध्रकंकमहाहंसाश्येनचक्राह्वमंडिता ॥३९॥ वरवायसकादंबागोमायुश्वापदाकुला ॥ पिशाचमुनिसंकीर्णादुस्तराप्राकृ-
तैर्जनैः ॥४०॥ रथप्लवैःसंतरंतःशूरास्तांप्रजगाहिरे॥आगुल्फादवमज्जंतःसूदयंतःपरस्परम्॥समुत्तरंतोवेगेनयोधाजयधने-
प्सवः॥४१॥ततस्तुरौद्रेसुरदैत्यसादनेमहाहवेभीरुभयंकरेऽथ॥रक्षांसियक्षाश्चसुसंप्रहृष्टाःपिशाचयूथास्त्वभिरेमिरेच॥४२॥
पिबंत्यसृग्गाढतरंभटानामालिंग्यमांसानिचभक्षयंति ॥ वसांविलुंपंतिचविस्फुरंतिगर्जंत्यथान्योन्यमथोवयांसि२॥ ४३ ॥
मुंचंतिफेत्काररवान्शिवाश्चक्रंदंतियोधाभुविवेदनार्त्ताः ॥ शस्त्रप्रतप्तानिपिबंतिचान्येयुद्धंश्मशानप्रतिमंबभूव ॥ ४४ ॥ त-
स्मिन्शिवाघोरतरेप्रवृत्तेसुरासुराणांसुभयंकरेहि ॥ युद्धंबभौप्राणपणोपविद्धंद्वंद्वेतिशास्त्रज्ञगतंदुरोदरम् ॥ ४५॥ हिर-
ण्यचक्षोस्तनयोरणेंधकोरथेस्थितोवाजिसहस्त्रयोजिते ॥ मत्तेभपृष्ठस्थितमुग्रतेजसंसमेयिवान्देवपतिंशतक्रतुम् ॥४६॥

१ अताडयन्नित्यर्थः। २ वयांसि-पक्षिणः।

समापतंतंमहिषाधिरूढंयमंप्रतीच्छन्बलवान्दितीशः ॥ प्रल्हादनामातुरगाष्टयुक्तंरथंसमास्थायसमुद्यतास्त्रः ॥ ४७ ॥
विरोचनश्चापिजलेश्वरंत्वगात्जंभस्त्वथागाद्धनदंबलाढ्यम् ॥ वायुंसमभ्याच्छतसंचरोथमयोहुताशंयुयुधेमुनींद्र ॥४८॥
अन्येहयग्रीवमुखामहाबलादितेस्तनूजादनुपुंगवाश्च ॥ सुरान्हुताशार्कवसूरगेश्वरान्द्वंद्वंसमासाद्यमहाबलान्विताः
॥ ४९ ॥ गर्जंत्यथान्योन्यमुपेत्ययुद्धेचापानिकर्षंत्यतिवेगिताश्च ॥ मुंचंतिनाराचगणान्सहस्रशआगच्छहेतिष्ठसिकिं
बिभेषि ॥ ५० ॥ शरैस्तुतीक्ष्णैरभितापयंतोमंदाकिनीवेगनिभांवहंतीं ॥ प्रावर्तयंतोभयदांनदींचह्यस्त्रैरमोघैरभिताडयंतः
॥ ५१ ॥ त्रैलोक्यमाकांक्षिभिरुग्रवेगैःसुरासुरैर्नारदसंप्रवृद्धैः ॥ पिशाचरक्षोगणपुष्टिवर्धनीमुत्तर्तुमिच्छद्भिरसृङ्नदीबभौ
॥५२॥ वाद्यंतितूर्याणिसुरासुराणांपश्यंतिखस्थामुनिसिद्धसंघाः ॥ नयंतितानप्सरसोरणाग्रात्हतारणेयेभिमुखास्तुशूराः
॥ ५३ ॥ इतिश्रीवामनपुराणेदेवासुरयुद्धंनामनवमोऽध्यायः ॥९॥ पुलस्त्यउवाच ॥ ततःप्रवृत्तेसंग्रामेभीरूणांभयवर्धने ॥
सहस्राक्षोमहाचापमादायव्यसृजच्छरान् ॥१॥ अंधकोपिमहावेगंधनुराकृष्यभास्वरम् ॥ पुरंदरायचिक्षेपशरान्बर्हिण-
वाससः ॥ २ ॥ तावन्योन्यंसुतीक्ष्णाग्रैःशरैःसन्नतपर्वभिः ॥ रुक्मपुंखैर्महावेगैराजघ्नतुरुभावपि ॥ ३ ॥ ततःक्रुद्धःशतम-
खःकुलिशंभ्राम्यपाणिना ॥ चिक्षेपदैत्यराजायतंददर्शतथांधकः ॥ ४ ॥ आजघानचबाणौघैरस्त्रैःशस्त्रैःसनारद ॥ तान्
भस्मसात्तदाचक्रेनागानिवहुताशनः ॥ ५ ॥ ततोतिवेगितंवज्रंदृष्ट्वाबलवतांवरः ॥ समाप्लुत्यरथात्तस्थौभुविबाहुसहाय-
वान् ॥ ६ ॥ रथंसारथिनासार्धंसाश्वध्वजसकूबरम् ॥ भस्मकृत्वाथकुलिशमंधकंसमुपाययौ ॥ ७ ॥ तमापतंतंवेगेन
मुष्टिनाहत्यभूतले ॥ पातयामासबलवान्जगर्जचतदांधकः ॥ ८ ॥ तंगर्जमानंवीक्ष्याथवासवःसायकैर्दृढम् ॥ व-
वर्षतान्वारयितुमभ्यायांतंशतक्रतुम् ॥ ९ ॥ आजघानतलेनेभंकुंभमध्येयदाकरम् ॥ जानुनाचसमाहत्य

विषाणंप्रबभंजच ॥ १० ॥ वाममस्यतथापार्श्वेंसमाहत्यांधकस्त्वरन् ॥ गजेंद्रंपातयामासप्रहारैर्जर्जरीकृतम् ॥ ११ ॥
गजेंद्रात्पतमानाच्चअवप्लुत्यशतक्रतुः ॥ पाणिनावज्रमादायप्रविवेशामरावतीम् ॥ १२ ॥ पराङ्मुखेसहस्राक्षेतद्दैवत-
बलंमहत् ॥ पातयामासदैत्येंद्रःपादमुष्टितलादिभिः ॥ १३ ॥ ततोवैवस्वतोदंडंपरिभ्राम्यद्विजोत्तम॥समभ्यधावत्प्रल्हा-
दंहंतुकामःसुरोत्तमः ॥ १४ ॥ तमापतंतंबाणौघैर्ववर्षविनदन्मुहुः ॥ हिरण्यकशिपोःपुत्रश्चापमानम्यवेगवान् ॥ १५ ॥
तांबाणवृष्टिमतुलांदंडेनाहत्यभास्करिः ॥ शातयित्वाप्रचिक्षेपदंडंलोकभयंकरम् ॥ १६ ॥ सवायुपथमास्थायधर्मराज-
करेस्थितः ॥ जज्वालकालाग्निनिभोयद्वद्दग्धुंजगत्त्रयम् ॥ १७ ॥ जाज्वल्यमानमायांतंदंडंदृष्ट्वादितेःसुताः ॥ प्राक्रोशं-
तिहतःकष्टंप्रल्हादोयंयमेनहि ॥ १८ ॥ तमाक्रंदितमाकर्ण्यहिरण्याक्षसुतोंधकः ॥ प्रोवाचमाभैष्टमयिस्थितेकोयंसुराध-
मः ॥ १९ ॥ इत्येवमुक्त्वावचनंवेगेनाभिससारच ॥ जग्राहपाणिनादंडंसव्यहस्तेननारद ॥२०॥ तमादायततोवेगाद्
भ्रामयामासचांधकः ॥ जगर्जचमहानादंयथाप्रावृषितोयदः ॥ २१ ॥ प्रल्हादंरक्षितंदृष्ट्वादंडाद्दैत्येश्वरेणहि ॥ साधुवा-
दंतदाचक्रुर्दैत्यदानवयूथपाः ॥ २२ ॥ भ्रामयंतंमहादंडंदृष्ट्वाभानुसुतोमुने ॥ दुःसहंदुर्धरंमत्वाअंतर्धानमगाद्यमः ॥२३॥
अंतर्हितेधर्मराजेप्रल्हादोपिमहामुने ॥ दारयामासबलवान्देवसैन्यंसमंततः ॥२४॥ वरुणःशिंशुमारस्थोबद्ध्वापाशैर्महा-
सुरान् ॥ गदयादारयामासतमभ्यागाद्विरोचनः ॥ २५ ॥ तोमरैर्वज्रसंस्पर्शैःशक्तिभिर्मार्गणैरपि ॥ जलेशंताडयामा-
समुद्गरैर्वज्रसन्निभैः ॥ २६ ॥ ततस्तंगदयाभ्येत्यपातयित्वाधरातले ॥ अभिद्रुत्यबबंधाशुपाशैर्मत्तगजंबली ॥ २७ ॥
तान्पाशान्शतधाचक्रेवेगाच्चदनुजेश्वरः ॥ वरुणंचसमभ्येत्यमध्येजग्राहनारद ॥ २८ ॥ ततोदंतीचदंताभ्यांप्रचिक्षे-
पतथाव्ययः ॥ ममर्दचतथापद्भ्यांसगदंसलिलेश्वरम् ॥ २९ ॥ तंवध्यमानंवीक्ष्याथशशांकःशिशिरांशुमान् ॥ अभ्ये-

त्यताडयामाससमार्गणैःकायदारुणैः ॥ ३० ॥ संमर्द्यमानःशिशिरांशुजालैरवापपीडांपरमांगजेंद्रः ॥ क्लिष्टश्चवेगात्पय-
सामधीशंमुहुर्मुहुःपादतलैर्ममर्द ॥ ३१ ॥ संमर्द्यमानोवरुणोगजेंद्रंपद्भ्यांसुगाढंजगृहेमहर्षे ॥ पादेषुभूमिंकरयोःस्पृशंश्च
मूर्द्धानमुल्लास्यबलान्महात्मा ॥ ३२ ॥ गृह्यांगुलीभिश्चगजस्यपुच्छंकृत्वेहबंधंभुजगेश्वरेण ॥ उत्पाट्यचिक्षेपविरोचनं
हिसकुंजरंखेसनियंतृवाहम् ॥ ३३ ॥ क्षिप्तोजलेशेनविरोचनस्तुसकुंजरोभूमितलेपपात ॥स्वर्गात्स्वयंत्रार्गलहर्म्यभूमिपुरं-
सुकेशेरिवभास्करेण ॥ ३४ ॥ ततोजलेशःसगदःसपाशःसमभ्यधावद्दितिजंनिहंतुम् ॥ ततःसमाक्रंदमनुत्तमंहिमुक्तंहिदै-
त्यैर्घनरावतुल्यं ॥ ३५ ॥ हाहाहतोऽसौवरुणेनवीरोविरोचनोदानवसैन्यपालः ॥ प्रह्लादहेजंभकुजंभकाद्यारक्षध्वमभ्ये-
त्यसहांधकेन ॥ ॥ ३६ ॥ अहोमहात्माबलवाञ्जलेशःसंचूर्णयन्दैत्यभटान्सवाहनान् ॥ पाशेनबद्धागदयानिहंति-
यथापशून्वाजिमखेमहेंद्रः ॥ ३७ ॥ श्रुत्वाथशब्दंदितिजैःसमीरितंजंभप्रधानादितिजेश्वरास्ततः ॥ समभ्यधावंस्त्वरि-
ताजलेश्वरंयथापतंगाज्वलितंहुताशनम् ॥ ३८ ॥ तानागतान्वैप्रसमीक्ष्यदेवःप्रल्हादिमुत्सृज्यवितत्यपाशम् ॥ ग-
दांसमुद्भ्राम्यजलेश्वरस्तुदुद्रावताञ्जंभमुखानरातीन् ॥ ३९ ॥ जंभंचपाशेनतथाविहत्यतारंतलेनाशनिसंनिभेन ॥
पादेनवृत्रंतरसाकुजंभंनिपातयामासबलंचमुष्ट्या ॥ ४० ॥ तेनार्दितादेववरेणदैत्याःसंप्राद्रवन्दिक्षुविमुक्तशस्त्राः ॥ त-
तोऽधकःसुत्वरितोभ्युपेयाद्रणाययोद्धुंजलनायकेन ॥ ४१ ॥ तमापतंतंगदयाजघानपाशेनबद्धावरुणोऽसुरेशम् ॥ तंपाश-
माविध्यगदांप्रगृह्यचिक्षेपदैत्यःसजलेश्वराय ॥ ४२ ॥ तमापतंतंप्रसमीक्ष्यपाशंगदांचदाक्षायणिनंदनस्तु ॥ विवेशवेगा-
त्पयसांनिधानंततोंधकोदेवबलंममर्द ॥ ४३ ॥ ततोहुताशःसुरशत्रुसैन्यंददाहरोषात्पवनावधूतः ॥ तमभ्ययाद्दानववि-

१ मेघस्वनितसदृशम् ।

श्वकर्मामयोमहाबाहुरुदग्रवीर्यः ॥ ४४ ॥ तमापतंतंसहशंबरेणसमीक्ष्यववह्निः पवनेनसार्द्धम् ॥ शक्त्यामयंशंबरमेत्य
कंठेसंताड्यजग्राहबलान्महर्षे ॥ ४५ ॥ शक्त्यासकोपेवरणेविदारितेसंभिन्नदेहोन्यपतत्पृथिव्याम् ॥ मयःप्रजज्वाल
चशंबरोपिकंठेविलग्नेज्वलनेप्रदीप्ते ॥ ४६ ॥ सदह्यमानोदितिजोऽग्निनाथसुविस्तरंघोररवंरुराव ॥ सिंहाभिपन्नोवि-
पिनेयथैवमतंगजःक्रंदतिवेदनार्त्तः ॥ ४७ ॥ तंशब्दमाकर्ण्यचशंबरस्यदैत्येश्वरःक्रोधविरक्तदृष्टिः ॥ आःकिंकिमेतन्ननुके-
नयुद्धेजितोमयःशंबरदानवश्च ॥ ४८ ॥ ततोब्रुवन्दैत्यभटादितीशंप्रदह्यतेनेनहुताशनेन ॥ रक्षस्वचाभ्येत्यनशक्यतेभो
हुताशनोवारयितुंरणाग्रे ॥ ४९ ॥ इत्थंसदैत्यैरभिनोदितस्तुहिरण्यचक्षोस्तनयोमहर्षे ॥ उद्यम्यवेगात्परिघंहुताशंस-
माद्रवत्तिष्ठइतिब्रुवन्हि ॥ ५० ॥ श्रुत्वांधकस्यापिवचोऽव्ययात्मासंक्रुद्धचित्तस्त्वरितोहिदैत्यम् ॥ उत्पाट्यभूम्यांचविनिः
पिपेषततोऽधकःपावकमाससाद ॥ ५१ ॥ समाजघानाथहुताशनंहिवरायुधेनाथवरांगमध्ये ॥ समाहतोग्निःपरिमुच्य
शंबरंतथांधकंसत्वरितोभ्यधावत् ॥ ५२ ॥ तमापतंतंपरिघेणभूयःसमाहनन्मूर्ध्नितदांधकोपि ॥ सताडितोग्निर्दितिजेश्वरे-
णभयात्प्रदुद्रावरणाजिराद्बहिः ॥ ५३ ॥ ततोऽधकोमारुतचंद्रभास्करान्साध्यान्मरुच्चाश्विवसून्महोरगान् ॥ यान्या-
ञ्शरेणस्पृशतेपराक्रमीपराङ्मुखांस्तान्कृतवान्रणाजिरात् ॥ ५४ ॥ ततोविजित्यामरसैन्यमुग्रंसेंद्रंसरुद्रंसयमंससो-
मम् ॥ संपूज्यमानोदनुपुंगवैस्तुतदांधकोभूमिमुपाजगाम ॥५५॥ आसाद्यभूमिंकरदान्नरेंद्रान्कृत्वावशेस्थाप्यचराचरंच ॥
जगत्समस्तंप्रविवेशधीमान्पातालमग्र्यंपुरमश्मकाह्वम् ॥ ५६ ॥ तत्रस्थितस्यापिमहासुरस्यगंधर्वविद्याधरसिद्ध-
संघाः ॥ सहाप्सरोभिःपरिचारणायपातालमभ्येत्यसमावसन्स्म ॥ ५७ ॥ इतिश्रीवामनपुराणेअंधकविजयोनाम
दशमोऽध्यायः ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नारदउवाच ॥ यदेतद्भवताप्रोक्तंसुकेशिपुरमंबरात् ॥ पातितंभुविसूर्येणतदाचक्ष्वद्विजोत्तम ॥ १ ॥ सुकेशीतिचकश्चा-
सौकेनदत्तवरश्चसः ॥ किमर्थंपातितोभूम्यामाकाशाद्भास्करेणहि ॥ २ ॥ पुलस्त्यउवाच ॥ शृणुष्वावहितोभूत्वाकथामे-
तांपुरातनीम् ॥ यथाश्रुतांमयापूर्वंकथ्यमानांमहामुने ॥ ३ ॥ आसीन्निशाचरपतिर्विद्युत्केशीतिविश्रुतः ॥ तस्यपु-
त्रोगुणज्येष्ठःसुकेशिरभवन्मुने ॥ ४ ॥ तस्यतुष्टस्तथेशानःपुरमाकाशचारियत् ॥ प्रादादजेयत्वमपिशत्रुभिश्चाप्यवध्य-
ताम् ॥ ५ ॥ सचापिशंकरात्प्राप्यवरंगगनगंपुरं ॥ रेमेनिशाचरैःसार्द्धंसदाधर्मपथिस्थितः ॥ ६ ॥ सकदाचिद्गतोरण्यं
मागधंदानवेश्वरः ॥ तत्राश्रमांस्तुददृशेऋषीणांभावितात्मनाम् ॥ ७ ॥ महर्षीन्सतदादृष्ट्वाप्रणिपत्याभिवाद्यच ॥ प्र-
त्युवाचऋषीन्सर्वान्कृतासनपरिग्रहः ॥८॥ सुकेशिरुवाच ॥ प्रष्टुमिच्छामिभवतःसंशयोयंहृदिस्थितः ॥ कथयंतुभवंतोमे
नचैवंज्ञापयाम्यहम् ॥ ९ ॥ किंस्विच्छ्रेयःपरेलोकेकिमुचेहद्विजोत्तमाः ॥ केनपूज्यस्तथासत्सुकेनासौसुखमेधते ॥ १० ॥
पुलस्त्यउवाच ॥ इत्थंसुकेशिवचनंनिशम्यपरमर्षयः ॥ प्रोचुर्विमृश्यश्रेयोऽर्थमिहलोकेपरत्रच ॥११॥ ऋषयऊचुः ॥ श्रू-
यतांकथयिष्यामस्तवराक्षसपुंगव ॥ यद्धिश्रेयोभवेद्वीरइहचामुत्रचाव्यय ॥ १२ ॥ श्रेयोधर्मःपरेलोकेइहचक्षणदाचर ॥
तस्मिन्समाश्रितेसत्सुपूज्यस्तेनसुखीभवेत् ॥ १३ ॥ सुकेशिरुवाच ॥ किंलक्षणोभवेद्धर्मःकिमाचरणसत्क्रियः ॥ यमा-
श्रित्यनसीदंतिदेवाद्यास्तुतदुच्यताम् ॥१४॥ ऋषयऊचुः ॥ देवानांपरमोधर्मःसदायज्ञादिकाःक्रियाः ॥ स्वाध्यायतत्त्ववे-
दित्वंविष्णुपूजाइतिश्रुतिः ॥ १५ ॥ दैत्यानांबाहुशालित्वंमात्सर्यंयुद्धसत्क्रियाः ॥ *वंदनंनीतिशास्त्राणांहरभक्तिरुदाहृ-
ता ॥ १६ ॥ सिद्धानामुदितोधर्मोयोगसिद्धिरनुत्तमा ॥ स्वाध्यायोब्रह्मविज्ञानंभक्तिर्विष्णौहरेतथा ॥ १७ ॥ उत्कृष्टो-

*सेवनमितिपाठान्तरम् ।

पासनंज्ञेयंनृत्यवाद्येषुवेदिता ॥ सरस्वत्यांस्थिराभक्तिर्गांधर्वोधर्मउच्यते ॥ १८ ॥ विद्याधारित्वमतुलंविज्ञानंपौरुषेम-
तिः ॥ विद्याधराणांधर्मोयंभवान्यांभक्तिरेवच ॥ १९ ॥ गांधर्वविद्यावेदित्वंभक्तिर्भानौतथास्थिरा ॥ कौशल्यंसर्वशिल्पा-
नांधर्मःकिंपुरुषःस्मृतः ॥ २० ॥ ब्रह्मचर्यममानित्वंयोगाभ्यासरतिर्दृढा ॥ सर्वत्रकामचारित्वंधर्मोयंपैत्रिकःस्मृतः ॥२१॥
ब्रह्मचर्यंसदासत्यंजप्यंज्ञानंचराक्षस ॥ नियमोधर्मवेदित्वमार्षोधर्मःप्रचक्षते ॥ २२ ॥ स्वाध्यायोब्रह्मचर्यंचदानंयजन-
मेवच ॥ अकार्पण्यमनायासोदयाहिंसाक्षमादयः ॥ २३ ॥ जितेंद्रियत्वंशौचंचमांगल्यंभक्तिरच्युते ॥ शंकरेभास्करेदे-
व्यांधर्मोयंमानवःस्मृतः ॥ २४ ॥ धनाधिपत्यंभोगाश्चस्वाध्यायःशंकरार्चनम् ॥ अहंकारमशौंडीर्यंधर्मोयंगुह्यकेष्विति
॥ २५ ॥ परदारावमर्शित्वंपारक्यार्थेचलोलुपाः ॥ स्वाध्यायस्त्र्यंबकेभक्तिर्धर्मोयंराक्षसःस्मृतः ॥२६॥ अविवेकस्तथा
ज्ञानंशौचहानिरसत्यता ॥ पिशाचानामयंधर्मःसदाचामिषगृध्नुता ॥ २७ ॥ योनयोद्वादशैवैतास्तासुधर्माश्चराक्ष-
स ॥ ब्रह्मणाकथिताःपुण्याद्वादशैवगतिप्रदाः ॥ २८ ॥ सुकेशिरुवाच ॥ भवद्भिरुक्तायेधर्माःशाश्वताद्वादशाव्ययाः ॥ त-
त्रयेमानवाधर्मास्तान्भूयोवक्तुमर्हथ ॥२९॥ ऋषयऊचुः॥ शृणुष्वमनुजादीनांधर्मास्तुक्षणदाचर ॥ येवसंतिमहीपृष्ठेनरा
द्वीपेषुसप्तसु ॥ ३० ॥ योजनानांप्रमाणेनपंचाशत्कोटिरायता ॥ जलोपरिमहीयंहिनौरिवास्तेसरिज्जले ॥ तस्योपरि
चदेवेशोब्रह्माशैलेंद्रमुत्तमं ॥ ३१ ॥ कर्णिकाकारमत्युच्चंस्थापयामाससत्तमः ॥ सचेमांनिर्ममेपुण्यांप्रजांदेवश्चतुर्दिशं
॥ ३२ ॥ स्थानानिद्वीपसंज्ञानिकृतवांश्चप्रजापतिः ॥ तत्रमध्येचकृतवान्जंबूद्वीपमितिश्रुतं ॥ ३३ ॥ तल्लक्षंयोजनानां
चप्रमाणेननिगद्यते॥ततोजलनिधिःक्षारोबाह्यतोद्विगुणःस्थितः ॥३४॥ तस्यापिद्विगुणःप्लक्षोबाह्यतःसंप्रतिष्ठितः ॥ त-
तस्त्विक्षुरसोदश्चबाह्यतोवलयाकृतिः ॥ ३५ ॥ द्विगुणःशाल्मलिद्वीपोद्विगुणोस्यमहोदधिः ॥ सुरोदोद्विगुणस्तस्यतस्मा-

च्चद्विगुणःकुशः ॥ ३६ ॥ घृतोदोद्विगुणश्चैवकुशद्वीपात्प्रकीर्त्तितः ॥ घृतोदाद्द्विगुणःक्रौंचोदध्योदोद्विगुणस्ततः ॥ ३७ ॥
समुद्राद्द्विगुणःशाकःशाकाद्दुग्धाब्धिरुत्तमः ॥ द्विगुणःसंस्थितोयत्रशेषपर्यंकगोहरिः ॥ ३८ ॥ तस्माच्चपुष्करद्वीपः
स्वादूदस्तदनंतरं ॥ एतेचद्विगुणाःसर्वेपरस्परमवस्थिताः ॥ ३९ ॥ चत्वारिंशदिमाःकोट्योलक्षाश्चनवतिःस्मृताः ॥ यो-
जनानांराक्षसेंद्रपंचचातिसुविस्तृताः ॥ ४० ॥ जंबूद्वीपात्समारभ्ययावत्क्षीराब्धिरंततः॥ कोट्यश्चतस्रोलक्षाणांद्वौपंचाश-
च्चराक्षस ॥ ४१ ॥ पुष्करद्वीपमानोऽयंतावानेतैमहोदधिः ॥ लक्षमंडकटाहेनसमंतादभिपूरितं ॥ ४२ ॥ एवंद्वीपा-
स्त्विमेसप्तपृथग्धर्माःपृथक्क्रियाः ॥ गदिष्यामस्तववयंशृणुष्वत्वंनिशाचर ॥ ४३ ॥ प्लक्षादिषुनरावीरयेवसंतिसना-
तनाः ॥ शाकांतेषुनतेष्वस्तियुगावस्थाकथंचन ॥ ४४॥ मोदंतेदेववत्तेषांधर्मोदिव्यउदाहृतः ॥ कल्पांतेप्रलयस्तेषां
निगद्येतमहाभुज ॥ ४५ ॥ येजनाःपुष्करद्वीपेवसंतेरौद्रदर्शने ॥ पैशाचमाश्रिताधर्मंकर्मांतेतेविनाशिनः ॥ ४६ ॥
सुकेशिरुवाच ॥ किमर्थंपुष्करद्वीपोभवद्भिःसमुदाहृतः ॥ दुर्दर्शःशौचरहितोघोरःकर्मार्थनाशकृत् ॥४७॥ ऋषयऊचुः ॥
तस्मिन्निशाचरद्वीपेनरकाःसंतिदारुणाः ॥ रौरवाद्यास्ततोरौद्रःपुष्करोघोरदर्शनः ॥ ४८ ॥ सुकेशिरुवाच ॥
कियंत्येतानिरौद्राणिनरकाणितपोधनाः ॥ कियन्मात्राणिमार्गेणकाचतेपुस्वरूपता ॥ ४९ ॥ ऋषयऊचुः ॥
शृणुष्वराक्षसश्रेष्ठप्रमाणंलक्षणंतथा ॥ सर्वेषांरौरवादीनांसंख्ययात्वेकविंशतिः ॥ ५० ॥ द्वेसहस्रेयोजना-
नांज्वलितांगारविस्तृते ॥ रौरवोनामनरकः प्रथमः परिकीर्त्तितः ॥ ५१ ॥ तप्तताम्रमयीभूमिरधस्ता-
द्वह्नितापिता ॥ द्वितीयोद्विगुणस्तस्मान्महारौरवउच्यते ॥ ५२ ॥ ततोपिविस्तृतश्चान्यस्तामिस्रोनरकः
स्मृतः ॥ अंधतामिस्रकोनामचतुर्थोद्विगुणःपरः ॥ ५३ ॥ ततस्तुकालसूत्रेतिपंचमःपरिगीयते ॥ अप्रति-

ष्ठंचनरकंघटीयंत्रंचसप्तमं ॥ ५४ ॥ असिपत्रंवनंचान्यत्सहस्राणिद्विसप्ततिः ॥ योजनानांपरिख्यातमष्टमंनर-
कोत्तमं ॥ ५५ ॥ नवमंतप्तकुंभंचदशमंकूटशाल्मलिः ॥ करपत्रस्तथैवोक्तस्तथान्यःश्वानभोजनः ॥ ५६ ॥ संदंशोलो-
हपिंडश्चकरंभसिकतातथा ॥ घोराक्षारनदीचान्यातथाऽन्याकृमिभोजना ॥ तथाष्टादशमीप्रोक्ताघोरावैतरणीनदी ॥५७॥
तथापरःशोणितपूयभोजनःक्षुराग्रधारोनिशितश्चचक्रकः ॥ संशोषणोनामतथापिचांतेप्रोक्तास्तवैतेनरकाःसुकेशिन्॥५८॥
इतिश्रीवामनपुराणेपुष्करद्वीपवर्णनंनामैकादशोऽध्यायः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥
सुकेशिरुवाच ॥ कर्मणानरकानेतान्केनगच्छंतिवैकथं ॥ एतद्वदतविप्रेंद्राःपरंकौतूहलंमम ॥ १ ॥ ऋषयऊचुः ॥ कर्मणा
येनयेनेहयांतिशालकटंकटं ॥ स्वकर्मफलभोगार्थंनरकान्मेशृणुष्वतान् ॥ २ ॥ देवदेवद्विजातीनांयैर्निंदासततंकृता ॥
येपुराणेतिहासार्थान्नाभिनंदंतिपापिनः ॥ ३ ॥ गुरुनिंदाकरायेचमखविघ्नकराश्चये ॥ दातुर्निवारकायेचतेष्वेतेनिपतं-
तिहि ॥ ४ ॥ सुहृद्दंपतिसौदर्यस्वामिभृत्यपितासुतैः ॥ याज्याध्यापकयोश्चैवकृतोभेदोधमैर्मिथः ॥ ५ ॥ कन्यामेकस्य
दत्वाचददत्यन्यस्ययेऽधमाः ॥ करपत्रेणपाट्यंतेतेद्विधायमकिंकरैः ॥ ६ ॥ परोपतापजनकाचंदनोशीरहारिणः ॥ वाल-
व्यजनहर्तारःकरंभसिकताश्रिताः ॥ ७ ॥ निमंत्रितोऽन्यतोभुंक्तेश्राद्धेदैवेथपैतृके ॥ सद्विधाकृष्यतेमर्त्यस्तीक्ष्णतुंडैःख-
गोत्तमैः ॥ ८ ॥ मर्माणियस्तुसाधूनांतुदन्वाग्भिर्निकृंतति ॥ तस्योपरितुदंतस्तुतुंडैस्तिष्ठंतिपत्रिणः ॥ ९ ॥ यःकरोति
चपैशुन्यंसाधूनामन्यथामतिः ॥ वज्रतुंडानिभाजिह्वामाकर्षंतेऽस्यवायसाः ॥१०॥ पितृमातृगुरूणांचयेऽवज्ञांचक्रुरुद्धताः ॥
मज्जंतिपूयविण्मूत्रेत्वप्रतिष्ठेह्यधोमुखाः ॥ ११ ॥ देवतातिथिभूत्येषुभूतेष्वभ्यागतेषुच ॥ अभुक्तवत्सुयेऽश्नंतिबालपि-

१ यथा घटीतो जलं वारंवारमुपर्युत्क्षिप्यते तथा पापी चक्रे संस्थाप्योत्क्षिप्यते इति ।

त्रग्निमातृषु ॥ १२ ॥ दुष्टासृक्पूयनिर्यासंभुंजतेत्वधमाइमे ॥ सूचीमुखाश्चजायंतेक्षुधार्त्तागिरिविग्रहाः ॥ १३ ॥ एक-
पंक्त्युपविष्टानांविषमंभोजयंतिये ॥ विड्भोजनंराक्षसेंद्रनरकंतेव्रजंतिच ॥ १४ ॥ एकसार्थप्रयाताश्चपश्यंतश्चार्थिनं-
नराः॥ असंविभज्यभुंजंतितेयांतिश्लेष्मभोजनं ॥ १५ ॥ गोब्राह्मणाग्नयःस्पृष्टायैरुच्छिष्टैश्चकामतः ॥ क्षिप्यंतेहिक-
रास्तेषांतप्तकुंभेसुदारुणे ॥ १६ ॥ सूर्येंदुतारकादृष्टायैरुच्छिष्टैश्चकामतः ॥ तेषांनेत्रगतोवह्निर्धम्यतेयमकिंकरैः
॥ १७ ॥ मित्रजायाथजननीज्येष्ठोभ्रातापितास्वसा ॥ जामयोगुरवोवृद्धायैःसंस्पृष्टाःपदानृभिः ॥ १८ ॥ बद्धांघ्रयस्ते-
निगडैर्लोहैर्वह्निप्रतापितैः ॥ क्षिप्यंतेरौरवेघोरेह्याजानुपरिदाहिनः ॥१९॥ पायसंकृशरामांसंवृथाभुक्तानियैर्नरैः ॥ ते-
षामयोगुडास्तप्ताः क्षिप्यंतेवदनेद्रुताः ॥ २० ॥ गुरुदेवद्विजातीनांवेदानांचनराधमैः ॥ निंदानिशंश्रुतायैस्तुपापानाम-
भिकुर्वतां ॥ २१ ॥ तेषांलोहमयाःकीलावह्निवर्णाःपुनःपुनः ॥ श्रवणेषुनिखन्यंतेधर्मराजस्यकिंकरैः ॥ २२ ॥ प्रपादे-
वकुलारामविप्रवेश्मसभामठान् ॥ वापीकूपतडागांश्चभंक्त्वाविध्वंसयंतिये ॥ २३ ॥ तेषांविलपतांचर्मदेहतःक्रियतेपृथ-
क् ॥ कर्तरीभिःसुतीक्ष्णाभिःसुरौद्रैर्यमकिंकरैः ॥२४॥ गोब्राह्मणार्कमग्निंचयेहिमेहंतिमानवाः॥ तेषांगुदेभ्यश्चांत्राणिवि-
निष्कृंततिवायसाः ॥ २५ ॥ स्वपोषणपरोयस्तुपरित्यजतिमानवः ॥ पुत्रभृत्यकलत्रादिबंधुवर्गमकिंचनम् ॥ २६ ॥ दु-
र्भिक्षेसंभ्रमेचापिसश्वयोनौनिपात्यते॥ शरणागतं्त्यजंतियेचबंधनपालकाः॥२७॥ पतंतियंत्रपीडितेताड्यमानास्तुकिंक-
रैः॥क्लेशयंतिहिविप्रादीन्याज्यकर्मसुपापिनः ॥२८॥ तेपेष्यंतेशिलायांवैशोष्यंतेपिचशोषकैः ॥ न्यासापहारिणःपापाबध्यं-
तेनिगडैरपि ॥ २९ ॥ क्षुत्क्षामाःशुष्कताल्वोष्ठाःपात्यंतेवृश्चिकाशने ॥ पर्वमैथुनिनःपापाःपरदाररताश्चये ॥ ३० ॥
तेवह्नितप्तांकूटाग्रामालिंगंतेचशाल्मलिं ॥ उपाध्यायमधःकृत्ययैरधीतंद्विजाधमैः॥ ३१ ॥ तेपामध्यापकोयश्चसशिलां

शिरसावहेत् ॥ मूत्रश्लेष्मपुरीषाणियैरुत्सृष्टानिवारिणि ॥३२॥ तेपात्यंतेचविण्मूत्रेदुर्गंधेपूयपूरिते ॥ श्राद्धेतिथेयमन्यो-
न्यंयैर्भुक्तंभुविमानवैः ॥३३॥ परस्परंभक्षयंतितेस्वमांसानिबालिशाः ॥ वेदवह्निगुरुत्यागीमातापित्रोस्तथैवच ॥३४॥
गिरिशृंगादधःपातंपात्यंतेयमकिंकरैः ॥ पुनर्भूपतयोयेचकन्याविध्वंसकाश्चये ॥ ३५ ॥ तद्गर्भश्राद्धभुग्यश्चकृमीन्भ-
क्षेत्पिपीलिकाः ॥ चंडालादंत्यजाद्वापिप्रतिगृह्णातिदक्षिणां ॥ ३६ ॥ याजकोयजमानश्चसस्यादश्मनिकीटकः ॥ पृष्ठ-
मांसाशिनोमूढास्तथैवोक्तोपजीविनः ॥ ३७॥ क्षिप्यंतेवृकभक्षेतेनरकेरजनीचर ॥ स्वर्णस्तेयीचब्रह्मघ्नःसुरापोगुरुतल्पगः
॥ ३८ ॥ तथागोभूमिहर्त्तारोगोस्त्रीबालहताश्चये ॥ एतेनराद्विजायेचगोषुविक्रयिणस्तथा ॥ ३९ ॥ सोमविक्रयिणोये
चवेदविक्रयिणस्तथा ॥ कूटसत्यास्त्वशौचाश्चनित्यनैमित्तनाशकाः ॥ ४० ॥ कूटसाक्षिप्रदा[1]येचतेमहारौरवेस्थिताः ॥
दशवर्षसहस्राणितावत्तामिस्रकेस्थिताः ॥ ४१ ॥ तावच्चैवांधतामिस्रेअसिपत्रवनेततः ॥ तावच्चैवघटीयंत्रेतप्तकुंभेततः
परं ॥४२॥ प्रपातोभवतेतेषांयैरिदंदुष्कृतंकृतं ॥ येत्वेतेनरकारौद्रारौरवाद्यास्तवोदिताः ॥४३॥ तेसर्वेक्रमशःप्रोक्ताःकृतघ्ने-
लोकनिंदिते ॥ यथासुराणांप्रवरोजनार्दनोयथागिरीणामपिशैशिराद्रिः ॥ ४४ ॥ यथायुधानांप्रवरंसुदर्शनंयथाखगा-
नांविनतातनूजः ॥ महोरगाणांप्रवरोप्यनंतोयथाचभूतेषुमहीप्रधाना ॥ ४५ ॥ नदीषुगंगाजलजेषुपद्मंसुरारिमुख्येषु
हरांघ्रिभक्तः ॥ क्षेत्रेषुयद्वत्कुरुजांगलंवरंतीर्थेषुयद्वत्प्रवरंपृथूदकं ॥ ४६ ॥ सरस्सुचैवोत्तरमानसंयथावनेषुपुण्ये-
षुहिनंदनंयथा ॥ लोकेषुयद्वत्सदनंविरंचेःसत्यंयथाधर्मविधिक्रियासु ॥ ४७ ॥ यथाश्वमेधः प्रवरः क्रतूनांपुत्रो-
यथास्पर्शवतांवरिष्ठः ॥ तपोधनानामपिकुंभयोनिःश्रुतिर्वरायद्वदिहागमेषु ॥ ४८ ॥ मुख्यंपुराणेषुयथैवमा-

१ मिथ्यासाक्षिप्रदाः ।

त्स्यंस्वायंभुवोक्तिस्त्वपिसंहितासु ॥ मनुःस्मृतीनांप्रवरोयथैवातिथीषुदर्शोविबुधेषुत्रासवः ॥ ४९ ॥ तेजस्वि-
नांचप्रवरोर्कउक्तऋक्षेषुचंद्रोजलधिर्ह्रदेषु ॥ भवान्यथाराक्षससत्तमेषुपाशेषुनागस्तिमितेषुबंधः ॥ ५० ॥ धान्ये-
षुशालिर्द्विपदेषुविप्रश्चतुष्पदेगौश्चयथामृगेंद्रः ॥ पुष्पेषुजातीनगरेषुकांचीनारीषुरंभाश्रमिणांगृहस्थः ॥ ५१ ॥ कुश-
स्थलीश्रेष्ठतमापुरेषुदेशेषुसर्वेषुचमध्यदेशः ॥ फलेषुचूतोमुकुलेष्वशोकःसर्वौषधीनांप्रवराचपथ्या ॥ ५२ ॥ मूलेषुकंदः
प्रवरोयथोक्तोव्याधिष्वजीर्णंक्षणदाचरेंद्र॥ श्वेतेषुदुग्धंप्रवरयथैवकार्पासिकंप्रावरणेहियद्वत् ॥५३॥ कलासुमुख्यागणि-
तज्ञताचविज्ञानमुख्यंतुयथेंद्रजालं ॥ शाकेषुमुख्यात्वपिकाचमाचीरसेषुमुख्यंलवणंयथैव ॥ ५४ ॥ फलेषुतालोनलि-
नीषुपंपावनौकसेष्वेवचऋक्षराजः ॥ महीरुहेष्वेवयथावटश्चयथाहरोज्ञानवतांवरिष्ठः॥ ५५ ॥ यथासतीनांहिमवत्सुता
हियथार्जुनीनांकपिलावरिष्ठा ॥ यथावृषाणामपिनीलवर्णस्तथैवसर्वेष्वपिदुःसहेषु ॥ ५६ ॥ दुर्गेषुरौद्रेषुनिशाचरेश-
यथानदीवैतरणीप्रधाना ॥ पापीयसांयद्विदिहकृतघ्नःसर्वेषुपापेषुनिशाचरेंद्र ॥ ५७ ॥ ब्रह्मघ्नगोघ्नादिषुनिष्कृतिर्हिविधे-
तनैवास्यतुदुष्टचारिणः ॥ ननिष्कृतिश्चापिकृतघ्नवृत्तेःसुहृत्कृतंनाशयतोऽब्दकोटिभिः ॥ ५८ ॥ इतिश्रीवामनपुराणेकर्मवि-
पाकोनामद्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
सुकेशिरुवाच ॥ भवद्भिरुदिताघोरापुष्करद्वीपसंस्थितिः ॥ जंबूद्वीपस्यसंस्थानंकथयंतुमहर्षयः ॥ १ ॥ ऋषयऊचुः ॥
जंबूद्वीपस्यसंस्थानंकथ्यमानंनिशामय ॥ नवभेदंसुविस्तीर्णंस्वर्गमोक्षफलप्रदं ॥ २ ॥ मध्येत्विलावृतोवर्षोभद्रास्यःपू-
र्वतोद्भुतः ॥ पूर्वदक्षिणतोवर्षोहिरण्मान्राक्षसेश्वर ॥ ३ ॥ भारतोदक्षिणेप्रोक्तोहरिर्दक्षिणपश्चिमे ॥ पश्चिमेकेतुमाल-

१ स्मृतीनां स्मृतिकर्तॄणां यथा मनुः प्रवरः श्रेष्ठः ।

श्चचंपकःपश्चिमोत्तरे ॥ ४ ॥ उत्तरेणकुरोर्वर्षंकल्पवृक्षसमावृतः ॥ पूर्वमुत्तरतोरम्योवर्षःकिंपुरुषःस्मृतः ॥ ५ ॥ पुण्या
रम्यानवैवैतेवर्षाःसालकटंकट ॥ इलावृताद्याश्चैवाष्टौवर्षंमुक्त्वैवभारतं ॥ ६ ॥ नतेष्वस्तियुगावस्थाजरामृत्युभयंनच ॥
तेषांस्वाभाविकीसिद्धिःसुखप्रायाह्ययत्नतः ॥ ७ ॥ विपर्ययोनतेष्वस्तिनोत्तमाधममध्यमाः ॥ यदेतद्भारतंवर्षंनवद्वीपं
निशाचर ॥ ८ ॥ सागरांतरिताःसर्वेअगम्याश्चपरस्परं ॥ इंद्रद्वीपःकशेरूणास्ताम्रपर्णोगभस्तिमान् ॥ ९ ॥ नागद्वी-
पःकटाहश्चसिंहलोवारुणस्तथा ॥ अयंतुनवमस्तेषांद्वीपःसागरसंवृतः ॥ १० ॥ कुमाराख्यःपरिख्यातोद्वीपोयंदक्षिणो-
त्तरः ॥ पूर्वेकिरातायस्यांतेपश्चिमेयवनाःस्मृताः ॥ ११ ॥ अंध्रादक्षिणतोवीरतुरुष्कास्त्वपिचोत्तरे ॥ ब्राह्मणाःक्षत्रियावै-
श्याःशूद्रास्त्वंतरवासिनः ॥ १२ ॥ इज्यायुद्धवणिज्याद्यैःकर्मभिःकृतपावनाः ॥ तेषांसंव्यवहारश्चएभिःकर्मभिरि-
ष्यते ॥ १३ ॥ स्वर्गापवर्गप्राप्तिश्चपुण्यंपापंतथैवच ॥ महेंद्रोमलयःसह्यःशक्तिमानृक्षपर्वतः ॥ १४ ॥
विंध्यश्चपारियात्रश्चसप्तात्रकुलपर्वताः ॥ तथान्येशतसाहस्राभूधरामध्यवासिनः ॥ १५ ॥ विस्तारोच्छ्रायिणोरम्या
विपुलाःशुभसानवः ॥ कोलाहलश्चवैभ्राजोमंदरोदुर्द्धराचलः ॥ १६ ॥ वातधूमोवैद्युतश्चमैनाकःसरसस्तथा ॥ तुंगप्र-
स्थोनागगिरिस्तथागोवर्द्धनाचलः ॥ १७ ॥ उज्जयंतःपुष्पगिरिरर्बुदोरैवतस्तथा ॥ ऋष्यमूकःसगोमंतश्चित्रकूटःकृत-
स्मरः ॥ १८ ॥ श्रीपर्वतःकोंकणकःशतशोऽन्येपिपर्वताः ॥ तैर्विमिश्राजनपदाम्लेच्छाश्चार्याश्चभागशः ॥१९॥ तैःपी-
यंतेसरिच्छ्रेष्ठायाःसम्यक्तानिशामय ॥ सरस्वतीपंचरूपाःकालिंदीचाहिरण्वती ॥ २० ॥ शतद्रुश्चंद्रिकानीलावितस्तेरा-
वतीकुहूः ॥ मधुराहाररावीचउशीराधातुकीरसा ॥ २१ ॥ गोमतीधूतपापाचबाहुदासादृषद्वती ॥ निःस्वरागंडकीचित्रा
कौशिकीचवधूसरा ॥ २२ ॥ सरयूश्चसलोहित्याहिमवत्पादनिःसृताः ॥ वेदस्मृतिर्वेदसिनीवृत्रघ्नीसिंधुरेवच ॥ २३ ॥

पर्णासानंदिनीचैवपावनीचमहीतथा ॥ शराचर्मण्वतीलूपीविदिशावेणुमत्यपि ॥ २४ ॥ चित्राह्योघवतीरम्यापारिया-
त्रोद्भवाःस्मृताः ॥ शोणोमहानदीचैवनर्मदासुरसाक्रिया ॥ २५ ॥ मंदाकिनीदशार्णाचचित्रकूटाहिदेविका ॥ चित्रोत्प-
लावैतमसाकरतोयापिशाचिका ॥२६॥तथान्यापिप्पलश्रेणीविपाशावंजुलावती॥सत्संतजाशुक्तिमतीचक्रिणी त्रिदिवावसुः
॥ २७ ॥ ऋक्षपादप्रसूताचतथान्याबलवाहिनी ॥ शिवापयोष्णीनिर्विंध्यातापीसनिषधावती ॥ २८ ॥ वेणावैतरणी
चैवासिनीबाहुःकुमुद्वती ॥ तोयारेवामहागौरीदुर्गंधावाशिलातथा ॥ २९ ॥ विंध्यपादप्रसूताश्चनद्यःपुण्यजलाःशुभाः ॥
गोदावरीभीमरथीकृष्णवेण्यासरिद्वती ॥ ३० ॥ विंशमद्रीसुप्रयोगावाह्याकावेरिरेवच ॥ दुग्धोदानलिनीचैववारिसेनाक-
लस्वना ॥ ३१ ॥ एताश्चापिमहानद्यःसह्यपादविनिर्गताः ॥ कृतमालाताम्रपर्णीवंजुलाचोत्पलावती ॥ ३२ ॥ शुनी
चैवसुदामाचशक्तिमत्प्रभवास्त्विमाः ॥ सर्वाःपुण्याःसरस्वत्यःपापप्रशमनास्तथा ॥ ३३ ॥ जगतोमातरःसर्वाःसर्वाः
सागरयोषितः ॥ अन्याःसहस्रशश्चात्रक्षुद्रनद्योहिराक्षस ॥ ३४ ॥ सदाकालवहाश्चान्याःप्रावृट्कालवहास्तथा ॥
एतामध्योद्भवादेशाःपिबंतिस्वेच्छयाशुभाः ॥ ३५ ॥ यस्याःकुशूद्राःकिलकुंडलाश्चपंचालकाश्चसहकौशिवैश्च ॥ वृकाः
शकाबर्बरकौरवाश्चकलिंगवंगांगजनास्तथैते ॥३६॥ मर्मकामध्यदेशावाअभीराःशाठ्यधानकाः ॥ बाह्लीकावाटधानाश्च-
अभीराःकालतोयदाः ॥ ३७ ॥ अपरांतास्तथाशूद्राःपह्लवाश्चसखेटकाः ॥ गांधारायवनाश्चैवसिंधुसौवीरभद्रकाः
॥ ३८ ॥ शातद्रवाललित्थाश्चपारावतसमूषकाः ॥ माठरोदकधाराश्चकैकेयादशमास्तथा ॥ ३९ ॥ क्षत्रियाःप्रतिवैश्या-
श्चतथाशूद्रकुलानिच ॥ कांबोजादरदाश्चैवबर्बराश्चांगलौकिकाः ॥ ४० ॥ वेणाश्चैवतुपाराश्चबहुधाबाह्यतोदराः ॥ आ-

* मंजिष्ठेतिपाठः

त्रेयाःसभरद्वाजाःप्रस्थलाश्चदशेरकाः ॥ ४१ ॥ लंपकास्तावकारामाश्चूडिकास्तंगणैःसह ॥ अलसाश्चालिभद्राश्च
किरातानांचजातयः ॥४२॥ तामसाःकर्ममार्गाश्चसुपार्श्वागणकास्तथा॥ कुलूताःकुहिकाश्चूर्णास्तूर्णपादाःसकुक्कुटाः॥४३॥
मांडव्याःपाणवीयाश्चउत्तरापथवासिनः ॥ अंगावंगामद्गुरवाःस्वंतर्गिरिबहिर्गिराः ॥ ४४ ॥ तथाप्रवंगावांगेयामांसादा
बलदंतिकाः ॥ ब्रह्मोत्तराःप्राविजयाभार्गवांगेयमर्षकाः ॥४५॥प्राग्ज्योतिषाःपुंड्राश्चविदेहास्ताम्रलिप्तकाः॥ मालामग-
धमानंदाःप्राच्याजनपदास्त्विमे ॥ ४६ ॥ पुंड्राश्चकेरलाश्चैवचौडा[1]ःकुल्याश्चराक्षस ॥ जानुकामूषिकादाश्चकुमारादाम-
हाशकाः ॥ ४७ ॥ महाराष्ट्रामाहिषिकाःकलिंगाश्चैवसर्वशः ॥ आभीराःसहवैसक्याआरण्याःशबराश्चये ॥ ४८ ॥ पु-
लिंदाविंध्यशैलेयावेदभोदंडकैःसह ॥ पौरिकाःसारिकाश्चैवअश्मकाभोगवर्द्धनाः ॥४९॥ नैमिकाःकुंदलाआंध्राःउळिदान-
लकारकाः ॥ दाक्षिणात्याजनपदास्त्विमेशालकटंकट ॥ ५० ॥ शूर्पारकावारिधानादुर्गाश्चालीकटैःसह ॥ पुलीयाश्चा-
सिनीलाश्चतापसास्तामसास्तथा ॥ ५१ ॥ कारस्करास्तुभमिनोनासिकांताःसुनर्मदाः ॥ दारुकच्छाःसुमाहेयाःसह
सारस्वतैरपि ॥ ५२ ॥ वात्सीयाश्चसुराष्ट्राश्चआवंत्याश्चार्बुदैःसह ॥ इत्येतेपश्चिमामाशांस्थिताजानपदाजनाः ॥ ५३ ॥
कारूषाश्चैकलव्याश्चमेकलाश्चोत्कलैःसह ॥ उत्तमर्णादशार्णाश्चगोप्ताःकिंकरवैःसह ॥ ५४ ॥ तोशलाःकोशलाश्चैव
त्रैपुराःखेल्लिशास्तथा ॥ तुरगास्तुंबराश्चैववहेलानैषधैःसह ॥५५॥ अनूपास्तुंडिकेराश्चवीतिहोत्रास्त्ववंतयः ॥ सुकेशेविं-
ध्यमूलस्थास्त्विमेजनपदाःस्मृताः ॥ ५६ ॥ आद्यान्देशान्प्रवक्ष्यामःपर्वताश्रयिणस्तुये ॥ निराहाराहंसमागाकुपथा-
स्तंगणाःखशाः ॥ ५७ ॥ कुथप्रावरणाश्चैवऊर्णाःपुष्टाःसुहूहुकाः ॥ त्रिगर्त्ताश्चकिराताश्चतोमराःशशिखाद्रिकाः ॥५८॥

१ चोलाः डलयोरभेदात् ।

इमेतवोक्ताविषयाःसुविस्तराद्द्वीपेकुमारेरजनींचरेश ॥ एतेषुदेशेषुचदेशधर्मान्संकीर्त्यमानाञ्शृणुतत्त्वतोहि ॥ ५९ ॥
इतिश्रीवामनपुराणेभुवनकोशवर्णनेत्रयोदशोध्यायः ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥ ॥
ऋषयऊचुः ॥ अहिंसासत्यमस्तेयंदानंक्षांतिर्दमःशमः ॥ अकार्पण्यंचशौचंचतपश्चरजनीचर ॥ १ ॥ दशांगोराक्षसश्रेष्ठ धर्मोसौसार्ववर्णिकः ॥ ब्राह्मणस्यापिविहिताचातुराश्रम्यकल्पना ॥ २ ॥ सुकेशिरुवाच ॥ विप्राणांचातुराश्रम्यंविस्त-रान्मेतपोधनाः ॥ आचक्षध्वंनमेतृप्तिःशृण्वतःप्रतिपद्यते ॥ ३ ॥ ऋषयऊचुः ॥ कृतोपनयनःसम्यग्ब्रह्मचारीगुरौवसेत् ॥ तत्रधर्मोस्ययस्तंत्वंकथ्यमानंनिशामय ॥ ४ ॥ स्वाध्यायोऽथाग्निशुश्रूषास्नानंभिक्षाटनंतथा ॥ गुरोर्निवेद्यतच्चाद्यमनु-ज्ञातेनसर्वथा ॥ ५ ॥ गुरोःकर्मणिसोद्योगःसम्यक्प्रीत्युपपादनं ॥ तेनाहूतःपठेच्चैवतत्परोनान्यमानसः ॥ ६ ॥ ए-कंद्वौसकलान्वापिवेदान्प्राप्यगुरोर्मुखात् ॥ अनुज्ञातोवरंदत्वागुरवेदक्षिणांततः ॥ ७ ॥ गृहस्थाश्रमकामस्तुगार्हस्थ्या-श्रममावसेत् ॥ वानप्रस्थाश्रमंवापिचतुर्थंस्वेच्छयात्मनः ॥ ८ ॥ तत्रैवचगुरोर्गेहेद्विजोनिष्ठामवाप्नुयात् ॥ गुरोरभावेत-त्पुत्रेतच्छिष्येतत्सुतांविना ॥ ९ ॥ शुश्रूषन्निरभीमानोब्रह्मचर्याश्रमंवसेत् ॥ एवंजयतिमृत्युंसद्विजःसालकटंकट॥१०॥ उपावृत्तस्ततस्तस्माद्गृहस्थाश्रमकाम्यया ॥ असमानार्षकुलजाकन्योद्वाह्यानिशाचर ॥ ११ ॥ स्वकर्मणाधनंलब्ध्वा पितृदेवातिथीनपि ॥ सम्यक्संप्रीणयेद्भक्त्यासदाचाररतोद्विजः ॥ १२ ॥ सुकेशिरुवाच ॥ सदाचारेतिगदितंयुष्माभिर्म-मसुव्रताः ॥ लक्षणंश्रोतुमिच्छामिकथयध्वंतदद्यमे ॥ १३ ॥ ऋषयऊचुः ॥ सदाचारोनिगदितस्तवयोस्माभिरादरात् ॥

१ दक्षिणारूपंगुरोरभीष्टंयत्तद्दत्वेत्यर्थः । २ अयंनैष्ठिकब्रह्मचारीतिविख्यातः । ३ संसारं । ४ आचारइति सप्रोक्तः कर्माङ्गत्वेन शुद्धिदः । अशुद्धिदस्त्वनाचार इति स्मृतिः । आचारः परमो धर्म इतिच ।

लक्षणंतस्यवक्ष्यामस्तच्छृणुष्वनिशाचर ॥ १४ ॥ गृहस्थेनसदाकार्यमाचारपरिपालनं ॥ नह्याचारविहीनस्यभद्रमत्रप-
रत्रच ॥ १५ ॥ यज्ञदानतपांसीहपुरुषस्यनभूतये ॥ भवंतियःसमुल्लंघ्यसदाचारंप्रवर्त्तते ॥ १६ ॥ दुराचारोहिपुरुषोने-
हनामुत्रनंदते ॥ कार्योयत्नःसदाचारआचारोहंत्यलक्षणं ॥ १७ ॥ तस्यस्वरूपंवक्ष्यामःसदाचारस्यराक्षस ॥ शृणुष्वै-
कमनास्त्वंचयदिश्रेयोहिवांछसि ॥ १८ ॥ धर्मोस्यमूलंधनमस्यशाखाःपुष्पंचकामःफलमस्यमोक्षः ॥ असौसदाचारतरुः
सुकेशिन्संसेवितोयेनसपुण्यभोक्ता ॥ १९ ॥ ब्राह्मेमुहूर्तेप्रथमंविबुध्येदनुस्मरेद्देववरान्महर्षीन् ॥ प्राभातिकंमंगलमे-
ववाच्यंयदुक्तवान्देवपतिस्त्रिनेत्रः ॥ २० ॥ सुकेशिरुवाच ॥ किंतदुक्तंसुप्रभातंशंकरेणमहात्मना ॥ प्रभातेयत्पठन्म-
र्त्योमुच्यतेपापबंधनात् ॥ २१ ॥ ऋषयऊचुः ॥ श्रूयतांराक्षसश्रेष्ठसुप्रभातंहरोदितं ॥ श्रुत्वास्मृत्वापठित्वाचसर्वपापैःप्र-
मुच्यते ॥ २२ ॥ ब्रह्मामुरारिस्त्रिपुरांतकारीभानुःशशीभूमिसुतोबुधश्च ॥ गुरुश्चशुक्रःसहभानुजेनकुर्वंतुसर्वेममसुप्र-
भातं ॥ २३ ॥ भृगुर्वसिष्ठःक्रतुरंगिराश्चमुनिःपुलस्त्यःपुलहःसगौतमः ॥ रैभ्योमरीचिश्च्यवनोरिभुश्चकुर्वंतुसर्वेममसुप्र-
भातं॥२४॥सनत्कुमारःसनकःसनंदनःसनातनोथासुरिपिंगलौच॥सप्तस्वराःसप्तरसातलाश्चकुर्वंतुसर्वेममसुप्रभातं॥२५॥
पृथ्वीसगंधासरसास्तथापःसरूपशर्वायुर्ज्वलनःसुतेजाः ॥ नभःसशब्दंमहतासहैवयच्छंतुसर्वेममसुप्रभातं ॥ २६ ॥ स-
प्तार्णवाःसप्तकुलाचलाश्चसप्तर्षयोद्वीपवराश्चसप्त ॥ भूरादयःसप्ततथैवलोकायच्छंतुसर्वेममसुप्रभातं ॥ २७ ॥ इत्थंप्र-
भातेपरमंपवित्रंपठेत्स्मरेद्वाशृणुयाच्चभक्त्या ॥ दुःस्वप्ननाशोनघसुप्रभातंभवेच्चसत्यंभगवत्प्रसादात् ॥२८॥ ततःसमुत्था-
यविचिंतयेतधर्मंतथार्थंचविहायशय्यां ॥ उत्थायपश्चाद्धरिरित्युदीर्यगच्छेत्तदोत्सर्गविधिंहिकर्तुं ॥२९॥ नदेवगोब्राह्मण-

१ शनिराहुकेतुरितिपाठान्तरम् । अग्निमनक्षे एकवचनं पुंस्त्वंवा आर्षम् ।

वह्निमार्गेनराजमार्गेनचतुष्पथेच॥कुर्यादथोत्सर्गमपीहगोष्ठेपूर्वांपरांनैवसमाश्रितोगां॥३०॥ततस्तुशौचार्थमुपाहरेन्मृदंगुदे त्रयंपाणितलेदशैव॥तथोभयोःसप्ततथैवपादयोःलिंगेतथैकांमृदमाहरेत॥३१॥ नांतर्जलाद्राक्षसमूषकस्याबिलाच्चशौचाचरणागतान्यैः॥वाल्मीकमृच्चैववहिशुद्धयेसदाग्राह्यासदाचारविदानरेण॥३२॥उदङ्मुखःप्राग्वदनोपिविद्वान्प्रक्षाल्यपादौभुविसंनिविष्टः॥समाचमेदद्भिरफेनिलाभिर्मुखंत्रिरादौपरिमृज्यचाद्भिः॥३३॥ ततःस्पृष्ट्वाशिरःकरेणसंध्यामुपासीततततःक्रमेण ॥ केशांश्चसंशोध्यचदंतधावनंकृत्वातथादर्पणदर्शनंच ॥ ३४ ॥ कृत्वाशिरःस्नानमथांगिकंवासंपूज्यतोयेनपितॄन्सदेवान् ॥ होमंचकृत्वालभनंशुभानांकृत्वाबहिर्निर्गमनंप्रशस्तं ॥ ३५ ॥ दूर्वादधिसर्पिरथोदकुंभंधेनुंसवत्सांवृषभंसुवर्णं ॥ मृद्गोमयंस्वस्तिकमक्षतानिलाजामधुब्राह्मणकन्यकाश्च ॥ ३६ ॥ श्वेतानिपुष्पाणिचशोभनानिहुताशनंचंदनमर्कबिंबं ॥ अश्वत्थवृक्षंचसमालभेतततस्तुकार्योनिजजातिधर्मः ॥ ३७ ॥ देशानुशिष्टंकुलधर्ममग्र्यंस्वगोत्रधर्मंनहिसंत्यजेत ॥ तेनार्थसिद्धिंसमुपाचरेतनासत्प्रलापंनचसत्यहीनं ॥ ३८ ॥ ननिष्ठुरंनागमशास्त्रहीनंवाक्यंवदेत्साधुजनेनयेन ॥ निन्द्यो भवेन्नैवचधर्मभेदीसंगंनचासत्सुनरेषुकुर्यात् ॥ ३९ ॥ संध्यासुवर्ज्यंसुरतंदिवाचसर्वासुयोनीषुपराबलासु ॥ सर्वान्ययोनिष्वपराबलासुरजस्वलास्वेवजलेषुवीर ॥ ४० ॥ वृथाटनंवृथादानंवृथाचपशुमारणं ॥ नकर्त्तव्यंगृहस्थेनवृथादारपरिग्रहः ॥ ४१ ॥ वृथाटनान्नित्यहानिर्वृथादानाद्धनक्षयः ॥ वृथापशुघ्नःप्राप्नोतिपातकंनरकार्थियत् ॥ ४२ ॥ संत-

१ पूर्वपश्चिमादिगभिमुखोनकुर्यादित्यर्थः । २ गुदेत्रिवारंवामपाणौ दशवारं मृद्देया उभयोः पाणितलयोः सप्तसप्तवार तथैवपादयोः । ३ मूत्रे लिङ्गेचेका । तदुक्तं मनुना एकालिङ्गे गुदेतिस्त्रस्तथैकत्रकरेदश । उभयोः सप्तदातव्यामृदः शुद्धिमभीप्सता इति । ४ अन्यैः शौचाचरणायआगतानीतातदवशिष्टेत्यर्थः । ५ तत क्रमेण केशान्संशोध्यदंतधावनं कृत्वा दर्पणदर्शनंचकृत्वा शिरःस्नानं अथवाऽशक्तौआगिकंशिरोविनास्नानं कृत्वा संध्यामुपासीतेत्यन्वयः । ६ पुष्पाणीत्यस्यविशेषण लिंगव्यत्ययो वा पुंभुग्निन्नाशताडत्यमरोक्तेः । ७ शास्त्राविरुद्धं । ८ दुर्भाषणं । स्त्रासु । ९ वार्धक्यादिनासुरतासामर्थ्येस्त्रीस्वीकरणम् अतएवाग्रेमंतविहानिनर्णमकरणोर्वृथादारपरिग्रहफलत्वेनोक्तिः मगच्छतं ।

त्याहानिरश्लाघ्यावर्णसंकरतोभयं ॥ भेतव्यंचभवेल्लोकेतथादारपरिग्रहात् ॥ ४३ ॥ परस्वेपरदारेपुनकार्याबुद्धिरुत्त-
मैः ॥ परस्वंनरकायैवपरदाराश्चमृत्यवे ॥ ४४ ॥ नेक्षेत्परस्त्रियंनग्नांनसंभाषेततस्करान् ॥ उदक्यादर्शनंस्पर्शंसंभाषं
चविवर्जयेत् ॥ ४५ ॥ नैकासनेतथास्थेयंसोदर्यापरजायया ॥ तथासापत्नमातुश्चतथास्वदुहितृष्वपि ॥ ४६ ॥ नच
स्नायोतवैनग्नोनशयीतकदाचन ॥ दिग्वाससोऽपिनतथापरिभ्रमणमिष्यते ॥ ४७ ॥ भिन्नांश्चशय्यासनभाजनादीञ्शु-
द्धेरतःसंपरिवर्जयेत्तान् ॥ नंदासुनाभ्यंगमुपाचरेतक्षौरंचरिक्तासुजयासुमांसं ॥ ४८ ॥ पूर्णासुयोषित्परिवर्जनीयाभद्रा-
सुसर्वाणिसमाचरेच्च ॥ नाभ्यंगमर्केनचभूमिपुत्रेक्षौरंचशुक्रेरविजेचमांसं ॥ ४९ ॥ बुधेषुयोषिन्नसमाचरेतशेषेषुसर्वाणि
सदैवकुर्यात् ॥ चित्रासुहस्तेश्रवणेनतैलंक्षौरंविशाखास्वभिजित्सुवर्ज्यं ॥ ५० ॥ मूलेमृगेभाद्रपदासुमांसंयोषिन्मघाकृ-
त्तिकभोत्तरासु ॥ सदैववर्ज्यंशयनेउदक्शिरस्तथाप्रतीच्यांरजनीचरेश ॥ ५१ ॥ भुंजीतनैवेहचदक्षिणामुखोनचप्रती-
चोमभिभोजनीयं ॥ देवालयंचैत्यतरुंचतुष्पथंविद्याधिकंचापिगुरुंप्रदक्षिणं ॥ ५२ ॥ माल्यान्नपानंवसनानियत्नतोधृ-
तानिचान्यैर्नहिधारयेद्बुधः ॥ स्नायाच्छिरःस्नानतयाचनित्यंनिष्कारणंनैवमहानिशासु ॥ ग्रहोपरागेस्वजनापघातेमु-
क्त्वाचजन्मर्क्षगतेशशांके ॥ नाभ्यंगितंकायमुपस्पृशेच्चस्नातोनकेशान्विधुनीतचापि ॥ ५४ ॥ गात्राणिनैवांबरपाणि-
नाचस्नातोविमृज्याद्रजनीचरेश ॥ वसेत्सुदेशेषुसुराजकेषुसुसंहितेष्वेवजनेषुनित्यं ॥ ५५ ॥ अक्रोधनान्यायपराविमत्स-
राःकृषीवलाह्योषधिजातयश्च ॥ नतेषुदेशेषुवसेतबुद्धिमान्सदानृपोदंडरुचिस्त्वशक्तः ॥ ५६ ॥ जनोपिनित्योत्सवबद्ध-
वैरःसदाजिगीषुश्चनिशाचरेंद्र ॥ ५७ ॥ यच्चवर्ज्यंमहाबाहोसदाधर्मस्थितैर्नरैः ॥ यद्भोज्यंचसमुद्दिष्टंकथयिष्यामहेवयं

१ साक्षान्मातुरासनेस्थितौमनोविकारासंभवादनिषेधः ।

॥ ५८ ॥ भोज्यमन्नंपर्युषितंस्नेहाक्तंचिरसंभृतं ॥ अस्नेहाव्रीहयःश्लक्ष्णाविकाराःपयसस्तथा ॥५९॥ शशकःशल्यकोगो-
धासमेधामत्स्यकच्छपौ ॥ तद्वद्विदलकादीनिभोज्यानिमनुरब्रवीत् ॥ ६० ॥ मणिवस्त्रप्रवालानांतद्वन्मुक्ताफलस्यच ॥
शैलदारुमयानांचतृणमूलौषधान्यपि ॥ ६१ ॥ शूर्पधान्यतृणानांचसंहतानांचवाससां ॥ वल्कलानामशेषाणामंबुना
शुद्धिरिष्यते ॥ ६२ ॥ सस्नेहानामथोष्णेनतिलकल्केनचाविकं ॥ कार्पासिकानांवस्त्राणांशुद्धिःस्याद्बहिरंबुना ॥ ६३ ॥
नागदंतास्थिशृंगाणांतक्षणाच्छुद्धिरिष्यते ॥ पुनःपाकेनभांडानांमृन्मयानांचमेध्यता ॥ ६४ ॥ शुचिभैक्षंकारुहस्तःप-
ण्यंयोषिन्मुखंतथा ॥ रथ्यागतमविज्ञातंदासवर्गेणयत्कृतं ॥ ६५ ॥ वाक्यपूतंचिरानीतमनेकांतरितंलघु ॥ चेष्टितं
बालवृद्धानांबालस्यतुमुखंशुचि ॥ ६६ ॥ कर्मांतागारशालास्तुस्तनंधयसुतास्त्रियः ॥ वाग्विप्रुषोद्विजेंद्राणांसंतप्ताश्चां-
बुबिंदवः ॥ ६७ ॥ भूमिर्विशुद्ध्यतेखातदाहमार्जनगोक्रमैः ॥ लेपादुल्लेखनात्सेकाद्वेश्मसंमार्जनार्चनात् ॥ ६८ ॥ के-
शकीटावपन्नेऽन्नेगोघ्रातेमक्षिकान्विते ॥ मृदंबुभस्मक्षाराणिप्रक्षेप्तव्यानिशुद्धये ॥ ६९ ॥ उदुंबराणां[2]चाम्लेनक्षारेण
त्रपुसीसयोः ॥ भस्माद्भिश्चैवकांस्यानांशुद्धिःप्लावोद्रवस्यच ॥ ७० ॥ अमेध्याक्तस्यमृत्तोयैर्गंधापहरणेनच ॥ अन्येषा-
मपितद्द्रव्यैःशुद्धिर्गंधापहारतः ॥ ७१ ॥ मातुःप्रस्रवणेवत्सःशकुनिःफलपातने ॥ गर्दभोभारवाहित्वेश्वामृगग्रहणेशु-
चिः ॥ ७२ ॥ रथ्याकर्दमतोयानिगावःपथितृणानिच ॥ मारुतेनैवशुद्ध्यंतिपक्वेष्टकचितानिच ॥ ७३ ॥ पक्वंद्रोणाढक-
स्यान्नममेध्याभिप्लुतंभवेत् ॥ अग्रमुद्धृत्यसंत्याज्यंशेषस्यप्रोक्षणंस्मृतं ॥ ७४ ॥ उपवासंत्रिरात्रंवादूषितान्नस्यभोज-
ने ॥ अज्ञातेज्ञातपूर्वेवानैवशुद्धिर्विधीयते ॥ ७५ ॥ उदक्यास्नातनग्नांश्चसूतिकांत्यावसायिनः ॥ स्पृष्ट्वास्नायीतशौ-

१ अम्बुनेत्यनुवर्तनीयम् । २ ताम्राणां ।

चार्थंतथैवमृतहारिणः ॥ ७६ ॥ सस्नेहमस्थिसंस्पृश्यसवासाजलमाविशेत् ॥ आचम्यैवतुनिःस्नेहंगामालभ्यार्कमीक्ष्य च ॥७७॥ नलंघयेन्नरंनासृक्शरीरोद्वर्तनानिच ॥ गृहादुच्छिष्टविण्मूत्रपादांभांसिक्षिपेद्बहिः ॥७८॥ पंचपिंडाननुद्धृत्यन स्नायात्परवारिणि॥स्नायीतदेवखातेषुसरःसुचसरित्सुच ॥७९॥ नोद्यानादौविकालेषुप्राज्ञस्तिष्ठेत्कदाचन ॥ नालपेज्जन-विद्विष्टंवीरहीनांतथास्त्रियं॥८०॥देवतापितृसच्छास्त्रयज्ञसत्रादिनिंदकैः॥कृत्वातुस्पर्शमालापंशुद्ध्यतेर्कविलोकनात् ॥८१॥ अभोज्याःसूतिकाःषंढोमार्जारोखूचकुक्कुटाः ॥ पतितापविद्धनग्नाश्चचंडालाद्याधमाश्चये ॥८२॥ सुकेशिरुवाच ॥ भवद्भिःकी-र्त्तिताभोज्यायएतेसूतिकादयः ॥ अमीषांश्रोतुमिच्छामितत्त्वतोलक्षणानिहि ॥८३॥ ऋषयऊचुः ॥ ब्राह्मणीब्राह्मणश्चैव यावच्छेषत्वमागतौ ॥ तावुभौसूतिकेत्युक्तौतयोरन्नंविगर्हितं ॥ ८४ ॥ नजुहोत्युचितेकालेनस्नातिनददातिच ॥ पितृदे-वार्चनाद्धीनःसषंढःपरिगीयते ॥ ८५ ॥ दंभार्थंजपतेयश्चतप्यतेपठतेतथा ॥ नपरत्रार्थमुद्युक्तोमार्जारःपरिकी-र्त्तितः ॥ ८६ ॥ विभवेसतिनैवात्तिनददातिजुहोतिन ॥ तमाहुराखुंतस्यान्नंभुक्त्वाकृच्छ्रेणशुद्ध्यति ॥ ८७ ॥ सभागतानांयःसभ्यःपक्षपातंसमाश्रयेत् ॥ तमाहुःकुक्कुटंदेवास्तस्याप्यन्नंविगर्हितम् ॥ ८८ ॥ स्वधर्मंयःसमुत्सृज्य परधर्मंसमाचरेत् ॥ अनापदिसविद्वद्भिःपतितःपरिकीर्त्यते ॥ ८९ ॥ देवत्यागीपितृत्यागीगुरुवद्भुन्नकस्तथा ॥ गो-ब्राह्मणस्त्रीवधकृदपविद्धःप्रकीर्त्यते ॥ ९० ॥ येषांकुलेनवेदोस्तिनशास्त्रंनैवचव्रतं ॥ तेनग्नाःकीर्तिताःसद्भिस्तेषामन्नंवि-गर्हितं ॥९१॥ आशार्त्तानामदाताचदातुश्चप्रतिषेधकः ॥ शरणागतंयस्त्यजतिसचंडालोऽधमोजनः ॥९२॥ योबांधवैःप-रित्यक्तःसाधुभिर्ब्राह्मणैरपि॥कुंडाशीयश्चतस्यान्नंभुक्त्वाचांद्रायणंचरेत् ॥९३॥ योनित्यकर्मणोहानिंकुर्यान्नैमित्तिकस्यच॥

१ कीर्तिता अभोज्या इतिच्छेदः । संधिरार्षः ।

भुक्त्वान्नंतस्यशुद्ध्येतात्रिरात्रोपोषितोनरः ॥ ९४ ॥ नित्यस्यकर्मणोहानिःकेवलंमृतजन्मसु ॥ नतुनैमित्तिकोच्छेदःकर्त्त-
व्योहिकथंचन ॥ ९५ ॥ जातेपुत्रेपितुःस्नानंसचैलंतुविधीयते ॥ मृतेचसर्वबंधूनामित्याहभगवान्भृगुः ॥ ९६ ॥ प्रेताय
सलिलंदेयंबहिर्दग्ध्वातुगोत्रजैः ॥ प्रथमेह्निचतुर्थेवासप्तमेवास्थिसंचयं ॥ ९७ ॥ उर्द्ध्वंसंचयनात्तेषामंगस्पर्शोविधीयते ॥
सोदकैस्तुक्रियाकार्याअशुद्धैस्तुसपिंडकैः ॥ ९८ ॥ विषोद्बंधनशस्त्रांबुवह्निपातमृतेषुच ॥ बालेप्रव्राजिसंन्यासेदेशांतर-
मृतेतथा ॥ ९९ ॥ सद्यःशौचंभवेद्वीरतच्चाप्युक्तंचतुर्विधं ॥ गर्भस्रावेतदेवोक्तंपूर्वकालेनवैचरेत् ॥ १०० ॥ ब्राह्मणाना-
महोरात्रंक्षत्रियाणांदिनत्रयं ॥ षड्रात्रंचैववैश्यानांशूद्राणांद्वादशाह्निकं ॥ १ ॥ दशद्वादशमासार्द्धमाससंख्यैर्दिनैर्गतैः ॥
स्वाःस्वाःकर्मक्रियाःकुर्युःसर्वेवर्णायथाक्रमं ॥ २ ॥ प्रेतमुद्दिश्यकर्त्तव्यमेकोद्दिष्टंविधानतः ॥ सपिंडीकरणंकार्यंप्रेतआव-
त्सरान्नरैः ॥ ३ ॥ ततःपितृत्वमापन्नेदर्शपूर्णादिभिर्दिनैः ॥ प्रीणनंतस्यकर्त्तव्यंयथाश्रुतिनिदर्शनात् ॥ ४ ॥ पितुरर्थंस-
मुद्दिश्यभूमिदानादिकंस्वयं ॥ कुर्याद्येनास्यसुप्रीताःपितरोयांतिराक्षस ॥ ५ ॥ यद्यदिष्टतमंकिंचिद्यच्चास्यदयि-
तंगृहे ॥ तत्तद्गुणवतेदेयंतदेवाक्षयमिच्छता ॥ ६ ॥ अध्येतव्यास्त्रयोनित्यंवेदाश्चविदुषासदा ॥ धर्मतोधनमाहार्यंयष्ट-
व्यंचापिशक्तितः ॥ ७ ॥ यच्चापिकुर्वतोनात्माजुगुप्सामेतिराक्षस ॥ तत्कर्त्तव्यमशंकेनयन्नगोप्यंमहाजने ॥ ८ ॥ ए-
वमाचरतोलोकेपुरुषस्यगृहेसतः ॥ धर्मार्थकामसंप्राप्तिःपरत्रेहचशोभना ॥९॥ एषतूद्देशतःप्रोक्तोगृहस्थाश्रमउत्तमः ॥
वानप्रस्थाश्रमंधर्मंप्रवक्ष्यामोऽवधार्यतां ॥ ११० ॥ अपत्यसंततिंदृष्ट्वाप्राज्ञोदेहस्यचानतिं ॥ वानप्रस्थाश्रमंगच्छेदात्मनः
शुद्धिकारणं ॥ ११ ॥ तत्रारण्योपभोगैश्चतपोभिश्चात्मदर्शनं ॥ भूमौशय्याब्रह्मचर्यंपितृदेवातिथिक्रिया ॥ १२ ॥ हो-

मस्त्रिषवणस्नानंजटावल्कलधारणं ॥ वन्यस्नेहनिषेवित्वंवानप्रस्थविधिस्त्वयं ॥ १३ ॥ सर्वसंगपरित्यागोब्रह्मचर्यममानिता ॥ जितेंद्रियत्वमावासेनैकस्मिन्वसतेचिरं ॥ १४ ॥ अनारंभस्तथाहारोभिक्षान्नंनातिकोपिता ॥ आत्मज्ञानावबोधेच्छातथाचात्मावबोधनं ॥ १५ ॥ चतुर्थेचाश्रमेधर्मास्तेस्माभिःपरिकीर्त्तिताः ॥ वर्णधर्माणिचान्यानिनिशामयनिशाचर ॥ १६ ॥ गार्हस्थंब्रह्मचर्यंचवानप्रस्थंत्रयोश्रमाः ॥ क्षत्रियस्यापिगदितोयआचारोद्विजस्यहि ॥ १७ ॥ वैखानसत्वं गार्हस्थमाश्रमद्वितयंविशः ॥ गार्हस्थमाश्रमंत्वेकंशूद्रस्यक्षणदाचर ॥ १८ ॥ स्वानिवर्णाश्रमोक्तानिधर्माणीहनहापयेत् ॥ स्वधर्मक्षपणादन्यविधानाद्योद्विजस्त्रयीं ॥ १९ ॥ संतापयतितस्यासौपरिकुप्यतिभास्करः ॥ कुपितःकुलनाशाय देहरोगविवृद्धये ॥ भानुर्वैयततेतस्यनरस्यक्षणदाचर ॥ १२० ॥ तस्मात्स्वधर्मंनहिसंत्यजेच्चनहापयेच्चापिहिचात्मवंशं ॥ यःसंत्यजेच्चापिनिजंहिधर्मंतस्मैप्रकुप्येतदिवाकरस्तु ॥ २१ ॥ पुलस्त्यउवाच ॥ इत्येवमुक्तोमुनिनासुकेशीप्रणम्यतान्ब्रह्मनिधीन्महर्षीन् ॥ जगामचोत्पत्यपुरंस्वकीयंमुहुर्मुहुर्धर्ममवेक्षमाणः ॥१२२॥ इतिश्रीवामनपुराणेसुकेश्यनुशासनंनामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुलस्त्यउवाच ॥ ततःसुकेशीदेवर्षेगत्वापुरमनुत्तमं ॥ समाहूयाब्रवीत्सर्वान्राक्षसान्धार्मिकंवचः ॥ १ ॥ अहिंसासत्यमस्तेयंशौचमिंद्रियसंयमः ॥ दानंदयाचक्षांतिश्चब्रह्मचर्यममानिता ॥ २ ॥ शुभासत्याचमधुरावाङ्नित्यंसत्क्रियारतिः ॥ सदाचारनिषेवित्वंपरलोकप्रदायकाः ॥ ३ ॥ इत्यूचुर्मुनयोमह्यंधर्ममाद्यंपुरातनं ॥ सोऽहमाज्ञापयेसर्वान्क्रियतामविकल्पतः ॥ ४ ॥ पुलस्त्यउवाच ॥ ततःसुकेशिवचनात्सर्वएवनिशाचराः ॥ त्रयोदशांशतोधर्मंचक्रुर्मुदितमानसाः ॥ ५ ॥



१ इंगुदीफलजन्यतैलसेवित्वम् । २ आत्मनेपदमार्षम् । ३ स्याद्धर्ममस्त्रियां पुण्यमित्यभिधानाद्धर्मशब्दःक्लीबोपि । ४ उक्तापेक्षया त्रयोदशगुणाधिकम् ।

ततःप्रवृद्धिंसुतरामगच्छंतनिशाचराः ॥ पुत्रपौत्रार्थसंयुक्ताःसदाचारसमन्विताः ॥ ६ ॥ ततस्तुतेजसातेषांराक्षसानांम
हात्मनां ॥ गंतुंनाशक्नुवत्सूर्योनक्षत्राणिनचंद्रमाः ॥ ७ ॥ ततस्त्रिभुवनंब्रह्मन्निशाचरपुरंविभो ॥ दिवासूर्यस्यसदृशंक्षण-
दायांचचंद्रवत् ॥ ८ ॥ नज्ञायतेगतिर्व्योम्निभास्करस्यततोंबरे ॥ शशांकमिवतेजस्त्वादमन्यंतपुरोत्तमं ॥ ९ ॥ स्वांविका-
शंविमुंचंतिनिशामितिव्यचिंतयन् ॥ कमलाकरेचकमलामित्रमित्यभिगम्यहि ॥१०॥ रात्रौविकासिताब्रह्मन्विभूतिंदातुमी-
प्सिताम् ॥ कौशिकारात्रिसमयंबुद्ध्वानिरगमन्किल ॥ ११ ॥ तान्वायसास्तदाज्ञात्वादिवानिघ्नंतिकौशिकान् ॥ स्नात-
कास्त्वापगास्वेवस्नानजप्यपरायणाः ॥ १२ ॥ आकंठमग्नास्तिष्ठंतिरात्रिंज्ञात्वाऽथवासरं ॥ नव्ययुज्यंतचक्राह्वास्तदावै
पुरदर्शने ॥ १३ ॥ मन्यमानास्तुदिवसमिदमुच्चैर्ब्रुवंतिच ॥ नूनंकांताविहीनेनकेनचिच्चक्रपत्रिणा ॥ १४ ॥ उत्सृष्टंजी-
वितंशून्येफूत्कृत्यसरितस्तटे ॥ ततोऽनुकंपयाविष्टोविवस्वांस्तीव्ररश्मिभिः ॥ १५ ॥ संतापयज्जगत्सर्वंनास्तमेतिकथं
चन ॥ अन्येवदंतिचक्राह्वानूनंकश्चिन्मृतोऽभवत् ॥ १६ ॥ तत्कांतयातपस्तप्तंभर्तृशोकार्त्तयाततः ॥ आराधितस्तुभग-
वांस्तपसावैदिवाकरः॥१७॥ तेनासौशशिनंजित्वानास्तमेतिरविर्ध्रुवं॥ यज्वानोहोमशालासुसहर्त्विग्भिरथाध्वरे॥१८॥प्रा-
वर्त्तयंतकर्माणिरात्रावपिमहामुने॥ महाभागवताःपूजांविष्णोःकुर्वंतिभक्तितः॥ १९ ॥ रवौशशिनिचैवान्येब्रह्मणोन्येहरस्य
च ॥कामिनश्चाप्यमन्यंतसाधुचंद्रमसाकृतं ॥२०॥ यदियंरजनीरम्याकृतासंततकौमुदी ॥ अन्येऽब्रुवल्लोकगुरुरस्माभिश्च-
क्रभृद्वशी ॥२१॥ निर्व्याजेनमहागंधैरर्चितःकुसुमैःशुभैः ॥ सहलक्ष्म्यामहायोगीनभस्यादिचतुर्ष्वपि ॥२२॥अशून्यशयना
नामद्वितीयासर्वकामदा ॥ तेनासौभगवान्प्रीतः प्रादाच्छयनमुत्तमं ॥ २३ ॥ अशून्यंचमहाभोगैरनस्तमितशर्वरं ॥

१ वापुंसिपद्मंनलिनमित्यभिधानात्पुंस्यपिकमलशब्दः । २ उलूकाः पक्षिविशेषाः । ३ सततं निरन्तरं कौमुदी ज्योत्स्ना यस्यांसा ।

अन्येऽब्रुवन्ध्रुवंदेव्यारोहिण्याशशिनःक्षयं ॥२४॥ दृष्ट्वातप्तंतपोघोरंरुद्राराधनकाम्यया ॥ पुण्यायामक्षयाष्टम्यांवेदोक्त-
विधिनास्वयं ॥ २५ ॥ तुष्टेनशंभुनादत्तंवरंचास्यैयदृच्छया ॥ अन्येऽब्रुवंश्चंद्रमसाध्रुवमाराधितोहरिः ॥ २६ ॥ व्रतेने-
हत्वखंडेनतेनाखंडःशशीदिवि ॥ अन्येऽब्रुवञ्शशांकेनध्रुवंरक्षाकृतात्मनः ॥२७॥ पदद्वयंसमभ्यर्च्यविष्णोरमिततेजसः ॥
तेनासौदीप्तिमांश्चंद्रःपरिभूयदिवाकरं ॥ २८ ॥ अस्माकमानंदकरोदिवातपतिसूर्यवत् ॥ लक्ष्यतेकारणैरन्यैर्बहुभिःस-
त्यमेवहि ॥२९॥ शशांकनिर्जितःसूर्योनविभातियथापुरा ॥ यथापद्माकराःश्लक्ष्णारणद्भृंगगणाकुलाः ॥३०॥ विकचाःप्र-
तिभासंतेजातःसूर्योदयोध्रुवं ॥ यथाचान्येविभाव्यंतेविकचाःकुमुदाकराः ॥३१॥ अतोविज्ञायतेचंद्रउदितश्चप्रतापवान् ॥
एवंसंभाषतांतत्रसूर्योवाक्यानिनारद ॥ ३२ ॥ अमन्यतकिमेतद्धिलोकोवक्तिशुभाशुभं ॥ एवंसंचिंत्यभगवान्दध्यौध्या-
नंदिवाकरः ॥ ३३ ॥ आसमंताज्जगद्ग्रस्तंत्रैलोक्यंरजनीचरैः ॥ ततस्तुभगवाञ्ज्ञात्वातेजसोऽप्यसहिष्णुतां ॥ ३४ ॥
निशाचरस्यवृद्धिंतामचिंतयतयोगवित् ॥ ततोज्ञात्वाचतान्सर्वान्सदाचाररताञ्शुचीन् ॥ ३५ ॥ देवब्राह्मणपूजासुसंस-
क्तान्धर्मसंयुतान् ॥ ततस्तुरक्षःक्षयकृत्तिमिरद्विपकेसरी ॥ ३६ ॥ महांशुनखरःसूर्यस्तद्विघातमचिंतयत् ॥ ज्ञातवांश्चत-
तश्छिद्रंराक्षसानांदिवस्पतिः॥३७॥ स्वधर्मविच्युतिर्नामसर्वधर्मविघातकृत् ॥ ततःक्रोधाभिभूतेनभानुनारिपुभेदिना॥३८॥
तद्दीतंराक्षसपुरंतन्नष्टंचयथेच्छया ॥ सभानुनातदादृष्टःक्रोधाध्मातेनचक्षुषा ॥३९॥ निपपातांबराद्भ्रष्टःक्षीणपुण्यइवग्रहः ॥
एतदेतत्समालोक्यपुरंशालकटंकटः ॥ ४० ॥ नमोहरायशर्वायइदमुच्चैरुदीरयत् ॥ तदाक्रंदितमाकर्ण्यचारणागगनेच-
राः ॥ ४१ ॥ हाहेतिचुक्रुशुः सर्वेहरभक्तःपतत्यसौ ॥ तच्चारणवचःशर्वःश्रुतवान्सर्वगोऽव्ययः ॥ ४२ ॥ श्रुत्वासंचिंतया- 

१ पद्मसमुदायाः । २ विकचाः प्रफुल्लाः । ३ तिमिरमेव द्विपा गजास्तेषु केसरी सिंहः । ४ महांशवो महाकिरणा एव नखरा यस्य सः ।

मासकेनासौपात्यतेभुवि ॥ ज्ञातवान्देवपतिनासहस्रकिरणेनतत् ॥ ४३ ॥ पातितंराक्षसपुरंततःक्रुद्धस्त्रिलोचनः ॥
क्रुद्धस्तुभगवाञ्शंभुर्भानुमंतमपश्यत ॥४४॥ दृष्टमात्रस्त्रिनेत्रेणनिपपातततोंबरात् ॥ गगनात्सपरिभ्रष्टःपथिवायुनिषे-
विते ॥ ४५ ॥ यदृच्छयानिपतितोयंत्रमुक्तोयथोपलः ॥ ततोवायुपथान्मुक्तःकिंशुकोज्ज्वलविग्रहः ॥ ४६ ॥ निपपातांत-
रिक्षात्सवृतःकिंनरचारणैः ॥ अंशुभिर्वेष्टितोभानुःप्रविभात्यंबरात्पतन् ॥ ४७ ॥ अर्द्धपक्वंयथातालात्फलंकपिभिराहृतं ॥
निपतस्वहरिक्षेत्रेयदिश्रेयोभिवांछसि॥ ततोऽब्रवीत्पतन्नेवविवस्वांस्तांस्तपोधनान् ॥४८॥ किंतत्क्षेत्रंहरेःपुण्यंवदध्वंशीघ्र
मेवमे ॥ तमूचुर्मुनयःसूर्यंशृणुक्षेत्रंमहाफलं ॥ ४९ ॥ सांप्रतंवासुदेवस्यभावितंशंकरस्यच ॥ योगशायिनमारभ्ययाव-
त्केशवदर्शनं ॥ ५० ॥ एतत्क्षेत्रंहरेःपुण्यंनाम्नावाराणसीपुरी ॥ तच्छ्रुत्वाभगवान्भानुर्भवनेत्राभितापितः ॥ ५१ ॥
वरणायास्तथैवास्योस्त्वंतरेनिपपातह ॥ ततःप्रदह्यतिभानौनिमज्यास्यांलुलुद्रविः ॥ ५२ ॥ वरणायांसमभ्येत्यनिम-
ज्जतियथेच्छया ॥ भूयोसींवरणांभूयोभूयोपिवरणामसींम् ॥ ५३ ॥ लुलंस्त्रिनेत्रवन्ह्यार्त्तोभ्रमतेऽलातचक्रवत् ॥ एतस्मि-
न्नंतरेब्रह्मन्नृषयोयक्षराक्षसा ॥ ५४ ॥ नागाविद्याधराश्चापिपक्षिणोऽप्सरसस्तथा ॥ यावंतोभास्कररथेभूतप्रेतादयःस्थि-
ताः ॥ ५५ ॥ तावंतोब्रह्मसदनंगतावेदयितुंमुने ॥ ततोब्रह्मासुरपतिःसुरैःसार्द्धसमभ्ययात् ॥ ५६ ॥ रम्यंमहेश्वरा-
वासंमंदरंरविकारणात् ॥ गत्वादृष्ट्वाचदेवेशंशंकरंशूलपाणिनं ॥ ५७ ॥ प्रसाद्यभास्करार्थायवाराणस्यामुपानयन् ॥
ततोदिवाकरंभूयःपाणिनादायशंकरः ॥ ५८ ॥ कृत्वानामास्यलोलेतिरथमारोपयत्पुनः ॥ आरोपितेदिनकरेब्रह्माभ्ये-
त्यसुकेशिनं ॥ ५९ ॥ सबांधवंसनगरंपुनरारोपयद्दिवि ॥ समारोप्यसुकेशिंचपरिष्वज्यचशंकरः ॥ ६० ॥ प्रणम्यके-

१ असीवरणानाम्न्योर्नद्योरन्तराले । २ लुठन्नित्यर्थः । ३ लोलार्कोसावसीसंगमे काश्यां प्रसिद्धः ।

शवंदेवंवैराजंस्वगृहंगतः ॥ एवंपुरानारदभास्करेणपुरंसुकेशेर्भुविसन्निपातितं ॥ ६१ ॥ दिवाकरोभूमितलेभवेनक्षि-
प्तस्तुदृष्ट्वानलसंप्रदग्धः ॥ आरोपितोभूमितलोद्भवेनभूयोपिभानुःप्रतिभासनाय ॥ ६२ ॥ स्वयंभुवाचापिनिशाचरेंद्र-
स्त्वारोपितःखेसपुरःसबंधुः ॥ ६३ ॥ इतिश्रीवामनपुराणेसुकेशिचरितेलोलार्कजननंनामपञ्चदशोध्यायः ॥ १५ ॥
नारदउवाच ॥ यानेतान्भगवानाहकामिभिःशशिनंप्रति ॥ आराधनायदेवाभ्यांहरीशाभ्यांवदस्वतान् ॥ १ ॥ पुल-
स्त्यउवाच ॥ शृणुष्वकामिभिःप्रोक्तान्व्रतान्पुण्यान्कलिप्रिय ॥ आराधनायशर्वस्यकेशवस्यचधीमतः ॥ २ ॥ यदाषा-
ढींरविःप्राप्यव्रजतेचोत्तरायणं ॥ तदास्वपितिदेवेशोभोगिभोगेश्रियःपतिः ॥ ३ ॥ प्रतिसुप्तेविभौतस्मिन्देवगंधर्वगुह्य-
काः ॥ देवानांमातरश्चापिप्रसुप्ताश्चाप्यनुक्रमात् ॥ ४ ॥ नारदउवाच ॥ कथयस्वसुरादीनांशयनेविधिमुत्तमं ॥ सर्वा-
ननुक्रमेणैवपुरस्कृत्यजनार्दनं ॥ ५ ॥ पुलस्त्यउवाच ॥ मिथुनाभिमुखेसूर्येशुक्लपक्षेतपोधन ॥ एकादश्यांजगत्स्वामी
शयनंपरिकल्पते ॥ ६ ॥ शेषाहिभोगपर्यंकंकृत्वासंपूज्यकेशवं ॥ कृत्वापवित्रकंचैवसम्यक्संपूजयेद्द्विजान् ॥ ७ ॥
अनुज्ञांब्राह्मणेभ्यश्चद्वादश्यांप्रयतःशुचिः ॥ लब्ध्वापीतांबरधरःस्वस्थोनिद्रांसमानयन् ॥ ८ ॥ त्रयोदश्यांततःकामः
स्वपतेशयनेशुभे ॥ कदंबानांसुगंधानांकुसुमैःपरिकल्पिते ॥ ९ ॥ चतुर्दश्यांततोयक्षाःस्वपंतिसुखशीतले ॥ सौवर्ण-
पंकजकृतेसुखास्तीर्णोपधानके ॥ १० ॥ पूर्णमास्यामुमानाथःस्वपतेचर्मसंस्तरे ॥ वैयाघ्रेचजटाभारंसमुद्ग्रंथ्यान्यचर्म-
णा ॥ ११ ॥ ततोदिवाकरोराशिंसंप्रयातिचकर्कटं ॥ ततोऽमराणांरजनीभवतेदक्षिणायनं ॥ १२ ॥ ब्रह्मातथाप्रतिप-
दिनीलोत्पलमयेनघ ॥ तल्पेस्वपितिलोकानांदर्शयन्मार्गमुत्तमं ॥ १३ ॥ विश्वकर्माद्वितीयायांतृतीयायांगिरेःसुता ॥

१ स्वपते इत्यार्षम् । २ उपधानं तूपबर्हः इति कोशः ३ भवते इत्यार्षम् ।

विनायकश्चतुर्थ्यांतुपंचम्यामपिधर्मराट् ॥ १४ ॥ षष्ठयांस्कंदःप्रस्वपितिसप्तम्यांभगवान्रविः ॥ कात्यायनीतथाष्टम्यां नवम्यांकमलालया ॥ १५ ॥ दशम्यांभुजगेंद्राश्चस्वपंतेवायुभोजनाः ॥ एकादश्यांतुकृष्णायांसाध्याब्रह्मन्स्वपंतिच ॥ १६ ॥ एषक्रमस्तेगदितोनभाद्रौस्वपतांमुने ॥ स्वपत्सुतत्रदेवेषुप्रावृट्कालःसमाययौ ॥ १७ ॥ बकाःसमंबलाका-भिरारोहंतिनगोत्तमान् ॥ वायसाश्चापिकुर्वंतिनीडानिऋषिपुंगव ॥ १८ ॥ वायसाश्चस्वपंत्येवमृतौगर्भभशलसाः ॥ यस्यांतिथौप्रस्वपितिविश्वकर्माप्रजापतिः ॥ १९ ॥ द्वितीयासाशुभापुण्यासुपुण्याशयनोदिता ॥ तस्यांतिथावर्चयित्वा श्रीवत्सांकंचतुर्भुजं ॥ २० ॥ पर्यंकस्थंसमंलक्ष्म्यागंधपुष्पादिभिर्मुने ॥ ततोदेवायशय्यायांफलानिप्रक्षिपेत्सुधीः ॥ सुरभीणिनिवेद्येत्थंविज्ञाप्योमधुसूदनः ॥ २१ ॥ यथाहिलक्ष्म्यानवियुज्यसेत्वंत्रिविक्रमानंतजगन्निवास ॥ तथात्वशून्यंशयनंसदैवत्वस्माकमेवेहतवप्रसादात् ॥ २२ ॥ यथात्वशून्यंतवदेवलब्धंसमंहिलक्ष्म्याशयनंसुरेश ॥ सत्ये-नतेनामितवीर्य्यविष्णोगार्हस्थ्यनाशोनममास्तुदेव ॥ २३ ॥ इत्युच्चार्यचदेवेशंप्रसाद्यचपुनःपुनः ॥ नक्तंभुंजीतदेवर्षे तैलक्षारविवर्जितं ॥ २४ ॥ द्वितीयेह्निद्विजाग्र्यायफलंदद्याद्विचक्षणः ॥ लक्ष्मीधरःप्रीयतांमइत्युच्चार्यनिवेदयेत् ॥ २५ ॥ अनेनतुविधानेनचातुर्मास्यंव्रतंचरेत्॥यावद्वृश्चिकराशिस्थःप्रतिभातिदिवाकरः॥२६॥ततोविबुध्यंतिसुराःक्रमशःक्रमशो मुने ॥ तुलास्थेतुहरिःपूर्वंकामःपश्चाद्विबुध्यते ॥ २७ ॥ तत्रदानंद्वितीयायांमूर्तिर्लक्ष्मीधरस्यच ॥ शय्याचास्तरणो-पेतायथाविभवमात्मनः ॥ २८ ॥ एषव्रतस्तुप्रथमःप्रोक्तस्तवमहामुने ॥ यस्मिंश्चीर्णेवियोगस्तुनभवेदिहकस्यचित् ॥ २९ ॥ नभस्येमासिचतथायासाकृष्णाष्टमीशुभा ॥ युक्तामृगशिरेणैवसातुकालाष्टमीस्मृता ॥ ३० ॥ तस्यांसर्वेषु लिंगेषुतिथौस्वपितिशंकरः ॥ वसतेसन्निधानेतुतत्रपूजाऽक्षयास्मृता ॥ ३१ ॥ तत्रस्नायीतवैविद्वान्गोमूत्रेणजलेन

च ॥ स्नातःसंपूजयेत्पुष्पैर्धत्तूरस्यत्रिलोचनं ॥ ३२ ॥ धूपंकेसरनिर्यासंनैवेद्यंमधुसर्पिषी ॥ प्रीयतांमेविरूपाक्षस्त्वित्यु-
च्चार्यचदक्षिणां ॥३३॥ विप्रायदद्यान्नैवेद्यंसहिरण्यंद्विजोत्तम ॥ तद्वदाश्वयुजेमासिउपवासीजितेंद्रियः॥३४॥ नवम्यांगो-
मयस्नानंकुर्यात्पूजांतुपंकजैः ॥ धूपयेत्सर्ज्जनिर्यासैर्नैवेद्यंमधुमोदकैः ॥ ३५ ॥ कृत्वोपवासमष्टम्यांनवम्यांस्नानमाचरे-
त् ॥ प्रीयतांमेहिरण्याक्षोदक्षिणासतिलास्मृता ॥ ३६ ॥ कार्तिकेपयसास्नानंकरवीरेणचार्चनं ॥ धूपंश्रीवासनिर्यासं
नैवेद्यंमधुपायसं ॥ ३७ ॥ सनैवेद्यंचरजतंदातव्यंदानमग्रजे ॥ प्रीयतांभगवान्स्थाणुरितिवाच्यमनिष्ठुरं ॥ ३८ ॥ कृ-
त्वोपवासमष्टम्यांनवम्यांस्नानमाचरेत् ॥ मासिमार्गशिरेस्नानंरुद्रार्चादधिजास्मृता ॥ ३९ ॥ धूपंश्रीवृक्षनिर्यासंनैवे-
द्यंमधुनौदनं ॥ सन्निवेद्यारक्तशालिर्दक्षिणापरिकीर्तिता ॥ ४० ॥ नमोस्तुप्रीयतांशर्वस्त्वितिवाच्यंचपंडितैः॥ पौषेस्नानं
चहविषापूजास्यात्तगरैःशुभैः ॥ ४१ ॥ धूपोमधुकनिर्यासोनैवेद्यंमधुसक्तुकैः ॥ समुद्गादक्षिणाप्रोक्ताप्रीणनायजगद्गुरोः
॥ ४२ ॥ वाच्यंनमस्तेदेवेशत्र्यंबकेतिप्रकीर्त्तयेत् ॥ माघेकुशोदकस्नानंकुमुदेनशिवार्चनं ॥ ४३ ॥ धूपःकदंबनि-
र्यासोनैवेद्यंसतिलौदनं ॥ पयोभक्तंतुनैवेद्यंसरुक्मंप्रतिपादयेत् ॥ ४४ ॥ प्रीयतांमेमहादेवउमापतिरितीर-
रयेत् ॥ एवमेवसमुद्दिष्टंषड्भिर्मासैस्तुपारणं ॥ पारणांतेत्रिनेत्रस्यस्नपनंकारयेत्क्रमात् ॥ ५४ ॥ गो-
रोचनायासहितागुडेनदेवंसमालभ्यचपूजयेत्तु ॥ प्रीयस्वदीनोस्मिभवंतमीशंमच्छोकनाशंप्रकुरुष्वयोग्यं ॥ ४६ ॥
॥ ततस्तुफाल्गुनेमासिकृष्णाष्टम्यांयतव्रतैः ॥ उपवासंसमुदितंकर्त्तव्यंद्विजसत्तम ॥ ४७ ॥ द्वितीयेह्नित-
तःस्नानंपंचगव्येनकारयेत् ॥ पूजयेत्कुंदकुसुमैर्धूपयेच्चंदनेनच ॥ ४८ ॥ नैवेद्यंसघृतंदद्यात्ताम्रपात्रेगुडोद-

१ क्लीबत्व ।

नं ॥ दक्षिणांचद्विजातिभ्यानैवेद्यसहितांमुने ॥ ४९ ॥ वासोयुगंप्रीणयेच्चरुद्रमुच्चार्यनामतः ॥ चैत्रेचो-
दुंबरजलैःस्नानंमंदारकार्चनं ॥ ५० ॥ गुग्गुलुंमहिपाख्यंचघृताक्तंधूपयेद्बुधः ॥ समोदकंतथासर्पिःप्रीणनंविनिवेदयेत्
॥ ५१ ॥ दक्षिणाचसनैवेद्यामृगाजिनमुदाहृतं ॥ नागेश्वरनमस्तेस्तुइदमुच्चार्यनारद ॥ ५२ ॥ प्रीणनंदेवनाथायकु-
र्याच्छ्रद्धासमन्वितः ॥ वैशाखेस्नानमुदितंसुगंधकुसुमांभसा ॥ ५३ ॥ पूजनंशंकरस्योक्तंचूतमंजिरिभिर्विभोः ॥ धूपःस-
र्ज्जस्यनिर्यासोनैवेद्यंसफलंघृतं ॥ ५४ ॥ नामजप्यमपीशस्यशालघ्नेतिविपश्चिता ॥ जलकुंभान्सनैवेद्यान्ब्राह्मणायनि-
वेदयेत् ॥ ५५ ॥ सवस्त्रांश्चैवसान्नाद्यांस्तच्चित्तैस्तत्परायणैः ॥ ज्येष्ठेस्नानंचामलकैःपूजार्ककुसुमैस्तथा ॥ ५६ ॥ पू-
जयेद्रुद्रनेत्रंचवृषांकंव्युष्टिकारकं ॥ सक्तूंश्चसघृतान्देवेदध्याक्तान्विनिवेदयेत् ॥ ५७ ॥ उपानद्युगलंछत्रंदानंदद्याच्च
भक्तिमान् ॥ नमस्तेभगनेत्रघ्नपूष्णोदशननाशन ॥ ५८ ॥ इदमुच्चारयेद्भक्त्याप्रीणनायजगत्पतेः ॥ आषाढे
स्नानमुदितंश्रीफलैरर्चनंतथा ॥ ५९ ॥ धत्तूरकुसुमैःशुक्लैर्धूपयेत्सल्लिकेतथा ॥ नैवेद्यंसघृतापूपाः दक्षिणासघृतायवाः ॥ ६० ॥
नमस्तेदक्षयज्ञघ्नइदमुच्चैरुदीरयेत् ॥ श्रावणेभृंगराजेनस्नानंकृत्वार्चयेद्धरं ॥ ६१ ॥ श्रीवृक्षपत्रैःसफलैर्धूपंदद्यात्तथागु-
रुं ॥ नैवेद्यंसघृतंदद्याद्दधिपूर्वांश्चमोदकान् ॥ ६२ ॥ दध्योदनंसकृशरंमाषधानाःसशष्कुलीः ॥ दक्षिणांश्वेतवृष-
भंधेनुंचकपिलांशुभां ॥ ६३ ॥ कनकंरक्तवसनंप्रदद्याद्ब्राह्मणायहि ॥ गंगाधरेतिजप्तव्यंनामशंभोश्चपंडितैः ॥ ६४ ॥ अमी-
भिःषड्भिरपरैःर्मासैःपारणमुत्तमं ॥ एवंसंवत्सरंपूर्णंसंपूज्यवृषभध्वजं ॥ ६५ ॥ अक्षयाँल्लभतेलोकान्महेश्वरवचोय-
था ॥ इदमुक्तंव्रतंपुण्यंसर्वपापहरंशुभं ॥ स्वयंरुद्रेणदेवर्षेतत्तथानतदन्यथा ॥ ६६ ॥ इतिश्रीवामनपुराणेअशून्यश-
यनद्वितीयाकालाष्टमीव्रतवर्णनंनामषोडशोध्यायः ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुलस्त्यउवाच ॥ मासिचाश्वयुजिब्रह्मन्यदापद्मंप्रजापतेः ॥ नाभ्यानिर्यातिहितदादेवेष्वानान्यथाभवन् ॥ १ ॥
कंदर्पस्यकराग्रेतुकदंबश्चारुदर्शनः ॥ तेनतस्यपराप्रीतिःकदंबेनविवर्द्धते ॥ २ ॥ यक्षाणामधिपस्यापिमणिभद्रस्यना-
रद ॥ वटवृक्षःसमभवत्तस्मिंस्तस्यरतिःसदा ॥ ३ ॥ महेश्वरस्यहृदयेधत्तूरविटपःशुभः ॥ संजातःसचशर्वस्यरतिकृत्तस्य
नित्यशः ॥ ४ ॥ ब्रह्मणोमध्यतोदेहाज्जातोमरकतप्रभः ॥ खदिरःकंटकीश्रेयानभवद्विश्वकर्मणः ॥ ५ ॥ गिरिजायाः
करतलेकुंदगुल्मस्त्वजायत ॥ गणाधिपस्यकुंभस्थोराजतेसिंधुवारकः ॥ ६ ॥ यमस्यदक्षिणेपार्श्वेपालाशोदक्षिणोत्तरे ॥
कृष्णोदुंबरकोरौद्रोजातःक्षोभकरोऽव्ययः ॥ ७ ॥ स्कंदस्यबंधुजीवश्चरवेरश्वत्थएवच ॥ कात्यायन्याःशमीजाताबिल्वो
लक्ष्म्याःकरेऽभवत् ॥ ८ ॥ नागानांप्रभुतोब्रह्मञ्शरस्तंबोऽव्यजायत ॥ वासुकेर्विस्तृतेपुच्छेपृष्ठेदूर्वासितासिता ॥ ९ ॥
साध्यानांहृदयेजातोवृक्षोहरितचंदनः ॥ एवंजातेषुसर्वेषुतेनतत्ररतिर्भवेत् ॥ १० ॥ तत्ररम्येशुभेकालेयाशुक्लैकादशी
भवेत् ॥ तस्यांसंपूजयेद्विष्णुंतेनाखंडोऽयमूर्ज्जते ॥ ११ ॥ पत्रैःपुष्पैःफलैर्वापिगंधवर्णरसान्वितैः ॥ औषधीभिश्चमु-
ख्याभिर्यावत्स्याच्छरदागमः ॥ १२ ॥ घृतंतिलाव्रीहियवाहिरण्यंकनकादियत् ॥ मणिमुक्ताप्रवालानिवस्त्राणिवि-
विधानिच ॥ १३ ॥ रसानिस्वादुकट्वम्लकषायलवणानिच ॥ तिक्तानिचनिवेद्यानितान्यखंडानियानिच ॥ १४ ॥
तत्पूजार्थंप्रदातव्यंकेशवायमहात्मने ॥ यावत्संवत्सरंपूर्णमखंडंभवतिगृहे ॥ १५ ॥ कृतोपवासोदेवर्षेद्वितीयेहनिसं-
यतः ॥ स्नानेनयेनस्नायीततेनाखंडंहिवत्सरं ॥ १६ ॥ सिद्धार्थकैस्तिलैर्वापितेनैवोद्वर्त्तनंस्मृतं ॥ हविषापद्मनाभस्य
स्नानमेवंसमाचरेत् ॥ १७ ॥ होमस्तेनैवगदितोदानेशक्तिर्निजाद्विज ॥ पूजयेद्वाथकुसुमैःपादादारभ्यकेशवं ॥ १८ ॥
धूपयेद्विविधंधूपंयेनस्याद्वत्सरंपरं ॥ हिरण्यरत्नवासोभिःपूजयेच्चजगद्गुरुं ॥ १९ ॥ रागखांडवचोष्याणिहविष्याणि

निवेदयेत् ॥ ततःसंपूज्यदेवेशंपद्मनाभंजगद्गुरुं ॥ २० विज्ञापयेन्मुनिश्रेष्ठमंत्रेणानेनसुव्रत ॥ नमोस्तुतेपद्मनाभपद्मा-
धवमहाद्युते ॥ २१ ॥ धर्मार्थकाममोक्षामेह्यखंडाःसंतुकेशव ॥ विकासिपद्मपत्राक्षयथाखंडोऽसिसर्वतः ॥ २२ ॥ ते-
नसत्येनधर्माद्यास्त्वखंडाःसंतुकेशव ॥ एवंसंवत्सरंपूर्णंसोपवासोजितेंद्रियः ॥२३॥ अखंडंपारयेद्ब्रह्मन्तंव्रतंसर्ववस्तुपु ॥
अस्मिंश्चीर्णेहिव्यक्तंतुपरितुष्यंतिदेवताः ॥२४॥ धर्मार्थकाममोक्षाद्यास्त्वक्षयाःसंभवंतिहि ॥ एतानितेमयोक्तानिव्रतान्यु-
क्तानिकामिभिः ॥ २५ ॥ प्रवक्ष्याम्यधुनात्वेतद्वैष्णवंपंजरंशुभं ॥ नमोनमस्तेदेवेशचक्रंगृह्यसुदर्शनं ॥२६॥ प्राच्यांरक्षस्व
मांविष्णोत्वामहंशरणंगतः ॥ गदांकौमुदकींगृह्यपद्मनाभामितद्युते ॥२७॥ याम्यांरक्षस्वमांविष्णोत्वामहंशरणंगतः ॥ प-
द्ममादायसगदंनमस्तेपुरुषोत्तम॥२८॥प्रतीच्यांरक्षमांविष्णोत्वामहंशरणंगतः॥ मुसलंशातनंगृह्यपुंडरीकाक्षरक्षमां ॥२९॥
उत्तरस्यांजगन्नाथभवंतंशरणंगतः ॥ शार्ङ्गमादायचधनुरस्त्रंनारायणहरे ॥ ३० ॥ नमस्तेरक्षरक्षोघ्नईशान्यांशरणंगतः ॥
पांचजन्यंमहाशंखमनुबोध्यचपंकजं ॥३१॥ प्रगृह्यरक्षमांविष्णोआग्नेय्यांयज्ञसूकर ॥ चर्मसूर्यशतंगृह्यखड्गंचर्मसमंतथा
॥ ३२ ॥ नैर्ऋत्यांमांचरक्षस्वदिव्यमूर्तेनृकेसरिन् ॥ वैजयंतींप्रगृह्यत्वंश्रीवत्संकंठभूपणं ॥ ३३ ॥ वायव्यांरक्षमांदे-
वअश्वशीर्षनमोस्तुते ॥ वैनतेयंसमारुह्यअंतरिक्षेजनार्दन ॥ ३४ ॥ मांत्वंरक्षाजितसदानमस्तेत्वपराजित ॥ विशाला-
क्षंसमारुह्यरक्षमांत्वंरसातले ॥ ३५ ॥ अकूपारनमस्तुभ्यंमहामीननमोस्तुते ॥ करशीर्षांघ्रिसर्वेषुतथाष्टबाहुपंजरं ॥३६॥
कृत्वारक्षस्वमांदेवनमस्तेपुरुषोत्तम ॥ एतदुक्तंभगवतावैष्णवंपंजरंमहत् ॥ ३७ ॥ पुरारक्षार्थमीशेनकात्यायन्यैद्विजो-
त्तम ॥ नाशयामाससायत्रदानवंमहिषासुरं ॥ ३८ ॥ नमरंरक्तबीजंचतथान्यान्सुरकंटकान् ॥ नारदउवाच ॥ कश्चा-

१ आचरिते ।

सौमहिषोनामरक्तबीजादयश्चके ॥ कासौकात्यायनीनामयाजघ्नेमहिषासुरं ॥ ३९ ॥ नमरंरक्तबीजंचतथान्यान्सुरकंट-
कान् ॥ कश्चासौमहिषोनामकास्तेजातश्चकस्यसः ॥ ४० ॥ कश्चासौरक्तबीजाख्योनमरःकस्यचात्मजः ॥ एतद्विस्त-
रतस्तातयथावद्वक्तुमर्हसि ॥ ४१ ॥ पुलस्त्यउवाच ॥ श्रूयतांसंप्रवक्ष्यामिकथांपापप्रणाशनीं ॥ सर्वदावरदादुर्गायेयं-
कात्यायनीमुने ॥ ४२ ॥ पुरासुरवरौरौद्रौजगत्क्षोभकरावुभौ ॥ रंभश्चैवकरंभश्चद्वावास्तांसुमहाबलौ ॥ ४३ ॥ तावपु-
त्रौचदेवर्षेपुत्रार्थंतेपतुस्तपः ॥ बहून्वर्षगणान्दैत्यौस्थितौपंचनदेजले ॥ ४४ ॥ तत्रैकोजलमध्यस्थोद्वितीयोप्यग्निपंचमः ॥
करंभश्चैवरंभश्चयक्षंमालवटंप्रति ॥ ४५ ॥ एकंनिमग्नंसलिलेग्राहरूपेणवासवः ॥ चरणाभ्यांसमादायनिजघानयथे-
च्छया ॥ ४६ ततोभ्रातरिनष्टेचरंभःकोपपरिप्लुतः ॥ वह्नौस्वशीर्षंसंछिद्यहोतुमैच्छन्महाबलः ॥४७॥ ततःप्रगृह्यकेशेषु
खड्गंचरविसप्रभं ॥ छेत्तुकामोनिजंशीर्षंवह्निनाप्रतिषेधितः ॥ ४८ ॥ उक्तश्चमादैत्यवरनाशयात्मानमात्मना ॥ दुस्तरा-
परवध्यापिस्ववध्याप्यतिदुस्तरा॥४९॥ यच्चप्रार्थयसेवीरतद्ददामियथेप्सितं ॥ माम्रियस्वमृतस्येहनष्टाभवतिवैकथा॥५०॥
ततोब्रवीद्वचोरंभोवरंचेन्मेददासिहि ॥ त्रैलोक्यविजयीपुत्रःस्यान्मेत्वत्तेजसाऽधिकः॥ ५१ ॥ अजेयोदैवतैःसर्वैःयुधिदैत्य-
श्चपावक ॥ महाबलोवायुरिवकामरूपीकृतास्त्रवित् ॥ ५२ ॥ तंप्रोवाचकविर्ब्रह्मन्बाढमेवंभविष्यति ॥ यस्यांचित्तंसमा-
लंब्यकरिष्यतिततोऽसुरः ॥ ५३ ॥ इत्येवमुक्तोदेवेनवह्निनादानवोययौ ॥ द्रष्टुंमालवटंयक्षंयक्षैश्चपरिवारितं ॥ ५४ ॥
तेषांपद्मनिधिस्तत्रवसतेनान्यचेतनः ॥ गजाश्चमाहिषाश्वाश्वागावोजाविपरिप्लुताः ॥ ५५ ॥ तान्दृष्ट्वैवतदाचक्रेभावंदा-
नवपार्थिवः ॥ महिष्यांभावयुक्तायांत्रिहायण्यांतपोधन ॥ ५६ ॥ सासमागाच्चदैत्येंद्रंकामयंतीतरस्विनी ॥ सचापिग-
मनंचक्रेभवितव्यप्रणोदितः ॥ ५७ ॥ तस्यांसमभवद्गर्भस्तांप्रगृह्याथदानवः ॥ पातालंप्रविवेशाथततःस्वभवनंगतः

॥ ५८ ॥ पृष्टश्चदानवैःसर्वैःपरित्यक्तश्चबंधुभिः ॥ अकार्यकारीइत्येवंभूयोमालवटंगतः ॥ ५९ ॥ सापितेनैवपतिनामहिषीचारुदर्शना ॥ समंजगामतत्पुण्यंयक्षमंडलमुत्तमं ॥ ६० ॥ ततस्तुवसतस्तस्यश्यामासाधुवनेमुने ॥ अजीजनत् सुतंशुभ्रंमहिषंकामरूपिणं ॥ ६१ ॥ एतामृतुमतींजातांमहिषोऽन्योददर्शतां ॥ साचाभ्यगादितिवरंरक्षंतीशीलमात्मनः ॥ ६२ ॥ तमुन्नामितनासंचमहिषंवीक्ष्यदानवः ॥ खड्गंनिष्कृष्यतरसामहिषंतमुपाद्रवत् ॥ ६३ ॥ तेनापिदैत्यस्तीक्ष्णाभ्यांशृंगाभ्यांहृदिताडितः ॥ निर्भिन्नहृदयोभूमौपपातचममारच ॥ ६४ ॥ मृतेभर्त्तरिसाश्यामायक्षाणांशरणंगता ॥ रक्षितागुह्यकैःसार्धंनिवार्यमहिषंततः ॥ ६५ ॥ ततोनिवारितोयक्षैर्हयारिर्मदनातुरः ॥ निपपातसरोदिव्यंततोदैत्योभवन्मृतः ॥ ६६ ॥ नमरोनामविख्यातोमहाबलपराक्रमः ॥ यक्षानाश्रित्यतस्थौसाकालंगमयतीवने ॥ ६७ ॥ सचदैत्येश्वरोयक्षैर्मालवटपुरस्सरैः ॥ चितामारोपितःसाचश्यामातंचारुहत्पतिं ॥ ६८ ॥ ततोग्निमध्यादुत्तस्थौपुरुषोरौद्रदर्शनः ॥ व्यद्रावयत्सतान्यक्षान्खड्गपाणिर्भयंकरः ॥ ६९ ॥ ततोहतास्तुमहिषाःसर्वएवमहात्मना ॥ विनासंरक्षितारंहिमहिषंरंभनंदनं ॥ ७० ॥ सनामतःस्मृतोदैत्योरक्तबीजोमहामुने ॥ योऽजयत्सर्वतोदेवान्सेंद्ररुद्रार्कमारुतान् ॥ ७१ ॥ एवंप्रभावोदनुपुंगवोऽसौतेजोधिकस्तत्रबभौहयारिः ॥ राज्येऽभिषिक्तश्चमहासुरेंद्रैर्विनिर्जितैःशंबरतारकाद्यैः ॥ ७२ ॥ अशक्नुवद्भिःसहितैश्चदेवैःसलोकपालैःसहुताशभास्करैः ॥ स्थानानिमुक्तानिशशांकभास्करैस्तमश्चदूरेप्रतियोजितंच ॥ ७३ ॥ इतिश्रीवामनपुराणेमहिषासुरोत्पत्तिर्नामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥ ॥ ॥

पुलस्त्यउवाच ॥ ततस्तुदेवामहिषेणनिर्जिताःस्थानानिसंत्यज्यसवाहनायुधाः ॥ जग्मुःपुरस्कृत्यपितामहंतेद्रष्टुंगदाचक्रधरंश्रियःपतिं ॥ १ ॥ गत्वात्वपश्यंश्चमिथःसुरोत्तमौस्थितौखगेंद्रासनशंकरौहि ॥ दृष्ट्वाप्रणम्यैवचसिद्धिसाधकौन्यवेदयं-

स्तन्महिषारिचेष्टितं ॥ २ ॥*प्रभोऽखिसूर्येंद्वनिलाग्निवेधसांजलेशशक्रादिसुराधिकारान् ॥ आक्रम्यनाकात्तुनिराकृताव-
यंकृतावनिस्थामहिषासुरेण ॥ ३ ॥ एतद्भवंतौशरणागतानांश्रुत्वावचोब्रूतहितंसुराणां ॥ नचेद्व्रजामोधरसातलंहिसं-
काल्यमानायुधिदानवेन ॥ ४ ॥ इत्थंमुरारिःसहशंकरेणश्रुत्वावचोविप्लुतचेतसांहि ॥ दृष्ट्वात्रचक्रेसहसैवकोपंकालाग्नि-
कल्पोहरिरव्ययात्मा ॥ ५ ॥ ततोऽनुकोपान्मधुसूदनस्यसशंकरस्यापिपितामहस्य ॥ तथैवशक्रादिषुदैवतेषुमहर्द्धिते-
जोवदनाद्विनिःसृतं ॥ ६ ॥ तच्चैकतांपर्वतकूटसन्निभंजगामतेजःप्रवराश्रमेमुने ॥ कात्यायनस्याप्रतिमेनतेजसामहर्षि-
णातेजउपाकृतंच ॥ ७ ॥ तेनर्षिसृष्टेनचतेजसावृतंज्वलत्प्रकाशार्कसहस्रतुल्यं ॥ तस्माच्चजातातरलायताक्षीकात्याय-
नीयोगविशुद्धदेहा ॥ ८ ॥ माहेश्वराद्वक्त्रमथोबभूवनेत्रत्रयंपावकतेजसाच ॥ याम्येनकेशाहरितेजसाचभुजास्तथा-
ष्टादशसंप्रजज्ञिरे ॥ ९ ॥ सौम्येनयुग्मंस्तनयोःसुसंहितंमध्यंतथैंद्रेणचतेजसाभवत् ॥ ऊरूरुजंघेचनितंबसंयुतौजातौज-
लेशस्यतुतेजसाहि ॥ १० ॥ पादौचलोकप्रपितामहस्यपद्माभिकोशप्रतिमौबभूवतुः ॥ दिवाकराणामपितेजसांगुलीः
करांगुलीर्वासवतेजसाच ॥ ११ ॥ प्रजापतीनांदशनाश्चतेजसायाक्षेणनासाश्रवणौचमारुतात् ॥ साध्येनचभ्रूयुगुलं
सुकांतिमत्कंदर्पबाणासनसन्निभंबभौ ॥ १२ ॥ तथापितेजोत्तममुत्तमंमहन्नाम्नापृथिव्यामभवत्प्रसिद्धा ॥ कात्या-
यनीत्येवतदाबभौसा नाम्नाचतेनैवजगत्प्रसिद्धा ॥ १३ ॥ ददौत्रिशूलंवरदस्त्रिशूलीचक्रंमुरारिर्वरुणश्चशंखं ॥ शक्तिं
हुताशःश्वसनश्चचापंतूणंतथाऽक्षय्यशरौविवस्वान् ॥ १४ ॥ वज्रंतथेंद्रःसहघंटयाचयमोथदंडंधनदोगदांच ॥ ब्रह्मा-
क्षमालांसकमंडलुंचकालोसिमुग्रंसहचर्मणाच ॥ १५ ॥ हारंचसोमःसहचामरेणमालांसमुद्रोहिमवान्मृगेंद्रं ॥ चूडा-



*एतत्कथानकं मार्कण्डेयपुराणाननुकूलम् ।१ कृताः अवनिस्था इतिच्छेदः संधिरार्षः । २ पीवरे ऊरुजंघे इत्यर्थः । ३ प्रथमाबहुवचनमार्षम् ।

मणिंकुंडलमर्द्धचंद्रंप्रादात्कुठारंसुरशिल्पकर्त्ता ॥ १६ ॥ गंधर्वराजोरजतानुलिप्तंपानस्यपूर्णंसद्दशंचभाजनम् ॥ भुजंग-
हारंभुजगेश्वरोपिअम्लानपुष्पामृतवःस्त्रजंच ॥ १७ ॥ तदातितुष्टासुरसत्तमासाअट्टाट्टहासंमुमुचेत्रिनेत्रा ॥ तांतुष्टुवुर्दे-
ववराःसहेंद्राःसविष्णुरुद्रेंद्वनिलाग्निभास्कराः ॥ १८ ॥ नमोस्तुदेव्यैसुरपूजितायैयासंस्थितायोगविशुद्धदेहा ॥ नि-
द्रास्वरूपेणमहींवितत्यतृष्णात्रपाक्षुद्भयदाचकांतिः ॥ १९ ॥ श्रद्धास्मृतिःपुष्टिरथोक्षमाचछायाचशक्तिःकमलालयाच ॥
मेधास्मृतिःक्षांतिरथेहमायानमोस्तुदेव्यैभवितव्यतायै ॥२०॥ ततःस्तुतादेववरैर्मृगेंद्रमारुह्यदेवीप्रगतावनाव्यम् ॥ विं-
ध्यंमहापर्वतमुच्चशृंगंचकारयंनिम्नतरंत्वगस्त्यः ॥ २१ ॥ नारदउवाच ॥ किमर्थमद्रिंभगवानगस्त्यस्तंनिम्नशृंगंकृत-
वान्महर्षिः ॥ कस्मैकृतेकेनचकारणेनएतद्वदस्वामलसत्त्ववृत्ते ॥ २२ ॥ पुलस्त्यउवाच ॥ पुराहिविंध्येनदिवाकर-
स्यगतिर्निरुद्धागगनेचरस्य ॥ रविस्ततःकुंभभवंसमेत्यहोमावसानेवचनंबभाषे ॥ २३ ॥ समागतोऽहंद्विजदूरतस्त्वांकु-
रुष्वविश्वोद्धरणंमुनींद्र ॥ ददस्वदानंममयन्मनीषितंचरामियेनत्रिदिवेषुनिर्वृतः ॥ २४ ॥ इत्थंदिवाकरवचोगुणसंप्रयो-
गिश्रुत्वातदाकलशजोवचनंबभाषे ॥ दानंददामितवयन्मनसस्त्वभीष्टंनार्थीप्रयातिविमुखोममकश्चिदेव ॥ २५ ॥ श्रुत्वा
वचोऽमृतमयंकलशोद्भवस्यप्राहप्रभुःकरतलंविनिधायमूर्ध्नि ॥ एषोद्यमेगिरिवरःप्ररुणद्धिमार्गंविंध्यश्चनिम्नकरणेभगवन्
यतस्व ॥ २६ ॥ इतिरविवचनाद्‌थाहकुंभजन्माकृतमितिविद्धिमयाहिनीचशृंगं ॥ तवकिरणजितोभविष्यतिमहीध्रोमम
चरणसमाश्रितस्यकाव्यथाते ॥ २७ ॥ इत्येवमुक्त्वाकलशोद्भवस्तुसूर्यंहिसंस्तूयविनम्रभक्त्या ॥ जगामसंत्यज्यहिदं-
डकंतुविंध्याचलंवृद्धवपुर्महर्षिः ॥ २८ ॥ गत्वावचःप्राहमुनिर्महीध्रंयाम्येमहातीर्थवरंसुपुण्यं ॥ वृद्धोऽस्म्यशक्तश्चतवाधि-
रोढुंतस्माद्भवान्नीचतरोस्तुसद्यः ॥ २९ ॥ इत्येवमुक्तोमुनिसत्तमेनसनीचशृंगस्त्वभवन्महीध्रः ॥ समाक्रमच्चापिमहर्षिं-

मुख्यः प्रोल्लंघ्यविंध्यंत्विदमाहशैलं ॥ ३० ॥ यावन्नभूयोनिजमाव्रजामिमहाश्रमंधौतवपुःसुतीर्थात् ॥ त्वयानतावत्त्विहव-
र्धितव्यंनचेद्विशस्येहमवज्ञयाते ॥ ३१ ॥ इत्येवमुक्त्वाभगवाञ्जगामादिशंसयाम्यांसहसांतरिक्षम् ॥ आक्रम्यतस्थौस
हितांतदाशांकालेव्रजाम्यत्रयदामुनींद्रः ॥ ३२ ॥ तत्राश्रमंरम्यतरंहिकृत्वासंशुद्धजांबूनदतोरणांतं ॥ तत्राथनिक्षिप्य-
विदर्भपुत्रींस्वमाश्रमंसौम्यमुपाजगाम ॥ ३३ ॥ ऋतावृतौपर्वकार्येषुनित्यंतमंबरेह्याश्रममावसत्सः ॥ शेपंहिकालं
सहिदंडकस्थस्तपश्चचारामितकांतिमान्मुनिः ॥ ३४ ॥ विंध्योपिदृष्ट्वागमनेमहाश्रमंवृद्धिंनयात्येवभयान्महर्षेः ॥ नासौ
निवृत्तेतिमतिंविधायससंस्थितोनीचतराग्रशृंगः ॥ ३५ ॥ एवंत्वगस्त्येनमहाचलेंद्रःसनीचशृंगोहिकृतोमहर्षे ॥ तस्यो-
र्ध्वशृंगेमुनिसंस्तुतासादुर्गास्थितादानवनाशनार्थं ॥ ३६ ॥ देवाश्चसिद्धाश्चमहोरगाश्चविद्याधराभूतगणाश्चसर्वे ॥ स-
र्वाप्सरोभिःप्रतिरामयंतःकात्यायनंतस्थुरपेतशोकाः ॥ ३६ ॥ इतिश्रीवामनपुराणेदेवीमाहात्म्येऽष्टादशोऽध्यायः ॥१८॥
पुलस्त्यउवाच ॥ ततस्तुतांतत्रतदावसंतींकात्यायनींशैलवरस्यशृंगे ॥ अपश्यतांदानवसत्तमौद्वौचंडश्चमुंडश्चतपस्विनीं
भृशम् ॥ १ ॥ दृष्ट्वैवशैलादवतार्यशीघ्रमाजग्मतुःस्वंभवनंसुरारी ॥ दृष्ट्वाचतुस्तौमहिषासुरस्यदूताविदंचंडमुडौदितीशं
॥ २ ॥ स्वस्थोभवान्किंत्वसुरेंद्रसांप्रतमागच्छपश्यामचतत्रविंध्यं ॥ तत्रास्तिदेवीसुमहानुभावाकन्यासुरूपासुरसुंद-
रीणां ॥ ३ ॥ जितस्तयातोयधरोऽलकैर्हिजितःशशांकोवदनेनतन्व्या ॥ नेत्रैस्त्रिभिस्त्रीणिहुताशनानिजितानिकंठेनजि-
तस्तुशंखः ॥ ४ ॥ स्तनौसुवृत्तावथनिम्नचूचुकौस्थितौविजित्यैवगजस्यकुंभौ ॥ त्वांसर्वजेतारमितिप्रतर्क्यकुचौस्मरे-
णैवकृतौसुदुर्गौ ॥ ५ ॥ पीनाःसशस्त्राःपरिघोपमाश्चभुजास्तथाऽष्टादशभांतितस्याः ॥ पराक्रमंवैभवतोविदित्वाकामे-



१ निवृत्तइतिच्छेदः । संधिरार्षः । २ क्लैब्यमार्षम् ।

नयंत्राइवतेकृतास्तु ॥ ६ ॥ मध्यंचतस्यास्त्रिवलीतरंगंविभातिदैत्येंद्रसुरोमराजि ॥ भयात्तवारोहणकातरस्यकामेनसो-
पानमिवप्रयुक्तं ॥ ७ ॥ सारोमराजीनितरांहितस्याविराजतेपीनकुचावलग्ना ॥ आरोहणेत्वद्भयकातरस्यस्वेदप्रवाहो-
सुरमन्मथस्य ॥ ८ ॥ नाभिर्गभीरानितरांविभातिप्रदक्षिणास्याःपरिवर्त्तमाना ॥ तस्यैवलावण्यगृहस्यमुद्राकंदर्प-
राज्ञास्वयमेवदत्ता ॥ ९ ॥ विभातिरम्यंजघनंमृगाक्ष्याःसमंततोमेखलयावघृष्टं ॥ मन्येह्यहंकामनराधिपस्यप्राकारगु-
ह्यंनगरंसुदुर्गं ॥ वृत्तावरोमौचमृदूकुमार्याःशोभेतऊरूसमनुत्तमौहि ॥ १० ॥ आवासनार्थंमकरध्वजेनजनस्यदेशाविव-
वसन्निविष्टौ ॥ तज्जानुयुग्मंमहिषासुरेंद्रह्यत्युन्नतंभातितथैवतस्याः ॥ ११ ॥ सृष्ट्वाविधाताहिनिरूपणायश्रांतस्तथाहस्त-
तलौददौहि ॥ जंघेसुवृत्तेपिचरोमहीनेशुभेचदैत्येश्वरतेतदीये ॥ १२ ॥ आगम्यलोकानिवनिर्मितौयैःसूपंविजित्यैवकृते
वरेहि ॥ पादौचतस्याःकमलोदराभौप्रयत्नतस्तौहिकृतौविधात्रा ॥ १३ ॥ आज्ञायितस्यानखरत्नमालानक्षत्रमालाग-
गनेयथैव ॥ एवंस्वरूपादनुनाथकन्यामहोग्रशस्त्राणिचधारयंती ॥ १४ ॥ दृष्टायथेष्टंनचवेद्मिकासासुतातथाकस्यचिदे-
वबाला ॥ तद्भूतलेरत्नमनुत्तमंस्थितंस्वर्गंपरित्यज्यमहासुरेंद्र ॥ १५ ॥ गत्वाऽथविंध्यंस्वयमेवपश्यकुरुष्वयत्तेभिमतंक्षमं
च ॥ श्रुत्वैवताभ्यांमहिषासुरस्तुदेव्याःप्रवृत्तिंकमनीयरूपां ॥ १६ ॥ चक्रेमतिंनात्रविचार्यमस्तिइत्येवमुक्त्वामहिषो
महर्षे ॥ प्रागेवपुंसस्तुशुभाशुभानिस्थानेविधात्राप्रतिपादितानि ॥ १७ ॥ यस्मिन्यथायातिचसोथविप्रसनीयतेवाव्रज-
तिस्वयंवा ॥ ततोनमुंडंनमरंसचंडंबिडालनेत्रंकपिलंसबाष्कलं ॥ १८ ॥ उग्रायुधंविक्षुररक्तबीजौसमादिदेशाथमहासु-
रेंद्रः ॥ आहत्यभेरींरणकर्कशास्तेस्वर्गंपरित्यज्यमहीधरंतु ॥ १९ ॥ आगम्यमूलेशिबिरंनिवेश्यतस्थुश्चसज्जादनुनंदना
स्ते ॥ ततस्तुदैत्योमहिषासुरेणसंप्रेषितोदानवयूथपालः ॥ २० ॥ मयस्यपुत्रोरिपुसैन्यमर्दीसदुंदुभिर्दुंदुभिनिस्वनस्तु ॥

अभ्येत्यदेवींगगनस्थितोपिसदुंदुभिर्वाक्यमुवाचविप्र ॥ २१ ॥ कुमारिदूतोस्मिमहासुरस्यरंभात्मजस्याप्रतिमस्य
युद्धे ॥ कात्यायनींदुंदभिमित्युवाचएह्येहिदैत्येंद्रभयंविमुच्य ॥२२॥ वाक्यंचयद्रंभसुतोबभाषेवदस्वतत्सत्यमपेतमोहः ॥
ततस्तुवाक्याद्दितिजःशिवायास्त्यक्त्वाम्बरंभूमितलेनिषण्णः ॥ सुखोपविष्टःपरमासनेचरंभात्मजेनोक्तमुवाचवाक्यं॥२३॥
दुंदुभिरुवाच ॥ एवंसमाज्ञापयतेसुरारिस्त्वांदेविदैत्योमहिषासुरस्तु ॥ यथाऽमराहीनबलाःपृथिव्यांभ्रमंतियुद्धेविजिता
मयाते ॥ २४ ॥ स्वर्गोमहीवायुपथाश्चवश्याःपातालमन्येचमहीश्वराद्याः ॥ इंद्रोस्मिरुद्रोस्मिदिवाकरोस्मिसर्वेषुलोके-
ष्वधिपोऽस्मिबाले ॥ २५ ॥ नसोस्तिनाकेनमहीतलेवास्वर्गेपिपातालतलेपियुद्धे ॥ सर्वाणिमामद्यसमागतानिवीर्याणिजि-
तानीहविशालनेत्रे ॥२६॥ स्त्रीरत्नमग्र्यंभवतीचकन्याप्राप्तोस्मिशैलंतवकारणेन॥ तस्माद्भजस्वैवजगत्पतिंमांपतिस्तवार्हो-
स्मिविभुःप्रभुश्च ॥ २७ ॥ पुलस्त्यउवाच ॥ इत्येवमुक्तादितिजेनदुर्गाकात्यायनीप्राहमयस्यपुत्रं ॥ सत्यंप्रभुर्दानव-
राट्पृथव्यांसत्यंचयुद्धेविजितामराश्च ॥ २८ ॥ किंत्वस्तिदैत्येशकुलेस्मदीयेधर्मोहिशुल्काख्यइतिप्रसिद्धः ॥ तंचेत्प्र-
दद्यान्महिषोममाद्यभजामिसत्येनपतिंहयारिं ॥२९॥ श्रुत्वाथवाक्यंमयजोब्रवीच्चशुल्कंवदस्वायतपत्रनेत्रे ॥ दद्यात्स्वमू
र्धानमपित्वदर्थेकिंनामशुल्कंचयदस्त्यलभ्यं ॥३०॥ पुलस्त्यउवाच॥इत्येवमुक्तादनुनायकेनकात्यायनीसस्वनमुन्नदित्वा॥
विहस्यचैतद्वचनंबभाषेहितायसर्वस्यचराचरस्य ॥ ३१ ॥ श्रीदेव्युवाच ॥ कुलेऽस्मदीयेशृणुदैत्यशुल्कंकृतंहियत्पूर्वतरैः
प्रसह्य ॥ योजेष्यतेऽस्मत्कुलजांरणाग्रेतस्याःपतिःसोपिभविष्यतीति ॥ ३२ ॥ पुलस्त्यउवाच ॥ तच्छ्रुत्वावचनंदेव्या
दुंदुभिर्दानवेश्वरः ॥ गत्वानिवेदयामासमहिषाययथायथं ॥ ३३ ॥ सचाभ्यगान्महातेजाःसर्वदैत्यपुरस्सरः ॥ आज-
ग्मुर्विंध्यशिखरंयोद्धुकामःसरस्वतीं ॥ ३४ ॥ ततःसेनापतिर्दैत्योविक्षुरोनामनारद ॥ सेनाग्रगामिनंचक्रेनमरंनामदा-

नवम् ॥३५॥ सचापितेनाधिकृतश्चतुरंगंसमूर्जितं ॥ बलैकदेशमादायदुर्गांदुद्राववेगतः ॥ ३६ ॥ तमापतंतंवीक्ष्याथदे-
वाब्रह्मपुरोगमाः ॥ ऊचुर्वाक्यंमहादेवींवर्मबंधनमाश्रय ॥ ३७ ॥ अथोवाचसुरान्दुर्गानवध्नामिचदेवताः ॥ कस्त्वंकोऽत्र
संतिष्ठेन्ममाग्रेदानवाधमः ॥ ३८ ॥ यदानदेव्याकवचंकृतंशस्त्रनिवारणं ॥ तदारक्षार्थमस्यास्तुविष्णुपंजरमुक्तवान्
॥ ३९ ॥ सातेनरक्षिताब्रह्मन्दुर्गादानवसत्तमं ॥ अवध्यंदैवतैःसर्वैर्महिषंप्रत्यपेषयत् ॥ ४० ॥ एवंपुरादेववरेणशंभु-
नातद्वैष्णवंपंजरमायताक्ष्याः ॥ प्रोक्तंतयाचापिहिपादघातैर्निषूदितोऽसौमहिषासुरेंद्रः ॥ ४१ ॥ एवंप्रभावोहि[illegible]ष्णु-
पंजरःसर्वासुरक्षास्वधिकोहिगीतः ॥ कस्तस्यकुर्याद्युविदर्पहानिंयस्यस्थितश्चेतसिचक्रपाणिः ॥ ४२ ॥ इतिश्रीवामनपु-
राणेदेवीमाहात्म्यपरिकीर्तनंनामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥ ॥
नारदउवाच ॥ कथंकात्यायनीदेवीसानुगंमहिषासुरं ॥ सवाहनंहतवतीतथाविस्तरतोवद ॥ १ ॥ अयंचसंशयोब्रह्मन्
हृदिमेपरिवर्त्तते ॥ विद्यमानेषुशस्त्रेषुयत्पद्भ्यांतममर्दयत् ॥२॥ पुलस्त्यउवाच ॥ शृणुष्वावहितोभूत्वाकथामेतांपुरातनीं ॥
वृत्तांदेवयुगस्यादौपुण्यांपापभयापहां ॥ ३ ॥ सएवमसुरःक्रुद्धःसमापततवेगवान् ॥ सगजाश्वरथोब्रह्मन्दृष्टोदेव्या
यथेच्छया ॥ ४ ॥ ततोदेवगणैर्दैत्यान्समानम्याथकार्मुकं ॥ ववर्षदेवीबाणौघैर्धौरिवांबुदवृष्टिभिः ॥ ५ ॥ तद्ध-
नुर्दानवेसैन्येदुर्गयानमितंबलात् ॥ सुवर्णपुष्पंविबभौविद्युदंबुधरेष्विव ॥ ६ ॥ बाणैःसुरारिपूनन्यांस्ताडयामाससुव्र-
व्रत ॥ गदयामुसलेनान्यान्स्वस्थानेभ्योन्यपातयत् ॥ ७ ॥ एकोप्यसौबहून्दैत्यान्केसरीकालसंनिभः ॥ विधुन्वन्केसर-
सटानिषूदयतिदानवान् ॥ ८ ॥ कुलिशाभिहतादैत्याःशक्त्यानिर्भिन्नवक्षसः ॥ लांगलैर्दारितग्रीवाद्विधाकृताःपर-
श्वधैः ॥ ९ ॥ दंडनिर्भिन्नशिरसश्चक्रविच्छिन्नबन्धनाः ॥ चेलुःपेतुश्चमत्ताश्चतत्यजुश्चापरेरणं ॥ १० तेवध्यमानारुद्रा-

स्याद्दुर्गयादैत्यदानवाः ॥ कालरात्रिंमन्यमानादुद्रुवुर्भयपीडिताः ॥ ११ ॥ सेनान्यंभग्नमालोक्यदुर्गामग्रेतथास्थि-
तां ॥ दृष्ट्वाजगामनमरोमत्तद्विरदसंस्थितः ॥ १२ ॥ समागम्यचवेगेनदेव्यांशक्तिंमुमोचह ॥ त्रिशूलमपिसिंहायप्राहि-
णोद्दानवोरणे ॥ १३ ॥ तावायांतौततोदेव्याहुंकारेणाथभस्मसात् ॥ कृतौततोगजेंद्रेणगृहीतामध्यतोहरिः ॥ १४ ॥
अथोत्पत्यचवेगेनतलेनाहत्यदानवं ॥ गतासुंकुंजरस्कंधात्क्षिप्यदेव्यैनिवेदितः ॥ १५ ॥ गृहीत्वादानवंयुद्धेब्रह्मन्कात्या-
यनीरुषा ॥ सव्येनपाणिनाभ्राम्याऽवादयत्पटहंयथा ॥ १६ ॥ ततोऽट्टहासंमुमुचेतादृशेवाद्यतांगते ॥ हास्यात्संमुद्भ-
वंस्तस्याभूतानानाविधाःक्रमात् ॥ १७ ॥ केचिद्व्याघ्रमुखारौद्रावृककारास्तथापरे ॥ हयास्यामहिषास्याश्चवराह-
वदनाःपरे ॥ १८ ॥ आखुकुक्कुटवक्त्राश्चगोजाविकमुखास्तथा ॥ नानावक्त्राक्षिचरणानानायुधधरास्तथा ॥ १९ ॥
गायंत्यन्येहसंत्यन्येक्रीडंत्यन्येतुसंहताः ॥ वादयंत्यपरेतत्रस्तुवन्त्यन्येतथांबिकां ॥ २० ॥ सातैर्भूतगणैर्देवीसार्धंतद्दानवंबलं ॥
शातयामासचक्राम्ययथातृण्यांमहाशनिः ॥ २१ ॥ सेनान्येनिहतेतस्मिंस्तथासेनाग्रगामिभिः ॥ चिक्षुरःसैन्यपाल-
स्तुयोधयामासदेवताः ॥ २२ ॥ कार्मुकंदृढमाकर्णमाकृष्यरथिनांवरः ॥ ववर्षशरजालानियथामेघोवसुंधरां ॥ २३ ॥
तान्दुर्गास्वशरैश्छित्वाशरसंघान्सुपर्वभिः ॥ सौवर्णपुंखानपरान्शरान्जग्राहषोडश ॥ २४ ॥ ततश्चतुर्भिश्चतुरस्तु-
रंगानपिभामिनी ॥ हत्वासारथिमेकेनध्वजमेकेनाचिच्छिदे ॥ २५ ॥ ततस्तुसशरंचापंचिच्छेदैकेषुणांबिका ॥ छिन्ने
धनुषिखड्गंचचर्मचादत्तवान्बली ॥ २६ ॥ तंखड्गंचर्मणासार्द्धंदैत्यस्याधुन्वतोबलात् ॥ शरैश्चतुर्भिश्चिच्छेदततःशूलं
समाददे ॥ २७ ॥ समुद्भ्राम्यमहाशूलंसप्राद्रवत्तथांबिकां ॥ क्रोष्टुकोमुदितोरण्येमृगराजवधूंयथा ॥ २८ ॥ तस्याभि-

१ ल्यबार्षः । २ आममन्ताद्भ्रामयित्वा । ३ अडभाव आर्षः । ४ सैन्यम् । ५ अम्बिकेत्यनुपज्यते ।

पततःपादौकरौशीर्षंचपंचभिः ॥ शरैश्चिच्छेदसंक्रुद्धान्यपतत्सहतोऽसुरः ॥ २९ ॥ तस्मिन्सेनापतौक्षुण्णेतदोग्रास्योमहा-
सुरः ॥ समाद्रवंतवेगेनकरालास्यास्तुदानवाः ॥ ३० ॥ बाष्कलश्चोद्धतश्चैवउग्रास्योथोग्रकार्मुकः ॥ दुर्द्धरोदुर्मुखश्चै-
वबिडालनयनोऽपरः ॥ ३१ ॥ एतेऽन्येचमहात्मानोदानवाबलिनांवराः ॥ कात्यायनीमाद्रवंतनानाशस्त्रास्त्रपाणयः
॥ ३२ ॥ तान्दृष्ट्वालीलयादुर्गावीणांजग्राहपाणिना ॥ वादयामासहसतीतथाडमरुकंवरम् ॥ ३३ ॥ यथायथावादयते
देवीवाद्यानितानिच ॥ तथातथाभूतगणानृत्यंतिचहसंतिच ॥ ३४ ॥ ततोऽसुराःशस्त्रधराःसमभ्येत्यसरस्वतीं ॥ अभ्य-
घ्नंस्तांश्चसादेवीजग्राहपरमेश्वरी ॥ ३५ ॥ प्रगृह्यकेशेषुमहासुरास्तानुत्पत्यसिंहात्तुनगस्यसानुं ॥ ननर्त्तवीणांपरिवाद-
यंतीपपौचपानंजगतांजनित्री ॥ ३६ ॥ ततस्तुदेव्याबलिनोमहासुरादोर्दंडनिर्धूतविशीर्णदर्पाः ॥ विशस्त्रवस्त्राव्यसवश्च-
जाता ततस्तुतान्वीक्ष्यमहासुरेंद्रान् ॥ ३७ ॥ देव्यामहौजामहिषासुरस्तुव्यद्रावयद्भूतगणान्खुराग्रैः ॥ तुंडेनपुच्छे-
नतथौजसान्यान्निश्वासवातेनचभूतसंघान् ॥ ३८ ॥ विषाणकोट्याचपरान्प्रमथ्यदुद्रावसिंहंप्रतिहंतुकामः ॥ ततोऽबि-
काक्रोधवशंजगामाचिक्षेपदैत्यंसहसैवलीलया ॥ ३९ ॥ ततःसकोपादथतीक्ष्णशृंगःक्षिप्रंगिरीन्भूमिमशीर्ययच्च ॥ सं-
क्षोभयंस्तोयनिधीन्घनांश्चविध्वंसयन्प्राद्रवताथदुर्गां ॥ ४० ॥ साचाथपाशेनबबंधदुष्टंसचाप्यभूच्छिन्नकटःकरींद्रः ॥
करंप्रचिच्छेदचहस्तिनोग्रंसचापिभूयोमहिषोऽभिजातः ॥ ४१ ॥ ततोऽस्यशूलंव्यसृजद्भवानीसशीर्णमूलोन्यपतत्पृथि-
व्यां ॥ शक्तिंप्रचिक्षेपहुताशवक्त्रांसाकुंठिताग्रान्यपतन्महर्षे ॥ ४२ ॥ चक्रंहरेर्दानवचक्रहंतुःक्षिप्रंचवक्रत्वमुपागतंहि ॥
गदांसमाविध्यधनेश्वरस्याक्षिप्ताशुभग्नान्यपतत्पृथव्यां ॥ ४३ ॥ जलेशपाशोऽपिमहासुरेणविषाणतुंडाग्रखुरप्रणुन्नः ॥

१ आत्मनेपदमार्षम् । एवमग्रेऽपिबोध्यम् । २ देव्याः भूतगणानित्यन्वयः ।

निरस्यताकोपितयाचमुक्तोदंडस्तुयाम्योबहुखंडतांगतः ॥ ४४ ॥ वज्रंसुरेंद्रस्यचविग्रहेस्यमुक्तंसुसूक्ष्मत्वमुपाजगाम ॥
संत्यज्य सिंहंमहिषासुरस्यदुर्गाधिरूढासहसैवपृष्ठं ॥ ४५ ॥ पृष्ठस्थितायांमहिषासुरोऽपिपोप्लूयतेवीर्यमदान्मृडान्यां ॥
साचापिपद्भ्यांमृदुकोमलाभ्यांममर्दतंक्लिन्नमिवाजिनंहि ॥ ४६ ॥ सम्मृद्यमानोधरणीधराभोदेव्याबलीहीनबलोबभू-
व ॥ ततोऽस्यशूलेनबिभेदकंठंतस्मात्पुमान्खड्गधरोविनिर्गतः ॥ ४७ ॥ निष्क्रांतमात्रंहृदयेपदातमाहत्यसंगृह्यकचेषुको-
कोपात् ॥ शिरःप्रचिच्छेदवरासिनास्यहाहाकृतंदैत्यबलंतदाभूत् ॥ ४८ ॥ सचंडमुंडाःसमयाःसताराःसहासिलोम्ना
भयकातराक्षाः ॥ संताड्यमानाःप्रमथैर्भवान्याःपातालमेवाविविशुर्भयार्ताः ॥ ४९ ॥ देव्याजयंदेवगणाविलोक्यस्तुवंति
देवींस्तुतिभिर्महर्षे ॥ नारायणींसर्वजगत्प्रतिष्ठांकात्यायनींघोरमुखींसुरूपां ॥५०॥ संस्तूयमानासुरसिद्धसंघैःकात्या-
यनीसाहरपादमूले ॥ भूयोभविष्याम्यमरार्थमेवमुक्त्वासुरांस्तान्प्रविवेशदुर्गा ॥ ५१ ॥ इतिश्रीवामनपुराणेदेवीमाहा-
त्म्येमहिषासुरवधोनामविंशतितमोऽध्यायः ॥ २० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
नारदउवाच ॥ पुलस्त्यकथ्यतांतावद्भूयोदेव्याःसमुद्भवः ॥ महत्कौतूहलंमेऽद्यविस्तराद्ब्रह्मवित्तम ॥१॥ पुलस्त्यउवाच ॥
श्रूयतांकथयिष्यामिभूयोस्याःसंभवंमुने ॥ शुंभासुरवधार्थायलोकानांहितकाम्यया ॥ २ ॥ यासाहिमवतःपुत्रीभवेनो-
ढातपोधन ॥ उमानाम्नाचतस्याःसाकोशाज्जतातुकौशिकी ॥ ३ ॥ संभूयविंध्यंगत्वाचभूयोभूतगणैर्वृता ॥ शुंभंचैवनि-
शुंभंचवधिष्यतिवरायुधैः ॥ ४ ॥ नारदउवाच ॥ ब्रह्मंस्त्वयाममाख्यातामृतादक्षात्मजासती ॥ संजाताहिमवत्पुत्रीत्ये-
वमेवक्तुमर्हसि ॥ ५ ॥ यथाहिपार्वतीकोशात्समुद्भूताहिकौशिकी ॥ यथाहतवतीशुंभंनिशुंभंचमहासुरं ॥ ६ ॥ कस्य

१ पुनः पुनर्भूशंवा उत्पतति ।

चेमौसुतौवीरौख्यातौशुंभनिशुंभकौ ॥ एतन्मेतत्त्वतःसर्वंयथावद्वक्तुमर्हसि ॥ ७॥ भगवंस्त्वत्प्रसादेनदेव्याश्चरितमुत्त-
मम् ॥ श्रुतंविस्तरतोब्रूहिपार्वत्याःसंभवंमुने ॥ ८ ॥ पुलस्त्यउवाच ॥ दिष्ट्यासंकथयिष्यामिपार्वत्याःसंभवंमुने ॥
शृणुष्वावहितोभूत्वास्कंदोत्पत्तिंचशाश्वतीं ॥ ९ ॥ रुद्रःसत्यांप्रनष्टायांब्रह्मचारिव्रतेस्थितः ॥ निराश्रयत्वमापन्नस्तप-
स्तप्तुंव्यवस्थितः ॥ १० ॥ सचासोदेवसेनानीर्दैत्यदर्प्पविनाशनः ॥ शिवरूपत्वमास्थायसैनापत्यंसमुत्सृजत् ॥ ११ ॥
ततोविनाकृतादेवाःसेनानाथेनशंभुना ॥ दानवेंद्रेणविक्रम्यानिशुंभेनपराजिताः ॥ १२ ॥ ततोजग्मुःसुरेशानंद्रष्टुंचक्र-
गदाधरं ॥ श्वेतद्वीपेमहाहंसंप्रपन्नाःशरणंहरिं ॥ १३ ॥ तानागतान्सुरान्दृष्ट्वाततःशक्रपुरोगमान् ॥ विहस्यमेघगंभी-
रंप्रोवाचपुरुषोत्तमः॥१४॥ किंजिताःस्थसुरेंद्रेणनिशुंभेनदुरात्मना ॥ येनसर्वेसमस्त्येवममपार्श्वमुपागताः॥१५॥ तद्युष्मा-
कंहितार्थाययद्वदामिसुरोत्तमाः ॥ तत्कुरुध्वंजयोयाद्धिसमाश्रित्यभवेत्ततः ॥१६॥ यएतेपितरोदेवास्त्वग्निष्वात्तेतिविश्रुताः॥
अमीषांमानसीकन्यामेनानाम्नास्तिदेवता ॥ १७ ॥ तामाराध्यमहातिथ्यांश्रद्धयापरयामराः ॥ प्रार्थयध्वंसतीमेनां
प्रालेयाद्रिमहार्थतः ॥ १८ ॥ तस्यांसारूपसंयुक्ताभविष्यतितपस्विनी ॥ दक्षकोपाद्ययामुक्तंमलवज्जीवितंप्रियं ॥१९॥
साशंकरात्स्वंतेजोंशंजनयिष्यतियंसुतं ॥ सहनिष्यतिदैत्येंद्रंशुंभंचसपदानुगं ॥ २० ॥ तस्माद्गच्छतपुण्यंतत्कुरुक्षेत्रंम-
हाफलं ॥ तत्रपृथूदकेतीर्थेपूज्यन्तांपितरोऽव्ययाः ॥ २१ ॥ महातिथ्यांमहापुण्येयदिशत्रुपराभवं ॥ भवनाथात्मनासर्वे
इच्छथक्रियतामिति ॥ २२ ॥ पुलस्त्यउवाच ॥ इत्युक्तावासुदेवेनदेवाःशक्रपुरोगमाः॥ कृतांजलिपुटाभूत्वापप्रच्छुःपर-
मेश्वरं ॥ २३ ॥ देवाऊचुः ॥ किंतत्कुरुक्षेत्रमितियत्रपुण्यंपृथूदकं ॥ उद्भवंतस्यतीर्थस्यभगवान्प्रब्रवीतुनः ॥ २४ ॥

---

१ तेजोंऽशेन स्वीयसामर्थ्येन सहितम् ।

केयंप्रोक्तामहापुण्यातिथीनामुत्तमातिथिः ॥ यस्यांहिपितरोदिव्याअद्भिःपूज्याःप्रयत्नतः ॥ २५ ॥ ततःसुराणांवचना-
न्मुरारिःकैटभार्दनः ॥ कुरुक्षेत्रोद्भवंपुण्यंप्रोक्तवांस्तांतिथीमपि ॥२६॥ श्रीभगवानुवाच ॥ सोमवंशोद्भवोराजाऋक्षोनाम
महाबलः ॥ कृतस्यादौसमभवदृक्षात्संवरणोभवत् ॥ २७ ॥ सर्ववित्रानिजेराज्येबालएवाभिषेचितः ॥ बाल्येपिधर्म-
निरतोमद्भक्तश्चसदाभवत् ॥ २८ ॥ पुरोहितस्तुतस्यासीद्वसिष्ठोवरुणात्मजः ॥ सतमध्यापयामाससांगान्वेदानुदारधीः
॥ २९ ॥ ततोजगामचारण्येत्वनध्यायेनृपात्मजः ॥ सर्वकर्मसुनिक्षिप्यवसिष्ठंतपसांनिधिं ॥ ३० ॥ ततोमृगस्यव्या-
क्षेपादेकाकीवाजिनावनं ॥ वैभ्राजंसजगामाथमनोन्मादेनतन्मुने ॥ ३१ ॥ ततस्तुकौतुकाविष्टःसर्वर्तुकुसुमेवने ॥ अवि-
तृप्तःसुगंधस्यसमंताद्व्यचरद्वनं ॥ ३२ ॥ सवनांतंददर्शाथफुल्लकोकनदावृतं ॥ कह्लारपद्मकुमुदैःकमलेंदीवरैरपि ॥३३॥
तत्रक्रीडंतिसततमप्सरोमरकन्यकाः ॥ तासांमध्येददर्शाथकन्यांसंवरणोधिकां ॥ ३४ ॥ दर्शनादेवसनृपःकाममार्ग-
णपीडितः ॥ तथासाचतमोक्ष्यैवकामबाणातुराभवत् ॥ ३५ ॥ उभौतौपीडितौमोहंजग्मतुःकाममार्गणैः ॥ राजाचलास-
नोभूम्यांनिपपाततुरंगमात् ॥ ३६ ॥ तमभ्येत्यमहात्मानोगंधर्वाःकामरूपिणः ॥ सिसिचुर्वारिणातेनलब्धसंज्ञोऽभव-
त्क्षणात् ॥ ३७ ॥ साचाप्सरोभिरुत्पाट्यनीतापितृकुलंनिजं ॥ ताभिराश्वासिताचापिमधुरैर्वचनांबुभिः ॥ ३८ ॥ सचा-
प्यारुह्यतुरगंप्रतिष्ठानंपुरोत्तमं ॥ गतस्तुमेरुशिखरंकामचारीयथाऽमरः ॥ ३९ ॥ यदाप्रभृतिसादृष्टाचक्षुपातपतीगि-
रौ ॥ तदाप्रभृतिनाश्नातिदिवास्वपितिवानिशि ॥ ४० ॥ ततःसर्वविदव्यग्रोविदित्वावरुणात्मजः ॥ तपतीतापितंवीरंपा-
र्थिवंतपसांनिधिः ॥ ४१ ॥ समुत्पत्यमहायोगीगगनंरविमंडलं ॥ विवेशदेवंतिग्मांशुंददर्शस्यंदनेस्थितं ॥ ४२ ॥ तंदृ-



१ सौन्दर्यादिमत्त्वात्सर्वोत्कृष्टाम् ।

ष्ट्वाभास्करंदेवंननामद्विजसत्तमः ॥ प्रतिप्रणमितश्चासौभास्करेणापिसद्दपिः ॥ ४३ ॥ ज्वलज्जटाकलापोसौदिवाकर-
समीपगः ॥ शोभतेवारुणिःश्रीमान्द्वितीयइवभास्करः ॥ ४४ ॥ ततःसंपूजितोऽर्घाद्यैर्भास्करेणतपोधनः ॥
पृष्टश्चागमनेहेतुंप्रत्युवाचदिवाकरं ॥ ४५ ॥ समायातोऽस्मिदेवेशयाचितुंत्वांमहाद्युते ॥ सुतांसंवरणस्यार्थे
त्वंचतांदातुमर्हसि ॥ ४६ ॥ ततोवसिष्ठायदिवाकरेणनिवेदितासातपतीतनूजा ॥ गृहागतायद्विजपुंगवायराज्ञोऽर्थतः
संवरणस्यचैव ॥ ४७ ॥ सावित्रमासाद्यवचोवसिष्ठःस्वमाश्रमंपुण्यमुपाजगाम ॥ साचापिसंस्मृत्यनृपात्मजंतंकृतांज-
लिर्वारुणिमाहदेवी ॥ ४८ ॥ तपत्युवाच ॥ ब्रह्मन्मयाखेदमुपेत्ययोहिसहाप्सरोभिःपरिचारिकाभिः॥ दृष्टोह्यरण्येऽमर-
गर्भतुल्योनृपात्मजोलक्षणतोपिजाने ॥ ४९ ॥ पादौशुभौचक्रगदासिचिह्नौ[1]जंघेतथोरूकरिहस्ततुल्यौ ॥ कटिर्यथाकेस-
रिणस्तथैवक्षामंचमध्यंत्रिवलीनिबद्धं ॥ ५० ॥ ग्रीवास्यशंखाकृतिमादधातिभुजौचपीनौकठिनौसुदीर्घौ ॥ हस्तौतथा
पद्मदलोद्भवांकौछत्राकृतिस्तस्यशिरोविभाति ॥ ५१ ॥ नीलाश्चकेशाःकुटिलाश्चतस्यकर्णौसमांसौसुसमाचनासा ॥
दीर्घाश्चतस्यांगुलयःसुपर्वाःपद्मांकराभ्यांदशनाश्चशुभ्राः ॥५२॥ समुन्नतःषड्भिरुदारवीर्यस्त्रिभिर्गभीरस्त्रिपुचप्रलंबः[2] ॥
रक्तस्तथासप्तसुराजपुत्रःकृष्णश्चतुर्भिस्त्रिभिरानतोपि॥ ५३ ॥ द्वाभ्यांचशुक्लःसुरभिश्चतुर्भिःसंत्येवपद्मानिदशैवचास्य ॥
वृतःसभर्त्ताभगवन्हिपूर्वंतंराजपुत्रंपरमंविचिंत्य ॥ ५४ ॥ ददस्वमांनाथतपस्विमुख्यगुणोपपन्नायसमीहिताय ॥ स्ने-
हात्प्रकामंप्रवदंतिसंतोदातुंतथाऽन्यस्यविभोक्षमस्त्वं ॥५५॥ देवदेवउवाच ॥ इत्येवमुक्तःसवितुश्चपुत्र्याऋषिस्तदाध्यानप-
रोबभूव ॥ जानेतमेवर्क्षसुतंसकाममुदायुतोवाक्यमिदंजगाद ॥५६॥ सएवपुत्रिक्षितिपात्मजस्त्वयादृष्टःपुराकामयसेयम-

१ पादयोः करयोश्चेत्यर्थः । अथवोपलक्षणे तृतीया । २ एतद्व्याख्यातमार्षरामायणे सुन्दरकाण्डे रामाभिरामीये द्रष्टव्यम् ।

द्य ॥ सएषचायातिममाश्रमंवैऋक्षात्मजःसंवरणोहिनाम्ना ॥ ५७ ॥ अथाजगामैवनृपस्यपुत्रस्तदाश्रमंब्राह्मणपुंगवस्य ॥ दृष्ट्वावसिष्ठंप्रणिपत्यमूर्ध्नास्थितांत्वपश्यत्तपतींनरेंद्रः ॥ ५८ ॥ दृष्ट्वाचतांपद्मविशालनेत्रांसंदृष्टपूर्वेयमितिव्यचिंतयत् ॥ पप्रच्छकेयंललनाद्विजेंद्रसवारुणिःप्राहनराधिपेंद्रं ॥ ५९ ॥ इयंविवस्वद्दुहितानरेंद्रनाम्नाप्रसिद्धातपतीपृथिव्याम् ॥ मयातवार्थायदिवाकरोर्थितःप्रादान्मयात्वाश्रममापितेयम् ॥ ६० ॥ तस्मात्समुतिष्ठनरेंद्रदेव्याःपाणिंतपत्याविधिवद्गृहाण ॥ इत्येवमुक्तोनृपतिःप्रहृष्टोजग्राहपाणिंविधिवत्तपत्याः ॥ ६१ ॥ सातंपतिंप्राप्यमनोभिरामंसूर्यात्मजाशक्रसमप्रभावं ॥ रेमेचतेनैवगृहोत्तमेषुयथामहेंद्रेणपुलोमजादिवि ॥ ६२ ॥ इतिश्रीवामनपुराणेतापत्येउमासंभवोनामैकविंशोऽध्यायः ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

देवदेवउवाच ॥ तस्यांतपत्यांनरसत्तमेनजातःसुतःपार्थिवलक्षणस्तु ॥ सजातकर्मादिभिरेवसंस्कृतोह्यवर्धताज्येनहुतोयथाग्निः ॥ १ ॥ कृतंचचूडाकरणंतुदेवाविप्रेणमित्रावरुणात्मजेन ॥ नवाब्दिकस्यव्रतबंधनंचवेदेचशास्त्रेविधिपारगोऽभूत् ॥ २ ॥ ततश्चतुःषड्भिरपीहवर्षैःसर्वज्ञतामभ्यगमत्ततोसौ ॥ ख्यातःपृथिव्यांपुरुषोत्तमोऽसौनाम्नाकुरुःसंवरणस्यपुत्राः ॥ ३ ॥ ततोनरपतिर्दृष्ट्वापुत्रंतंषोडशाब्दिकम् ॥ दारक्रियार्थमकरोद्यत्नंशुभकुलेततः ॥ ४ ॥ सौदाम्नींचसुदाम्नस्तुसुतांरूपाधिकांनृपः ॥ कुरोरर्थायवृतवान्सप्रादात्कुरवेपिताम् ॥ ५ सतांनृपसुतांलब्ध्वास्वधर्मानविरोधयन् ॥ रेमेतन्व्यासहतयापौलोम्यामघवानिव ॥ ६ ॥ ततोनरपतिःपुत्रंराज्यभारक्षमंबली ॥ विदित्वायौवराज्यायविधानेनाभ्यषेचयत् ॥ ७ ॥ ततोराज्येभिषिक्तस्तुकुरुःपित्रानिजेपदे ॥ सपालयामासमहींपुत्रवच्चप्रजाःस्वयं ॥ ८ ॥ सएवक्षेत्र- ४०

१ आनीता ।

पालोऽभूत्पशुपालःसएवहि ॥ सएवराजपालश्चअजापालोमहाबलः ॥९॥ ततोस्यबुद्धिरुत्पन्नाह्यस्मिँल्लोकेगरीयसी ॥
यावत्कीर्तिःसुसंस्थाहितावद्वासस्तयासह ॥ १० ॥ अस्त्वेवंनृपतिश्रेष्ठोयाथातथ्यममन्यत ॥ विचचारमहींसर्वांकीर्त्य-
र्थंतुनराधिपः ॥ ११ ॥ ततोद्वैतवनंनामपुण्यंलोकचरोवशी ॥ तदासावतिसंतुष्टोविवेशाभ्यंतरंततः ॥ १२ ॥ तत्रदेवीं
ददर्शाथपुण्यांपापविमोचनीं ॥ प्लक्षजांब्रह्मणःपुत्रींहरिजिह्वांसरस्वतीं ॥ १३ ॥ सुदर्शनस्यजननींहृदंकृत्वासुविस्तृ-
तं ॥ तस्यास्तज्जलमासाद्यस्नात्वाप्रीतोभवन्नृपः ॥ १४ ॥ समाजगामचपुनर्ब्रह्मणोवेदिमुत्तरां ॥ समंतपंचकंनामधर्म-
स्थानमनुत्तमं ॥१५॥ आसंमताद्योजनानिपंचपंचचसर्वतः ॥ देवाऊचुः ॥ किमन्यावेदयोदेवब्रह्मणःपुरुषोत्तम ॥१६॥
येनोत्तरतयावेदीगदितासर्वपंचके ॥ हरिरुवाच ॥ वेदयोलोकनाथस्यपंचधर्मस्यसर्वतः ॥ १७ ॥ यासुयष्टंसुरेशेनलो-
कनाथेनशंभुना ॥ प्रयागोमध्यमावेदिःपूर्वावेदिर्गयाशिरः ॥ १८ ॥ विरजादक्षिणावेदिरनंतफलदायिनी ॥ प्रतीची
पुष्करावेदिस्त्रिभिःकुंडैरलंकृता ॥ १९ ॥ समंतपंचकेचोक्तावेदिरेवोत्तरातथा ॥ तदमन्यतराजर्षिरिदंक्षेत्रंमहाफलं
॥ २० ॥ करिष्यामिकृषिष्यामिसर्वान्कामान्यथेप्सितम् ॥ इतिसंचिंत्यमनसात्यक्त्वास्यंदनमुत्तमं ॥ २१ ॥
चक्रेकीर्त्यर्थमतुलंस्थानंतत्पार्थिवर्षभः ॥ कृत्वासीरंससौवर्णंगृह्यरुद्रवृषंप्रभुः ॥ २२ ॥ वोढारंयाम्यमहिषंस्वयंक-
र्षितुमुद्यतः ॥ तंकर्षंतंनरवरंसमभ्येत्यशतक्रतुः ॥ २३ ॥ प्रोवाचराजन्किमिदंभवान्कर्तुमिहोद्यतः ॥ राजाब्रवीत्सुर-
वरंतपःसत्यंक्षमांदयां ॥ २४ ॥ कृषामिशौचदानेचयोगंचब्रह्मचारितां ॥ तंचोवाचहरिर्देवःकस्माद्बीजंनरेश्वर ॥२५॥ ल-
ब्धंत्वयेतिसहसाह्यवहस्यगतस्ततः ॥ गतेऽपिशक्रेनृपतिरहन्यहनिसीरधृक् ॥ २६ ॥ कृषतेऽन्यत्समंताच्चसप्तक्रोशान्म-

१ ल्यब्लार्षः । २ इन्द्रः ।

हीपतिः ॥ ततोहमब्रुवंगत्वाकुरोकिमिदमित्यथ ॥ २७ ॥ तदाष्टांगंमहाधर्मंसमाख्यातंनृपेणहि ॥ ततो-
मयास्यगदितंनृपबीजंक्वतिष्ठति ॥ २८ ॥ सचाहममदेहस्थंबीजंतमहमब्रुवं ॥ देह्यहंवापयिष्यामिसीरंकृषतु
वैभवान् ॥ २९ ॥ ततोनृपतिनाबाहुर्दक्षिणःप्रसृतःकृतः ॥ प्रसृतंतंभुजंदृष्ट्वामहाचक्रेणवेगतः ॥ ३० ॥ सहस्रधा
प्रचिच्छेदयस्मादेकभुजोभवत् ॥ ततःसव्योभुजोराज्ञादत्तश्छिन्नोप्यसौमया ॥ ३१ ॥ तथैवोरुयुगंप्रादान्मयाच्छिन्नौच
तावुभौ ॥ ततःसमेशिरःप्रादात्तेनप्रीतोस्मितस्यच ॥ ३२ ॥ वरदोसीत्यथेत्युक्तेकुरुर्वरमयाचत ॥ कुरुरुवाच ॥ यावदे-
तन्मयाकृष्टंधर्मक्षेत्रंतदस्तुवः ॥ ३३ ॥ स्नातानांचमृतानांचमहापुण्यफलंत्विह ॥ उपवासश्चदानंचस्नानंजप्यंचमाधव ॥
॥ ३४ ॥ होमयज्ञादिकंचान्यच्छुभंवाप्यशुभंविभो ॥ त्वत्प्रसादाद्धृषीकेशशंखचक्रगदाधर ॥ ३५ ॥ अक्षयंप्रवरेक्षे-
त्रेभवत्वत्रमहाफलं ॥ तथाभवान्सुरैःसार्द्धंसमंदेवेनशूलिना ॥ ३६ ॥ वसात्रपुंडरीकाक्षमन्नामव्यंजकेऽच्युत ॥ इत्ये-
वमुक्तस्तेनाहंराज्ञाबाढमुवाचतं ॥ ३७ ॥ तथाचत्वंदिव्यवपुर्भवभूयोमहीपते ॥ तथांतकालेमय्येवलयमेष्यसिसुव्रत
॥ ३८ ॥ शाश्वतीतवकीर्तिश्चभविष्यतिनसंशयः ॥ तत्रवैयाजकोयज्ञान्यजिष्यसिसहस्रशः ॥ ३९ ॥ पुलस्त्यउवाच ॥
तस्यक्षेत्रस्यरक्षार्थंददौसपुरुषोत्तमः ॥ यक्षंचचंद्रनामानंवासुकिंचापिपन्नगं ॥४०॥ विद्याधरंशंकुकर्णंसुकेशंराक्षसेश्वरं ॥
अजावनंचनृपतिंमहादेवंचपावकं ॥४१॥ एतानिसर्वतोभ्येत्यरक्षंतिकुरुजांगलं ॥ अमीषांबलिनोन्येचभृत्याश्चैवानुयायिनः
॥४२॥अष्टौसहस्राणिधनुर्द्धराणांनिवारयंतीहसुदुष्कृतान्वै॥स्नातुंनयच्छंतिमहोग्ररूपास्त्वन्यस्यतेवीरचराचराणां॥४३॥
तस्यैवमध्येबहुपुण्ययुक्तंपृथूदकंपापहरंशिवंच ॥ पुण्यानदीप्राङ्मुखतांप्रयाताजलौघयुक्तस्यसुताजलाढ्या ॥ ४४ ॥ ४१
पूर्वंनदीयंप्रपितामहेनसृष्टासमंभूतगणैःसमस्तैः ॥ महोजलंवह्निसमीरमेवखंत्वेवमादौविबभौपृथूदकं ॥ ४५ ॥ सर्वेत-

थातोयधयोमहान्तस्तीर्थोनिनद्यःस्त्रवणाःसरांसि ॥ संनिर्मितानीहमहाभुजेनसदेवमार्गःसलिलंहितेपु ॥४६॥ सरस्व-
तीदृषद्वत्योरंतरेकुरुजंगले ॥ मुनिप्रवरमासीनंपुराणंलोमहर्षणं ॥ ४७ ॥ अपृच्छंतद्विजवराःप्रभवंसुरत्तमाः ॥ ऋपय
ऊचुः ॥ प्रमाणंसरसोब्रूहितीर्थानांचविशेषतः ॥ ४८ ॥ देवतानांचमाहात्म्यमुत्पत्तिंवामनस्यच ॥ एतच्छ्रुत्वावचस्तेपां
तान्द्विजाँल्लोमहर्षणः ॥ ४९ ॥ प्रणिपत्यपुराणर्षिरिदंवचनमब्रवीत् ॥ लोमहर्षणउवाच ॥ ब्रह्माणमीशंकमलासनस्थं
विष्णुंचलक्ष्मीसहितंतथैव ॥ ५० ॥ रुद्रंचदेवंप्रणिपत्यमूर्ध्नातीर्थंवरंब्रह्मसरःप्रवक्ष्ये ॥ रंतुकादोजसंचापिपावनाच्चच-
तुर्मुखं ॥ ५१ ॥ सरःसान्निहितंप्रोक्तंब्रह्मणापूर्वमेवतु ॥ कलिद्वापरयोर्मध्येव्यासेनचमहात्मना ॥ ५२ ॥ सरःप्रमाणंय-
त्प्रोक्तंतच्छृण्वन्तुद्विजोत्तमाः ॥ विश्वेश्वराद्धस्तिपुरंतथाकन्याजरद्गवी ॥ ५३ ॥ यावदोघवतीप्रोक्तातावत्संनिहितंसरः ॥
मयाश्रुतंप्रमाणंतुकथ्यमानंतुवामनं ॥ ५४ ॥ तच्छृण्वंतुद्विजश्रेष्ठाःपुण्यंवृद्धिकरंमहत् ॥ विश्वेश्वरादेववरात्पावनीच
सरस्वती ॥ ५५ ॥ सरःसान्निहितंप्रोक्तंसमंतादर्द्धयोजनं ॥ एतदाश्रित्यदेवाश्चऋपयश्चसमागताः ॥ ५६ ॥ सेवंतेमु-
क्तिकामार्थंस्वर्गार्थंचापरेस्थिताः ॥ ब्रह्मणासेवितमिदंसृष्टिकामेनयोगिना ॥ ५७ ॥ विष्णुनास्थितिकामेनहरिरूपेण
सेवितं ॥ रुद्रेणचसरोमध्यंप्रविष्टेनमहात्मना ॥ ५८ ॥ सेव्यतीर्थंमहातेजाःस्थाणुत्वंप्राप्तवान्हरः ॥ आद्यैपाब्रह्मणो
वेदिस्ततोरामह्रदःस्मृतः ॥ कुरुणाचयतःकृष्टंकुरुक्षेत्रंततःस्मृतं ॥ ५९ ॥ तरंतुकारंतुकयोर्यदंतरंयदंतरंरामह्रदस्यपं-
चकात् ॥ एततकुरुक्षेत्रसमंतपंचकंपितामहस्योत्तरवेदिरुच्यते ॥ ६० ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येद्वाविंशो-
ऽध्यायः ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ ल्यबार्षः ।

ऋषयऊचुः ॥ ब्रूहिवामनमाहात्म्यमुत्पत्तिंचविशेषतः ॥ यथाबलिर्नियमितोदत्तंराज्यंशतक्रतोः ॥ १ ॥ लोमहर्षणउवा-
च ॥ शृण्वंतुमुनयःप्रीतावामनस्यमहात्मनः ॥ उत्पत्तिंचप्रभावंचनिवासंकुरुजांगले ॥ २ ॥ तथैववंशंदैत्यानांशृण्वंतुद्वि-
जसत्तमाः ॥ यस्मिन्वंशेसमभवद्बलिर्वैरोचनिःपुरा ॥ ३ ॥ दैत्यानामादिपुरुषोहिरण्यकशिपुर्भवत् ॥ तस्यपुत्रोमहाते-
जाःप्रह्लादोनामदानवः ॥ ४ ॥ तस्माद्विरोचनोजज्ञेबलिर्जज्ञेविरोचनात् ॥ हतेहिरण्यकशिपौदेवानुत्सा-
द्यसर्वतः ॥ ५ ॥ राज्यंकृतंचतेनेष्टंत्रैलोक्येसचराचरे ॥ कृतयज्ञेषुदैत्येषुत्रैलोक्येदैत्यतांगते ॥ ६ ॥ जयेतथाबलवतो-
र्मयशंबरयोस्तथा ॥ शुद्धासुदिक्षुसर्वासुप्रवृत्तेधर्मकर्मणि ॥ ७ ॥ संप्रवृत्तेदैत्यपथेअयनस्थेदिवाकरे ॥ प्रह्लाद
शंबरमयैरनुरागेणचैवहि ॥ ८ ॥ दिक्षुसर्वासुगुप्तासुगगनेदैत्यपालिते ॥ वेदेषुमखशोभांचस्वर्गस्थांदर्शय-
त्सुच ॥ ९ ॥ प्रकृतिस्थेततोलोकेवर्त्तमानेचसत्पथि ॥ अभावेसर्वपापानांधर्मभावेसदोत्थिते ॥ १० ॥
चतुःपादेस्थितेधर्मेह्यधर्मेपादविग्रहे ॥ प्रजापालनयुक्तेषुभ्राजमानेषुराजसु ॥ स्वधर्मयुक्तेषुतथासर्वेष्वाश्रमवासिषु
॥ ११ ॥ अभिषिक्तोऽसुरैःसर्वैर्दैत्यराज्येबलिस्तदा ॥ हृष्टेष्वसुरसंघेषुनदत्सुमुदितेषुच ॥ १२ ॥ अथाभ्युपगतालक्ष्मी-
र्बलिंपद्मान्तरप्रभा ॥ पद्मोद्यतकरादेवीवरदासुप्रवेशिनी ॥ १३ ॥ श्रीरुवाच ॥ बलेबलवतांश्रेष्ठदैत्यराजमहाद्युते ॥
प्रीतास्मितवभद्रंतेदेवराजपराजये ॥ १४ ॥ यत्त्वयायुधिविक्रम्यदेवराजःपराजितः ॥ दृष्ट्वातेपरमंसत्त्वंततोहंस्वयमाग-
ता ॥ १५ ॥ नाश्चर्यंदानवव्याघ्रहिरण्यकशिपोःकुले ॥ प्रसूतस्यासुरेंद्रस्यतवकर्मेदमीदृशं ॥ १६ ॥ विशेषितस्त्व-
याराजन्दैत्येंद्रःप्रपितामहः ॥ येनयुक्तंहिनिखिलंत्रैलोक्यमिदमव्ययं ॥ १७॥ एवमुक्त्वातुसादेवीलक्ष्मीर्दैत्यनृपंबलिं॥

१ अडभावआर्षः । २ हास्यंकुर्वत्सु । ३ प्रीतेषु । ४ निमित्तसप्तमी । देवराजस्य पराजयो यस्मिन्नेवंभूते युधि युद्धे इत्यर्थः ।

प्रविष्टावरदासेव्यासर्वदेवमनोरमा ॥ १८ ॥ तुष्टाश्चदेव्यःप्रवराःह्रीःकीर्तिर्द्युतिरेवच ॥ प्रभाधृतिःक्षमाशक्तिर्ऋद्धि-र्दिव्यामहामतिः ॥ १९ ॥ श्रुतिर्विद्यास्मृतिःकीर्तिःशांतिःपुष्टिस्तथाक्रिया ॥ सर्वाश्चाप्सरसोदिव्यानृत्तगीतविशारदाः ॥ २० ॥ प्रपद्यंतेतुदैत्येंद्रंत्रैलोक्यंसचराचरं ॥ प्राप्तमैश्वर्यमतुलंबलिनाब्रह्मवादिना ॥ २१ ॥ इतिश्रीवामनपुराणेस-रोमाहात्म्येत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ऋषयऊचुः ॥ देवानांब्रूहिमेकर्मयद्वृत्तास्तेपराजिताः ॥ कथंदेवाधिदेवोसौविष्णुर्वामनतांगतः ॥ १ ॥ लोमहर्षणउवाच ॥ बलिसंस्थंचत्रैलोक्यंदृष्ट्वादेवःपुरंदरः ॥ मेरुसंस्थंययौशक्रःस्वमातुर्निलयंशुभं ॥ २ ॥ समीपंप्राप्यमातुश्चकथयामास तांगिरं ॥ आदित्याश्चरणेसर्वेदानवेनपराजिताः ॥ ३ ॥ अदितिरुवाच ॥ यद्येवंपुत्रयुष्माभिर्नशक्योहंतुमाहवे ॥ ब-लिर्विरोचनसुतःसर्वैश्चैवमरुद्गणैः ॥ ४ ॥ सहस्रशिरसाशक्यंकेवलंहंतुमेवहि ॥ तेनैकेनसहस्राक्षहंतुंनान्येनशक्यते ॥५॥ तद्भवत्पृच्छाद्यपितरंकश्यपंब्रह्मवादिनं ॥ पराजयार्थंदैत्यस्यबलेस्तस्यमहात्मनः ॥ ६ ॥ ततोदेवाःसहसुराःसंप्राप्ताः कश्यपांतिकं ॥ तत्रापश्यंश्चमारीचंमुनिंदीप्ततपोनिधिं ॥ ७ ॥ आद्यंदेवगुरुंदिव्यंप्रदीप्तंब्रह्मतेजसा ॥ तेजसाभास्करा-कारंस्थितमग्निशिखोपमं ॥ ८ ॥ न्यस्तदंडंतपोयुक्तंबद्धकृष्णाजिनांबरं ॥ वल्कलाजिनसंवीतंप्रदीप्तमिवतेजसा ॥ ९ ॥ हुताशवद्दीप्यमानमाज्यगंधपुरस्कृतं ॥ स्वाध्यायवंतंपितरंवपुष्मंतमिवानलं ॥ १० ॥ ब्रह्मवादिनमत्युग्रंचराचरगुरुं प्रभुं ॥ ब्रह्मणाप्रतिमंलक्ष्म्याकश्यपंदीप्ततेजसं ॥ ११ ॥ यःस्रष्टासर्वलोकानांप्रजानांपतिरुत्तमः ॥ आत्मभावविशे-षेणतृतीयोयंप्रजापतिः ॥ १२ ॥ अथप्रणम्यतेदेवाःसहादित्याःसुरर्षभाः ॥ ऊचुःप्रांजलयःसर्वेब्रह्मण्याःशिवमानसाः

१ बलिनाम्ना । २ लक्ष्म्या ( शोभया ) ब्रह्मणा ( वेधसा ) प्रतिमं ( तुल्यम् ) इत्यन्वयः ।

॥ १३ ॥ अजेयोयुधिशक्रेणबलिर्दैत्योबलाधिकः ॥ तस्माद्विधत्तनःश्रेयोदेवानांपुष्टिवर्धनं ॥१४॥ श्रुत्वातुवचनंतेषांपुत्राणां
कश्यपःप्रभुः ॥ कश्यपउवाच ॥ कुरुध्वंगमनेबुद्धिंब्रह्मलोकायलोककृत् ॥ कथयिष्यत्युपायंवोयथाजेष्यथदैत्यपम्
॥ १५ ॥ शक्रगच्छामसदनंब्रह्मणःपरमाद्भुतं ॥ यथापराजयंसर्वेब्रह्मणःख्यातुमुद्यताः ॥ १६ ॥ सहादित्यास्ततोदे-
वायाताःकाश्यपमाश्रमं ॥ प्रस्थिताब्रह्मसदनंब्रह्मर्षिगणसेवितं ॥ १७ ॥ तेमुहूर्तेनसंप्राप्ताब्रह्मलोकंसुवर्चसः ॥ दिव्यैः
कामगमैर्यानैर्यथार्हैःसुमहाबलैः ॥ १८ ॥ ब्रह्माणंप्रष्टुमिच्छंतस्तपोराशिंतमव्ययं ॥ अध्यगच्छंतविस्तीर्णांब्रह्मणःपर-
मांसभां ॥ १९ ॥ षट्पदोद्गीतमधुरांसामगैःसमुदीरितां ॥ श्रेयस्करीममित्रघ्नींदृष्ट्वासंजहृषुस्तदा ॥२०॥ ऋचोबह्वृच-
मुख्यैश्चप्रोक्ताःक्रमपदाक्षरैः ॥ शुश्रुवुस्त्वमरव्याघ्राविततेषुचकर्मसु ॥ २१ ॥ यज्ञविद्यावेदविदःपदक्रमविदस्तथा ॥
स्वरेणपरमर्षीणांसाबभूवप्रणादिता ॥ २२ ॥ यज्ञसंस्तवविद्भिश्चशिक्षाविद्भिस्तथाद्विजैः ॥ छंदसांचतथाविज्ञैःसर्व-
विद्याविशारदैः ॥ २३ ॥ लोकायतिकमुख्यैश्चशुश्रुवुःस्वरमीरितं ॥ तत्रतत्रचविप्रेंद्रान्नियतान्संशितव्रतान् ॥ २४ ॥
जपहोमपरान्मुख्यान्ददृशुःकश्यपात्मजाः ॥ तस्यांसभायामास्तेसब्रह्मालोकपितामहः ॥ २५ ॥ चराचरगुरुःश्रीमान्
विद्ययावेदमायया ॥ उपासतेयंतत्रैवप्रजानांपतयोविभुं ॥ २६ ॥ दक्षःप्रचेताःपुलहोमरीचिश्चद्विजोत्तमाः ॥ भृगुर-
त्रिर्वसिष्ठश्चगौतमोनारदस्तथा ॥ २७ ॥ विद्यास्तथांतरिक्षंचवायुस्तेजोजलंमही ॥ शब्दःस्पर्शश्चरूपंचरसोगंधस्त-
थैवच ॥ २८ ॥ प्रकृतिश्चविकाराश्चयच्चान्यत्कारणंमहत् ॥ सांगोपांगाश्चचत्वारोवेदालोकपतिस्तथा ॥ २९ ॥ तपां-

१ उवाचेतिशेषः । २ तदभिमानिन्या देवतया सरस्वत्येति यावत् । ( एवमग्रेपि एतादृशशब्दैस्तदभिमानिनीदेवताग्राह्या प्रकरणानुसारेण ) उपलक्षितः । उपलक्षणेतृतीया ।
३ जातावेकवचनम् । लोकपाला इत्यर्थः ।

सिक्तवश्चैवसंकल्पःप्राणएवच ॥ एतेचान्येचबहवःस्वयंभुवमुपासते ॥३०॥ धर्मोह्यर्थश्चकामश्चक्रोधोहर्षश्चनित्यशः ॥
शुक्रोबृहस्पतिश्चैवसंवर्तोथबुधस्तथा ॥३१॥ शनैश्चरश्चराहुश्चग्रहाःसर्वेव्यवस्थिताः ॥ मरुतोविश्वकर्माचवसवश्चद्विजो-
त्तमाः ॥ ३२ ॥ दिवाकरश्चसोमश्चदिनंरात्रिस्तथैवच ॥ अर्द्धमासाश्चमासाश्चऋतवःषट्चसंस्थिताः ॥ ३३ ॥ तांप्रवि-
श्यसभांदिव्यांब्रह्मणःसर्वकामदां ॥ कश्यपस्त्रिदशेशश्चपुत्रोधर्मभृतांवरः ॥ ३४ ॥ सर्वतेजोमयींदिव्यांब्रह्मर्षिगणसे-
वितां ॥ ब्राह्म्याश्रियासेव्यमानामचिंत्यांविगतक्लमां ॥ ३५ ॥ ब्रह्माणंप्रेक्ष्यतेसर्वेपरमासनमास्थितं ॥ शिरोभिःप्रणता
देवंदेवाब्रह्मर्षिभिःसह ॥ ३६ ॥ ततःसंस्पृश्यचरणौनियताःपरमात्मनः ॥ विमुक्ताःसर्वपापेभ्यःसर्वेविगतकल्मषाः ॥
३७ ॥ दृष्ट्वातुतान्सुरान्सर्वान्कश्यपेनसहागतान् ॥ आहब्रह्मामहातेजादेवानांप्रभुरीश्वरः ॥ ३८ ॥ इतिश्रीवामनपु-
राणेसरोमाहात्म्येचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
ब्रह्मोवाच ॥ यदर्थमिहसंप्राप्ताभवंतः सर्वएवहि ॥ चिंतयाम्यहमव्यग्रमेतदर्थंमहाबलाः ॥ १ ॥ भविष्यतिचवःसर्वंकां-
क्षितंयत्सुरोत्तमाः ॥ बलेर्दानवमुख्यस्ययोऽस्यजेताभविष्यति ॥ २ ॥ नकेवलंसुरारीणांगतिर्ममसविश्वकृत् ॥ त्रैलो-
क्यस्यापिनेताचदेवानामपिसप्रभुः ॥ ३ ॥ यःप्रभुःसर्वलोकानांविश्वंयश्चसनातनं ॥ पूर्वजंयंममप्राहुरादिदेवंसनातनं
॥ ४ ॥ तंदेवापिमहात्मानंनविदुःकोस्त्यसाविति ॥ देवानस्मांश्चविश्वंचसवेत्तिपुरुषोत्तमः ॥ ५ ॥ तस्यैवतुप्रसादेन
प्रवक्ष्येपरमांगतिं ॥ यदियोगंसमास्थायतपश्चरंतिदुश्चरं ॥ ६ ॥ क्षीरोदस्योत्तरेकूलउदीच्यांदिशिविश्वकृत् ॥ ततः
श्रोष्यथसंघुष्टांमेघगंभीरनिःस्वनाम् ॥ ७ ॥ रक्तांपुष्टाक्षरांरम्यामभयांसर्वदाशिवाम् ॥ वाणींपरमसंस्कारांवदतांब्र-

१. संधिरार्षः । २ आचरिष्यतीत्यर्थः वर्तमानसामीप्येलट् । ३ काश्यप. ।

ह्मवादिनाम् ॥ ८ ॥ दिव्यांसत्याकरांसत्यांसर्वकल्मषनाशिनीम् ॥ सर्वदेवाधिदेवस्यततोसौभवितात्मना ॥ ९ ॥ त-
स्यव्रतसमाप्त्यांतुयोगव्रतविसर्जने ॥ अमोघंतस्यदेवस्यविश्वतेजोमहात्मनः ॥ १० ॥ कश्यपायवरंदेवाददामिवरद-
स्थिताः ॥ स्वागतंचसुरश्रेष्ठामत्समीपमुपागताः ॥ ततोऽदितिःकश्यपश्चगृह्णीयातांवरंतदा ॥ ११ ॥ प्रणम्यशिरसा
पादौतस्मैदेवायधीमते ॥ भगवानेवनःपुत्रोभवत्विति प्रसीदनः ॥ १२ ॥ उक्तश्चपरयावाचातथास्त्वितिसवक्ष्यति ॥ दे-
वाब्रुवंतुतेसर्वेकश्यपोऽदितिरेवच ॥ १३ ॥ तथास्त्वितिसचश्रीमान्वक्ष्यतेसर्वलोककृत् ॥ तस्माद्देवागृहीत्वैवंवरंत्रिदश-
सत्तमाः ॥ १४ ॥ कृतकृत्यास्ततःसर्वेगच्छध्वंस्वंस्वमालयं ॥ तथास्त्वितिसुराःसर्वेप्रणम्यशिरसाप्रभुं ॥ १५ ॥ श्वेत-
द्वीपंसमुद्दिश्यगताःसौम्यांदिशंप्रति ॥ तेऽचिरेणैवसंप्राप्ताःक्षीरोदंसरितांपतिं ॥ १६ ॥ यथादिष्टंभगवताब्रह्मणासत्यवा-
दिना ॥ तेक्रांत्वासागरान्सर्वान्पर्वतांश्चसकाननान् ॥ १७ ॥ नदीश्चविविधाःपुण्याःपृथिव्यांतेसुरोत्तमाः ॥ अपश्यंत
तमोघोरंसर्वसत्त्वविवर्जितं ॥ १८ ॥ अभास्करममर्यादंतमसासर्वतोवृतं ॥ अमृतंस्थानमासाद्यकश्यपेनमहात्मना
॥ १९ ॥ दीक्षित्वाकश्यपोदिव्यंव्रतंवर्षसहस्रकं ॥ प्रसादार्थंसुरेशायतस्मैयोगायधीमते ॥ २० ॥ नारायणायदेवाय
सहस्राक्षायभूतये ॥ ब्रह्मचर्येणमौनेनस्थानवीरासनेनच ॥ २१ ॥ क्रमेणचसुराःसर्वेतपोयोगंसमास्थिताः ॥ कश्यप-
स्तत्रभगवान्प्रसादार्थंमहात्मनः ॥ २२ ॥ उदीरयंश्चवेदोक्तंयमाहुःपरमंस्तवं ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येपंच-
विंशोऽध्यायः ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
ॐनमोभगवतेवासुदेवाय ॥ कश्यपउवाच ॥ एकशृंग वृषसिंधो वृषाकपे सुरवृष अनादिसंभव रुद्र कपिल विष्व-

१ इदं भगवान् विष्णुर्वक्ष्यतीतिज्ञेयम् ।

क्सेन सर्वभूतपते ध्रुव धर्म वैकुंठ वृषावर्त्त अनादिमध्यनिधन धनंजय शुचिश्रव पृश्नितेजः निजजय अमृतशय सनातन त्रिधामन् तुषित महातत्त्व लोकनाथ पद्मनाभ विरंचे बहुरूप अक्षय अक्षर हव्यभुक् खंडपरशो शक्र मुंजकेश हंस महादक्षिण हृषीकेश सूक्ष्म महानियमधर विरजः लोकप्रतिष्ठ अरूप अग्रज धर्मज धर्मनाभ हव्यभुक् गभस्तिनाथ शतक्रतुनाथ चंद्ररथ सूर्यतेजः समुद्रवासः अज सहस्त्रशिरः सहस्त्रपाद अयोमुख महापुरुष पुरुषोत्तम सहस्त्रबाहो सहस्त्रमूर्त्ते सहस्त्रास्य सहस्त्रसंभव विश्वंत्वामाहुः पुष्पहास चरम त्वमेववौषट् वषट्कारंत्वामाहुरग्र्यं मखेषुप्राशितारं शतधारं सहस्त्रधारं बभूव भूर्वद्य भूनाथ भृगुपुत्र वेदवेद्य ब्रह्मशय ब्राह्मणप्रिय त्वमेवद्यौरसि मातरिश्वासि धर्मोसि होता पोता हंता मंता नेता होमहेतुस्त्वमेव अग्र्यश्चधाम्नात्वमेवऋग्भिः सुभांड इज्योऽसि सुमेधोसि समिधस्त्वमेव मतिर्गतिर्दातात्वमसि मोक्षोऽसि योगोऽसि सृजासि धाता परमयज्ञोऽसि सोमोसि दीक्षितोऽसि दक्षिणासि विश्वमसि स्थविर हिरण्यगर्भ नारायण त्रिनयन आदिवर्ण आदित्यतेजः महापुरुष पुरुषोत्तम आदिदेव भूमिक्रम त्रिविक्रम प्रभाकर शंभो स्वयंभूः भूतादिमहाभूतोऽसि विश्वभूत विश्वंत्वमेव विश्वगोप्तासि पवित्रमसि विश्वभव ऊर्ध्वकर्मन् अमृत दिवस्पते वाचस्पते घृतार्चे अनंतकर्म्मवंश प्राग्वंशधीः त्वमश्वमेधः वरार्थिनांवरदोऽसित्वं ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांतुभ्यंहोत्रात्मनेनमः ॥ १ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येपांड्वंशोऽध्यायः ॥ २६ ॥

लोमहर्षणउवाच ॥ नारायणस्तुभगवान्श्रुत्वैवंपरमंस्तवं ॥ ब्रह्मजेनद्विजेंद्रेणकश्यपेनसमीरितं ॥ १ ॥ उवाचवचनंसम्यक्तुष्टःपुष्टपदाक्षरं ॥ श्रीमान्प्रीतमनादेवोयद्वदेत्प्रभुरीश्वरः ॥ २ ॥ वरंवृणुध्वंभद्रंवोवरदोस्मिसुरोत्तमाः ॥ कश्यप उवाच ॥ सुप्रीतोसिसुरश्रेष्ठसर्वेषामेवनिश्चयात् ॥ ३ ॥ वासवस्यानुजोभ्राताज्ञातीनांनंदवर्द्धनः ॥ अदित्याअपिच

श्रीमान्भगवानस्तुवैसुतः ॥ ४ ॥ अदितिर्देवमाताचएतमेवार्थमुत्तमं ॥ पुत्रार्थंवरदंप्राहभगवंतंवरार्थिनी ॥ ५ ॥ दे-
वाऊचुः ॥ निःश्रेयसार्थंसर्वेषांदेवतानांमहेश्वरः ॥ त्राताभर्ताचदाताचशरणंभवनःसदा ॥ ६ ॥ लोमहर्षणउ-
वाच ॥ ततस्तानब्रवीद्विष्णुर्देवांस्तान्स्वयमेवच ॥ सर्वेषामेवयुष्माकंयेभविष्यंतिशत्रवः ॥ मुहूर्तमपितेसर्वेनस्थास्यंति
ममाग्रतः ॥ ७ ॥ हत्वासुरगणाःसर्वान्यज्ञभागाग्रभोजिनः ॥ हव्यादांश्चासुरान्सर्वान्कव्यादांश्चपितॄनपि ॥ ८ ॥
करिष्येविबुधश्रेष्ठाःपारमेष्ठ्येनकर्मणा ॥ यथायातेनमार्गेणनिवर्तध्वंसुरोत्तमाः ॥ ९ ॥ एवमुक्तेतुदेवेनविष्णुनाप्रभवि-
ष्णुना ॥ ततःप्रहृष्टमनसःपूजयंतिस्मतंप्रभुं ॥ १० ॥ विश्वेदेवामहात्मानःकश्यपोऽदितिरेवच ॥ नमस्कृत्यसुरेशाय
तस्मैदेवायरंहसा ॥ ११ ॥ प्रयाताःप्राग्दिशंसर्वेविपुलंकश्यपाश्रमं ॥ तेकश्यपाश्रमंगत्वाकुरुक्षेत्रवनंमहत् ॥ १२ ॥
संप्रसाद्यादितिंतत्रतपसेतांन्ययोजयन् ॥ साचचारतपोघोरंवर्षाणामयुतंतदा ॥ १३ ॥ तस्यानाम्नावनंदिव्यंसर्वकाम-
प्रदंशुभं ॥ आराधनायकृष्णस्यवाग्यतावायुभोजना ॥ १४ ॥ दैत्यैर्निराकृतान्दृष्ट्वासभयान्नृषिसत्तमान् ॥ वृथापुत्राह-
मितिसानिर्वेदात्प्रणताहरिं ॥ १५ ॥ तुष्टाववाग्भिरिष्टाभिःस्तुतिभिःसातपोधनाः ॥ शरण्यंशरणंविष्णुंप्रणताभक्तवत्स-
लं ॥ १६ ॥ देवदैत्यमयंचापिमध्यमांतस्वरूपिणं ॥ १७ ॥ अदितिरुवाच ॥ नमःकृत्यार्तिनाशायनमःपुष्करमालिने
॥ नमःपरमकल्याणकल्याणायादिवेधसे ॥ १८ ॥ नमःपंकजनेत्रायनमःपंकजनाभये ॥ नमःपंकजसंभूतिसंभवाया-
त्मयोनये ॥ १९ ॥ श्रियःकांतायदांतायदान्तदृश्यायचक्रिणे ॥ नमःपद्मासिहस्तायनमःकनकवाससे ॥ २० ॥ तथा-
त्मज्ञानयज्ञाययोगिचिंत्याययोगिने ॥ निर्गुणायविशेषायहरयेब्रह्मरूपिणे ॥ २१ ॥ जगत्संतिष्ठतेयत्रजगतोयोनदृश्यते ॥
नमःस्थूलातिसूक्ष्मायतस्मैदेवायशार्ङ्गिणे ॥ २२ ॥ यंनपश्यंतिपश्यंतोजगदप्यखिलंनराः ॥ अपश्यद्भिर्जगद्यश्चदृश्य-

तेहृदिसंस्थितं ॥ २३ ॥ बाहिर्ज्योतिरलक्ष्योयोलक्ष्यतेज्योतिपःपरः ॥ यस्मिन्नेवयतश्चैवयस्यैतदखिलंजगत् ॥ २४ ॥
तस्मैसमस्तजगतांसुनाथायनमोनमः ॥ आद्यःप्रजापतिर्यस्तुपितृणांयःपरःपतिः ॥ २५ ॥ पतिःसुराणांयस्तस्मैनमः
कृष्णायवेधसे ॥ यःप्रवृत्तैर्निवृत्तैश्चकर्मभिस्तुविरज्यते ॥ २६ ॥ स्वर्गापवर्गफलदोनमस्तस्मैगदाभृते ॥ यश्चिंत्यमा-
नोमनसासद्यःपापंव्यपोहति ॥ २७ ॥ नमस्तस्मैविशुद्धायपरस्मैहरिमेधसे ॥ येपश्यंत्यखिलाधारमीशानमजमव्ययं
॥ २८ ॥ नपुनर्जन्ममरणंप्राप्नुवंतिनमामितं ॥ योयज्ञैर्यज्ञपुरुषइज्यतेयज्ञमास्थितः ॥ २९ ॥ तंयज्ञपुरुषंविष्णुंनमा-
मिप्रभुमीश्वरं ॥ गीयतेसर्ववेदेषुवेदाविद्भिर्विदांगतिः ॥ ३० ॥ यस्तस्मैवेदवेद्यायविष्णवेजिष्णवेनमः ॥ यतोविश्वंसमु-
द्भूतंयस्मिन्प्रलयमेष्यति ॥ ३१ ॥ विश्वोद्भवप्रतिष्ठायनमस्तस्मैमहात्मने ॥ ब्रह्मादिस्तंबपर्यंतंव्याप्तंयेनचराचरं ॥
३२ ॥ मायाजालंसमुन्नद्धंतमुपेंद्रंनमाम्यहं ॥ यस्तृतीयस्वरूपस्थोबिभर्त्यखिलमीश्वरः ॥ ३३ ॥ विश्वंविश्वपतिंवि-
ष्णुंतंनमामिप्रजापतिं ॥ मूर्तंतमोऽसुरमयंतद्विनाविनिहंतियः ॥ ३४ ॥ रात्रिजंसूर्यरूपीचतमुपेंद्रंनमाम्यहं ॥ यस्या-
क्षिणीचंद्रसूर्यौसर्वलोकेशुभाशुभम् ॥ ३५ ॥ पश्यतःकर्मसततंतमुपेन्द्रंनमाम्यहम् ॥ यस्मिन्सर्वेश्वरेनित्यंसत्यमेतन्म-
योदितं ॥ ३६ ॥ नानृतंतमजंविष्णुंनमामिप्रभुमव्ययं ॥ यदेतत्सत्यमुक्तंमेभूयश्चातोजनार्दन ॥ सत्येनतेनसकलाःपूर्य-
तांमेमनोरथाः ॥ ३७ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ॥ ॥
लोमहर्षणउवाच ॥ एवंस्तुतोथभगवान्वासुदेवउवाचतां ॥ अदृश्यःसर्वभूतानांतस्याःसंदर्शनेस्थितः ॥ १ ॥ श्रीभगवा-
नुवाच ॥ मनोरथांस्त्वमदितेयानिच्छस्यभिवाञ्छितान् ॥ तांस्त्वंप्राप्स्यसिधर्मज्ञेमत्प्रसादान्नसंशयः ॥२॥ शृणुत्वंचमहा-
भागेवरोयस्तेहृदिस्थितः ॥ मद्दर्शनंहिविफलंनकदाचिद्भविष्यति ॥ ३ ॥ यश्चेहमद्वनेस्थितात्रिरात्रंवैकरिष्यति ॥ सर्वे

कामाःसमृद्ध्यंतेमनसायान्निहेच्छति ॥ ४ ॥ दूरस्थोऽपिवनंयस्तुद्यदितेस्मरतेनरः ॥ सोऽपियातिपरंस्थानंकिंपुनर्निव-
सन्नरः ॥ ५ ॥ यश्चेहब्राह्मणान्पञ्चत्रीन्वाद्वावेकमेववा ॥ भोजयेच्छ्रद्धयायुक्तःसयातिपरमांगतिम् ॥ ६ ॥ अदितिरु-
वाच ॥ यदिदेवःप्रसन्नस्त्वंभक्त्यामेभक्तवत्सल ॥ त्रैलोक्याधिपतिःपुत्रस्तदस्तुममवासवः ॥ ७ ॥ हृतंराज्यंहृतश्चास्यय-
ज्ञभागइहासुरैः ॥ त्वयिप्रसन्नेवरदतत्प्राप्नोतुसुतोमम ॥ ८ ॥ हृतंराज्यंनदुःखायममपुत्रस्यकेशव ॥ प्रपन्नदायविभ्रं-
शःपीडांमेकुरुतेहृदि ॥ ९ ॥ भगवानुवाच ॥ कृतःप्रसादोहिमयातवदेवियथेप्सितं ॥ स्वांशेनचैवतेगर्भेसंभविष्यामि
कश्यपात् ॥ १० ॥ तवगर्भसमुद्भूतस्ततस्तेयेसुरारयः ॥ तानहंनिहनिष्यामिनिर्वृताभवनंदिनि ॥ ११ ॥ अदिति-
रुवाच ॥ प्रसीददेवदेवेशनमस्तेविश्वभावन ॥ नाहंत्वामुदरेवोढुमीशशक्ष्यामिकेशव ॥ यस्मिन्प्रतिष्ठितंसर्वंविश्वयो-
निस्त्वमीश्वरः ॥ १२ ॥ श्रीभगवानुवाच ॥ अहंचत्वांवहिष्यामिस्वात्मानंचैवनंदिनि ॥ नचपीडांकरिष्यामिस्वस्ति
तेऽस्तुव्रजाम्यहं ॥ १३ ॥ लोमहर्षणउवाच ॥ इत्युक्त्वांतर्हितेदेवेदितिर्गर्भंसमादधे ॥ १४ ॥ गर्भस्थितेततःकृष्णेच-
चालसकलाक्षितिः ॥ चकंपिरेमहाशैलाजग्मुःक्षोभंमहाब्धयः ॥ १५ ॥ यतोयतोऽदितिर्यातिददातिपदमुत्तमं ॥ ततस्ततः
क्षितिःखेदान्ननामद्विजपुंगवाः ॥ १६ ॥ दैत्यानामपिसर्वेषांगर्भस्थेमधुसूदने ॥ बभूवतेजसोहानिर्यथोक्तंपरमात्मना
॥ १७ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येअष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ ॥ ॥
लोमहर्षणउवाच ॥ निस्तेजसोऽसुरान्दृष्ट्वासमस्तानसुरेश्वरः ॥ प्रह्लादमथपप्रच्छबलिरात्मपितामहम् ॥ १ ॥ बलिरुवाच ॥
तातनिस्तेजसोदैत्यानिर्दग्धाइववह्निना ॥ किमेतेसहसैवाद्यब्रह्मदंडहताइव ॥ २ ॥ दुरिष्टंकिंनुदैत्यानांकिंकृत्यासुरनिर्मिता ॥
नाशायैषासमुद्भूतायेनानिस्तेजसोऽसुराः ॥ ३ ॥ लोमहर्षणउवाच ॥ इत्थंदैत्यवरस्तेनपृष्टःपौत्रेणब्राह्मणाः ॥ चिरंध्यात्वाज-

गादैवमसुरंतंतदाबलिं ॥४॥ प्रह्लादउवाच ॥ चलंतिगिरयोभूमिर्जहातिसहजांस्थितिं ॥ नद्यःसमुद्राःक्षुभितादैत्यानिस्तेज-
सःकृताः ॥ ५ ॥ सूर्योदयेयथापूर्वंतथागच्छंतिनग्रहाः ॥ देवतानांपरालक्ष्मीःकारणेनानुमीयते ॥ ६ ॥ महदेतन्महाबाहो
कारणंदानवेश्वर ॥ नह्यल्पमितिमंतव्यंक्रियाकार्याकथंचन ॥ ७ ॥ लोमहर्षणउवाच ॥ इत्युक्त्वादानवपतिंप्रह्ला-
दःसोऽसुरोत्तमः ॥ अत्यर्थभक्तोदेवेशंजगाममनसाहरिं ॥ ८ ॥ सध्यानंप्रथमंकृत्वाप्रह्लादस्तुततोऽसुरः ॥ विचारया-
मासततोयथादेवंजनार्दनं ॥ ९ ॥ सददर्शोदरेतस्याःप्रह्लादोवामनाकृतिं ॥ तदंतश्चवसूनरुद्रानश्विनौमरुतस्तथा
॥ १० ॥ साध्यान्विश्वांस्तथादेवान्गंधर्वोरगराक्षसान् ॥ विरोचनंचतनयंबलिंचासुरनायकं ॥ ११ ॥ जंभंकुजंभंनरकं
बाणमन्यांस्तथासुरान् ॥ आत्मानंगगनंवायुंमनस्तोयंहुताशनं ॥ १२ ॥ समुद्राद्रिद्रुमद्वीपान्सरांसिचपशून्महीं ॥
वयोमनुष्यानखिलांस्तथैवचसरीसृपान् ॥ १३ ॥ समस्तलोकस्रष्टारंब्रह्माणंभवमेवच ॥ ग्रहनक्षत्रताराद्यान्पींश्चैव
प्रजापतिं ॥ १४ ॥ संपश्यन्विस्मयाविष्टःप्रकृतिस्थःक्षणात्पुनः ॥ प्रह्लादःप्राहदैत्येंद्रंबलिंवैरोचनंतदा ॥ १५ ॥
वत्सज्ञातंमयासर्वंयदर्थंभवतामियं ॥ तेजसोहानिरुत्पन्नातच्छृणुत्वमशेषतः ॥ १६ ॥ देवदेवोजगद्योनिर्जगदादिरजः
प्रभुः ॥ अनादिरादिर्विश्वस्यवरेण्योवरदोहरिः ॥ १७ ॥ परावराणांपरमःपरापरवतांगतिः ॥ प्रभुःप्रमाणंमानानांस-
प्तलोकगुरोर्गुरुः ॥ स्थितिंकर्तुंजगन्नाथोह्यदित्यागर्भगःप्रभुः ॥१८॥ प्रभुःप्रभूणांपरमःपराणामनादिमध्योभगवाननंतः॥
त्रैलोक्यमंशेनसनाथमेकःकर्तुंमहात्मादितिजोवतीर्णः ॥१९॥ नयस्यरुद्रानचपद्मयोनिर्नेन्द्रोनसूर्येंदुमरीचिमिश्राः॥ जानं-
तिदैत्याधिपतेस्वरूपंसवासुदेवःकलयावतीर्णः ॥२०॥ यमक्षरंवेदविदोवदंतिविशंतियत्रैवविधूतपापाः ॥ यस्मिन्प्रविष्टा

१ उदरगः। कुक्षिभ्रूणार्भकागर्भाइत्यमरोक्तेः। २ बले।

नपुनर्भवंतितंवासुदेवंप्रणमामिचाद्यं ॥ २१ ॥ भूतान्यशेषाणियतोभवंतियथोर्मयस्तोयनिधेरजस्रं ॥ लयंचयस्मिन्प्र-
लयेप्रयांतितंवासुदेवंप्रणतोस्म्यचिंत्यं ॥ २२ ॥ रूपंचचक्षुर्ग्रहणेत्वगेषास्पर्शग्रहेऽथोरसनारसस्य ॥ घ्राणंचगंधग्रहणे
नियुक्तंत्वग्घ्राणचक्षूंषिनतानियस्य ॥ २३ ॥ सर्वेश्वरोवेदितव्यःसयुक्त्याह्यनादिमध्यंत्वनघंचदेवं ॥ नमाम्यहंतंहरिमी-
शितारंलोकैकनाथंभवभीतिनाशनं ॥ २४ ॥ येनैकदंष्ट्रेणसमुद्धृतेयंधराचलाधारयतीहविश्वं ॥ इदंचहर्तासकलंजगद्य-
स्तमीड्यमीशंप्रणतोस्मिविष्णुं ॥ २५ ॥ अंशावतीर्णेनचयेनगर्भेहृतानितेजांसिमहासुराणां ॥ नमामितंदेवमनंतमी-
शमशेषसंसारतरोःकुठारं ॥ २६ ॥ देवोजगद्योनिरयंमहात्मासषोडशांशेनमहासुरेंद्र ॥ सुरेंद्रमातुर्जठरंप्रविष्टोहृता-
निवस्तेनबलंवपूंषि ॥ २७ ॥ बलिरुवाच ॥ तातकोऽयंहरिर्नामयतोनोभयमागतं ॥ संतिमेशतशोदैत्यावासुदेवबला-
धिकाः ॥ २८ ॥ विप्रचित्तिःशिबिःशंभुर्जंभःकुंभस्तथैवच ॥ हयशिराअश्वशिराभंगकारोमहाहनुः ॥ २९ ॥ वाता-
पिःप्रवशःशंभुःकुक्कराक्षश्चदुर्जयः ॥ एतेचान्येचमेसंतिदैतेयादानवास्तथा ॥ ३० ॥ महाबलामहावीर्याभूभारधरणक्ष-
माः ॥ एषामेकैकशः[2]कृष्णेनवीर्यबलसंमितः ॥ ३१ ॥ लोमहर्षणउवाच ॥ पौत्रस्यैतद्वचःश्रुत्वाप्रह्लादोदैत्यपुंगवः ॥
सक्रोधश्चबलिंप्राहवैकुंठ[3]ाक्षेपवादिनं ॥ ३२ ॥ विनाशमुपयास्यंतिदैत्यास्तेचापिदानवाः ॥ येषांत्वमीदृशोराजादुर्बु-
द्धिरविवेकवान् ॥ ३३ ॥ देवदेवंमहाभागंवासुदेवमजंविभुं ॥ त्वामृतेपापसंकल्पःकोन्यएवंवदिष्यति ॥ ३४ ॥ यए-
तेभवताप्रोक्ताःसमस्तादैत्यदानवाः ॥ सब्रह्मकास्तथादेवाःस्थावरांताश्चजातयः ॥ ३५ ॥ त्वंचाहंचजगच्चेदंसाद्रिद्रुम-
नदीवनं ॥ समुद्रद्वीपलोकाश्चयच्चेङ्ग्[4]यच्चनेङ्गति ॥ ३६ ॥ यस्याभिवाद्यवंद्यस्यव्यापिनःपरमात्मनः ॥ एकैकांशकला-

१ प्रलयकाले । २ एकैकस्येत्यर्थः । ३ वैकुण्ठो भगवान्, वैकुण्ठो विष्टरश्रवाः कोशः । ४ इगिधातोर्गत्यर्थतया चराचरमित्यर्थः ।

जन्मकः कस्तमेवंवदिष्यति ॥ ३७ ॥ ऋतेविनाशाभिमुखंत्वामेकमविवेकिनं ॥ दुर्बुद्धिमजितात्मानंवृद्धानांशासनातिगं ॥ ३८ ॥ शोच्योऽहंयस्यमेगेहेजातस्तवपिताधमः ॥ यस्यत्वमीदृशःपुत्रोदेवदेवावमानकः ॥ ३९ ॥ तिष्ठत्यनेकसंसारसंघातौघविनाशिनी ॥ कृष्णेभक्तिरहंतावदवेक्ष्योभवतानकिं ॥ ४० ॥ नमेप्रियतरंकृष्णादपिदेहंमहात्मनः ॥ इतिजानात्ययंलोकोभवांश्चदितिजाधमः ॥ ४१ ॥ जानन्नपिप्रियतरंप्राणेभ्योपिहरिंमम ॥ निंदांकरोपितस्यत्वमकुर्वन्गौरवंमम ॥ ४२ ॥ विरोचनस्तवगुरुर्गुरुस्तस्याप्यहंबले ॥ ममापिसर्वजगतांगुरुर्नारायणोहरिः ॥ ४३ ॥ निंदांकरोपितस्मिंस्त्वंकृष्णेगुरुगुरोर्गुरौ ॥ यस्मात्तस्मादिहैश्वर्यादचिराद्भ्रंशमेष्यसि ॥ ४४ ॥ सदेवोजगतांनाथोबलेममजनार्दनः ॥ नन्वहंप्रत्यवेक्ष्यस्तेपितुर्मान्योत्रयोगुरुः ॥ ४५ ॥ एतावन्मात्रमप्यत्रनिंदताजगतोगुरुं ॥ नापेक्षितंत्वयायस्मात्तस्माच्छापंददामिते ॥ ४६ ॥ यथामेशिरसश्छेदादिदंगुरुतरंवचः ॥ त्वयोक्तमच्युताक्षेपिराज्यभ्रष्टस्तथापत ॥ ४७ ॥ यथानकृष्णादपरःपरित्राणंभवार्णवे ॥ तथाऽचिरेणपश्येयंभवंतंराज्यविच्युतं ॥ ४८ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्यएकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

लोमहर्षणउवाच ॥ इतिदैत्यपतिःश्रुत्वागुरोर्वचनमप्रियं ॥ प्रसादयामासगुरुंप्रणिपत्यपुनःपुनः ॥ १ ॥ बलिरुवाच ॥ प्रसीदतातमाकोपंकुरुमोहहतेमयि ॥ बलावलेपमूढेनमयैतद्वाक्यमीरितं ॥ २ ॥ मोहापहतविज्ञानःपापोहंदितिजोत्तम ॥ यच्छप्तोस्मिदुराचारस्तत्साधुभवताकृतं ॥ ३ ॥ राज्यभ्रंशंयशोभ्रंशंप्राप्स्यामीतिततस्त्वहं ॥ विषण्णोस्मियथातातततैवाविनयःकृतः ॥ ४ ॥ त्रैलोक्यैश्वर्यमन्यद्वाकिमपीहनदुर्लभं ॥ संसारेदुर्लभास्तातगुरवोयेभवद्विधाः ॥ ५ ॥

१ मत्स्यकच्छादिरूपम् ।

तत्प्रसीदनमेकोपंकर्त्तुमर्हसिदैत्यप ॥ त्वत्कोपपरिदग्धोहंपरितप्येदिवानिशं ॥ ६ ॥ प्रह्लादउवाच ॥ वत्सकोपेनमे
मोहोजानितस्तेनतेमया ॥ दत्तःशापोविवेकश्चमोहेनापकृतोमम ॥ ७ ॥ यदिमोहेनमेज्ञानंनक्षिप्तंस्यान्महासुर ॥
तत्कथंसर्वगंजानन्हरिंकंचिच्छपाम्यहं ॥ ८ ॥ योऽयंशापोमयादत्तोभवतेदैत्यपुंगव ॥ भाव्यमेतेननतूनंतस्मात्त्वंमा-
विषीदवै ॥ ९ ॥ अद्यप्रभृतिदेवेशेभगवत्यच्युतेहरौ ॥ भवेस्त्वंभक्तिमानीशेसतेत्राताभविष्यति ॥ १० ॥ शापंप्रा-
प्यचमेवीरदेवेशःसंस्मृतस्त्वया ॥ तथातथावदिष्यामिश्रेयस्त्वंप्राप्स्यसेयथा ॥ ११ ॥ लोमहर्षणउवाच ॥ अदिति-
र्वरमासाद्यसर्वकामसमृद्धिदं ॥ क्रमेणैवहरिर्दृष्टौदेवःप्राप्तोमहायशाः ॥ १२ ॥ ततोमासेचदशमेकालेप्रसवआगते
॥ अजायतसगोविंदोभगवान्वामनाकृतिः ॥ १३ ॥ अवतीर्णेजगन्नाथेतस्मिन्सर्वामरेश्वरे ॥ देवाश्चमुमुचुर्दुःखंदेवमा-
ताऽदितिस्तथा ॥ १४ ॥ ववुर्वाताःसुखस्पर्शाःविरजस्कमभून्नभः ॥ धर्मेचसर्वभूतानांतदामतिरजायत ॥ १५ ॥ नोद्वे-
गश्चाप्यभूद्देहेमानवानांद्विजोत्तमाः ॥ तदाहिसर्वभूतानांधर्मेमतिरजायत ॥ १६ ॥ तंजातमात्रंभगवान्ब्रह्मालोकपि-
तामहः ॥ जातकर्मादिकांकृत्वाक्रियांतुष्टावचप्रभुः ॥ १७ ॥ ब्रह्मोवाच ॥ जयाधीशजयाजेयजयसर्वगुरोहरे ॥ जन्म-
मृत्युजरातीतजयानंतजयाच्युत ॥ १८ ॥ जयाजितजयाशेषजयाव्यक्तस्थितेजय ॥ परमार्थार्थसर्वज्ञज्ञानज्ञेयार्थनि-
श्चित ॥ १९ ॥ जयाशेषजगत्साक्षिन्जगत्कर्त्तर्जगद्गुरो ॥ जगतोऽजगत[1]श्चेशास्थितौपालयसेजय ॥ २० ॥ जयाखिल
जयाशेषजयसर्वहृदिस्थित ॥ जयादिमध्यांतमयसर्वज्ञानमयोत्तम ॥ २१ ॥ मुमुक्षुभिरनिर्देश्यनित्यहृष्टजयेश्वर ॥ यो-
गिभिर्मुक्तिकामैस्तुदमादिगुणभूषण ॥ २२ ॥ जयातिसूक्ष्मदुर्ज्ञेयजगन्मूलजगन्मय ॥ जयसूक्ष्मातिसूक्ष्मत्वंजययो-

१ गमधातोर्जगादिति, तथाच चराचरस्येत्यर्थः ।

गिन्नतींद्रिय ॥ २३ ॥ जयस्वमायायोगस्थशेष[1]भोगशयाक्षर ॥ जयैकदंष्ट्राग्रांतेनसमुद्धृतवसुंधर ॥ २४ ॥ नृकेसरि-
न्सुरारातिवक्षःस्थलविदारण ॥ सांप्रतंजयविश्वात्मन्मायावामनकेशव ॥ २५ ॥ स्वमायापटलच्छन्नजगद्धातर्जनार्दन
॥ जयाचिंत्यजयानेकस्वरूपैके[2]निधेप्रभो ॥ २६ ॥ वर्द्धस्ववर्द्धितानेकविकारप्रकृतेहरे ॥ त्वयैषाजगतीशेषसंस्थिता
धर्मपद्धतिः ॥ २७ ॥ नत्वामहंनचेशानोनेंद्राद्यास्त्रिदशाहरे ॥ ज्ञातुमीशानऋषयःसनकाद्यानयोगिनः ॥ २८ ॥ त्वंमा-
यापटसंवीतोजगत्यत्रजगत्पते ॥ कस्त्वांवेत्स्यातिसर्वेशत्वत्प्रसादंविनानरः ॥ २९ ॥ त्वमेवाराधितोयेनप्रसादसुमुखप्र-
भो ॥ सएवकेवलंदेववेत्तित्वांनेतरोजनः ॥ ३० ॥ नंदीश्वरेश्वरेशानविभोवर्द्धस्ववामन ॥ प्रभवायास्यविश्वस्यविश्वा-
त्मन्पृथुलोचन ॥ ३१ ॥ लोमहर्षणउवाच ॥ एवंस्तुतोहृषीकेशःसतदावामनाकृतिः ॥ प्रहस्यभावगंभीरमुवाचारूढ-
संपदम् ॥ ३२ ॥ स्तुतोहंभवतापूर्वमिंद्राद्यैःकश्यपेनच ॥ मयाचास्यप्रतिज्ञातमिंद्रस्यभुवनत्रयं ॥ ३३ ॥ भूयश्चाहं
स्तुतोऽदित्यातस्याश्चापिमयाश्रुतं[3] ॥ यथाशक्रायदास्यामित्रैलोक्यंहतकंटकं ॥ ३४ ॥ सोऽहंतथाकरिष्यामियथेंद्रोज-
गतःपतिः ॥ भविष्यतिसहस्राक्षःसत्यमेतद्ब्रवीमिवः ॥ ३५ ॥ ततःकृष्णाजिनंब्रह्माहृषीकेशायदत्तवान् ॥ यज्ञोपवीतं
भगवान्ददौतस्यबृहस्पतिः ॥ ३६ ॥ आषाढमददाद्दंडं[4]मरीचिर्ब्रह्मणःसुतः ॥ कमंडलुंवसिष्ठश्चकुशांश्चीरमथांगिराः ॥
आसनंचैवपुलहःपुलस्त्यःपीतवाससी ॥ ३७ ॥ उपतस्थुश्चतंवेदाःप्रणवोच्चारभूषणाः ॥ शास्त्राण्यशेषाणितथासांख्य-
योगोक्तयस्तथा ॥ ३८ ॥ सवामनोजटीदंडीछत्रीधृतकमंडलुः ॥ सर्वदेवमयोदेवोबलेरध्वरमभ्यगात् ॥ ३९ ॥ यत्र
यत्रपदंविप्राभूभागेवामनोददौ ॥ ददातिभूमिर्विवरंतत्रतत्राभिपीडिता ॥ ४० ॥ सवामनोजड[5]गतिर्मृदुगच्छन्सपर्वतां ॥

१ शेषस्य एतन्नाम्नो महानागस्य भोगः शरीरं तत्र शेते यस्तस्य संबुद्धिः । २ एकनिधे एकस्थान । ३ प्रतिश्रुतम् । ४ पालाशो दण्ड आषाढः । ५ जडा मन्दा गतिर्यस्येत्यर्थः ।

सादिद्वीपवनांसर्वांचालयामाससमेदिनीं ॥ ४१ ॥ बृहस्पतिस्तुशनकैर्मार्गंदर्शयतेशुभं ॥ तथाक्रीडाविनोदार्थेंगतिर्जगति
साभवत् ॥ ४२ ॥ ततःशेषोमहानागोनिःसृत्यासौरसातलात् ॥ साहाय्यंकल्पयामासदेवदेवस्यचक्रिणः ॥ ४३ ॥ त-
दस्यापिचविख्यातंमहाविपुलमुत्तमं ॥ तस्यसंदर्शनादेवनागेभ्योनभयंभवेत् ॥ ४४ ॥ इतिश्रीवामनपुराणेसरोमाहा-
त्म्येत्रिंशोऽध्यायः ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

लोमहर्षणउवाच ॥ सपर्वतवनामुर्वींदृष्ट्वासंक्षुभितांबलिः ॥ पप्रच्छोशनसंशुक्रंप्रणिपत्यकृतांजलिः ॥ १ ॥ आचार्यक्षोभ-
मायातिसाब्धिभूभृद्वनामही ॥ कस्मान्नासुरान्भागान्प्रतिगृह्णंतिवह्नयः ॥ २ ॥ इतिपृष्टोऽथबलिनाकाव्योवेदविदां
वरः ॥ उवाचदैत्याधिपतिंचिरंध्यात्वामहामतिः ॥ ३ ॥ अवतीर्णोजगद्योनिःकश्यपस्यगृहेहरिः ॥ वामनेनेहरूपेणप-
रमात्मासनातनः ॥ ४ ॥ सनूनंयज्ञमायातितवदानवपुंगवः ॥ यस्यपादप्रतिक्षेपादियंप्रचलितामही ॥ ५ ॥ कंपंते
गिरयश्चैवसंक्षुब्धामकरालयाः ॥ नैनंभूतपतिंभूमिःसमर्थावोढुमीश्वरं ॥ ६ ॥ सदेवासुरगंधर्वयक्षराक्षसपन्नगा ॥ अ-
नेनैवधृताभूमिरापोग्निःपवनोनभः ॥ धारयत्यखिलान्देवान्मनुष्यांश्चमहासुरान् ॥ ७ ॥ इयमस्यजगद्धातुर्मायाकृ-
ष्णस्यदुस्त्यजा ॥ धार्यधारकभावेनयथासंपीडितंजगत् ॥ ८ ॥ तत्सन्निधानादसुराभागहाराःसुरोत्तमाः ॥ भुंजतेना-
सुरान्भागानपिवैतेत्रयोग्नयः ॥ ९ ॥ शुक्रस्यवचनंश्रुत्वाहृष्टरोमाब्रवीद्बलिः ॥ धन्योऽहंकृतपुण्यश्चयतोयज्ञपतिः
स्वयं ॥ १० ॥ यज्ञमभ्यागतोब्रह्मन्मत्तःकोऽन्योधिकःपुमान् ॥ यंयोगिनःसदोद्युक्ताःपरमात्मानमव्ययं ॥ ११ ॥ द्र-
ष्टुमिच्छंतिदेवोसौममाध्वरमुपेष्यति ॥ यन्मयाचार्यकर्त्तव्यंतन्ममादेष्टुमर्हसि ॥ १२ ॥ शुक्रउवाच ॥ यज्ञभागभुजो

१ नहुतंचयथाग्नयः—इतिपाठे भागान् अहुतम् इति च्छेदः । यथा अहुतं न भुञ्जते फलापूर्वहेतुकंनाश्नंति वह्नयस्तथा आसुरान् भागान् न भुञ्जते इत्यन्वयः ।

देवावेदप्रामाण्यतोऽसुर ॥ त्वयातुदानवादैत्ययज्ञभागभुजःकृताः ॥ १३ ॥ अयंचदेवःसत्वस्थःकरोतिस्थितिपालनं ॥
विसृष्टंचतथैवांतेस्वयमत्तिप्रजाःप्रभुः ॥ १४ ॥ त्वयातुवंचितादेवानूनंविष्णुःस्थितौस्थितः ॥ विदित्वैतन्महाराजकुरुय-
त्तेमनोगतं ॥ १५ ॥ त्वयाचदैत्याधिपतेस्वल्पकेपिहिवस्तुनि ॥ प्रतिज्ञानैववोढव्यावाच्यंसामतथाफलं ॥ १६ ॥ कृ-
तकृत्यस्यदेवस्यदेवार्थंचापिकुर्वतः ॥ नालंदातुमहंदेवत्वयावाच्यंतुयाचता ॥ कृष्णस्यदेवभूत्यर्थं प्रवृत्तस्यमहासुर
॥ १७ ॥ बलिरुवाच ॥ ब्रह्मन्कथमहंब्रूयामन्येनापिहियाचितः ॥ नास्तीतिकिमुदेवेशसंसाराघौघहारिणं ॥ १८ ॥ व्र-
तोपवासैर्विविधैर्यःप्रभुर्गृह्यतेहरिः ॥ सचेद्वक्ष्यतिदेहीतिगोविंदःकिमतोऽधिकं ॥ १९ ॥ यत्प्रीतिकरणायैवपुंभिःशौच-
गुणान्वितैः ॥ यज्ञाःक्रियंतेदेवश्चसमांदेहीतिवक्ष्यति ॥ २० ॥ तत्साधुसुकृतंकर्मतपःसुचरितंचनः ॥ यन्मयादत्तमीशश्च
स्वयमादास्यतेहरिः ॥ २१ ॥ नास्तीत्यहंगुरोवक्ष्येकथमागतमीश्वरं ॥ प्राणत्यागंकरिष्यामिननास्तीतिनमेकचित्
॥ २२ ॥ तदेतद्वांछितंप्राप्तंनूनंचात्रनसंशयः ॥ यज्ञेऽस्मिन्यदियज्ञेशोयाचतेमांजनार्दनः ॥ २३ ॥ निजमूर्द्धानमप्य-
स्मैदास्याम्येवाविचारितम् ॥ समेवक्ष्यतिदेहीतिगोविंदःकिमतोऽधिकं ॥ २४ ॥ नास्तीतियन्मयानोक्तमन्येषामपिया-
चतां ॥ वक्ष्यामिकथमायातेतस्मिन्नभ्यागतेऽच्युते ॥ २५ ॥ श्लाघ्यएवहिधीराणांदानाच्चापत्समागमः ॥ २६ ॥
नबाधाकारियद्दानंतदंगबलवत्स्मृतं ॥ मद्राज्येनासुखीकश्चिन्नदरिद्रोनचातुरः ॥ २७ ॥ नाभूषितोनचोद्विग्नोनप्रसा-
दविवर्जितः ॥ हृष्टस्तुष्टःसुगंधीचतृप्तःसर्वगुणान्वितः ॥ २८ ॥ जनःसर्वोमहाभागकिमुताहंसदासुधीः ॥ एतद्विशिष्ट-
मत्राप्तंदानबीजफलंमया ॥ २९ ॥ विदितंमुनिशार्दूलयथैतत्त्वन्मुखाच्छ्रुतं ॥ एतद्बीजवरंदानबीजंपततिचेद्गुरो ॥ ३० ॥
जनार्दनेमहापात्रेकिंनप्राप्तंततोमया ॥ विशिष्टंममतद्दानंपरितुष्टाश्चदेवताः ॥ ३१ ॥ उपभोगाच्छतगुणंदानंसुखकरं

स्मृतं ॥ मत्प्रसादपरोनूनंयज्ञेनाराधितोहरिः ॥ ३२ ॥ तेनाभ्येतिनसंदेहोदर्शनादुपकारकृत् ॥ अथकोपेनचाभ्येति
देवभागोपरोधिनं ॥ ३३ ॥ मांनिहंतुंततोहिस्याद्वधःश्लाघ्यतमोऽच्युतात् ॥ समाहंतुंहृषीकेशःकथंवैसमुपेष्यति ॥३४॥
एतज्ज्ञात्वामुनिश्रेष्ठदानविघ्नपरेणन ॥ त्वयाभाव्यंजगन्नाथेगोविंदेसमुपस्थिते ॥ ३५ ॥ लोमहर्षणउवाच ॥ इत्ये-
वंवदतस्तस्ययज्ञवाटमुपागतः ॥ सहैवामरवृंदैःसबृहस्पतिपुरस्सरैः ॥ ३६ ॥ बलिःपुनरुवाचेदंशुक्रंनिजपुरोहितं ॥
मां याचितुमभ्येतियतोगेहागतोहरिः ॥ ३७ ॥ सयथात्मेच्छयासर्वंचेतःसाक्षीजनार्दनः ॥ सर्वदेवमयोऽचिंत्योमायावा-
मनरूपधृक् ॥ ३८ ॥ तंदृष्ट्वायज्ञवाटंतुप्रविष्टमसुराःप्रभुं ॥ जग्मुःप्रभावतःक्षोभंतेजसातस्यनिष्प्रभाः ॥ ३९ ॥ वेपुश्च
मुनयस्तत्रयेसमेतामहाध्वरे ॥ वसिष्ठोगाधिजोगर्गस्तथान्येमुनिसत्तमाः ॥ ४० ॥ बलिश्चैवाखिलंजन्ममेनेसफलमा-
त्मनः ॥ ततःसंक्षोभमापन्नोनकश्चित्किंचिदुक्तवान् ॥ ४१ ॥ प्रत्येकंदेवदेवेशंपूजयामासतेजसा ॥ अथासुरपतिंप्रह्वं
दृष्ट्वामुनिवरांश्चतान् ॥ ४२ ॥ देवदेवपतिःसाक्षाद्विष्णुर्वामनरूपधृक् ॥ तुष्टावयज्ञंवह्निंचयजमानमथर्त्विजः ॥ ४३ ॥
यज्ञकर्माधिकारस्थान्सदस्यान्द्रव्यसंपदः ॥ सदस्याःपात्रमखिलंवामनंप्रतितत्क्षणात् ॥ ४४ ॥ यज्ञवाटस्थिताविप्राः
साधुसाध्वित्युदैरयन् ॥ सचार्घमादायबलिःप्रोद्भूतपुलकस्तथा ॥ पूजयामासगोविंदंप्राहचेदंमहासुरः ॥४५॥ बलिरुवाच
॥ सुवर्णरत्नसंघातान्गजांश्चमहिषांस्तथा ॥ स्त्रियोवस्त्राण्यलंकारान्गावः कुप्यंचपुष्कलं ॥ ४६ ॥ सर्वंचसकलांपृथ्वीं
भवतोवायदीप्सितं ॥ तद्ददामिशृणुश्रेष्ठममार्थाःसंतितेप्रियाः ॥ ४७ ॥ इत्युक्तोदैत्यपतिनाप्रीतिगर्भमिदंवचः ॥ प्राह ५०
सस्मितगंभीरंभगवान्वामनाकृतिः ॥ ४८ ॥ ममाग्निशरणार्थायदेहिराजन्पदत्रयं ॥ सुवर्णग्रामरत्नादितदर्थिभ्यःप्र-

१ सुवर्णरूप्यव्यतिरिक्तास्ताम्राद्रिधातवः । २ अग्नीनां शरणं रक्षणं तद्रूपोर्थः प्रयोजनं यस्य तस्मादित्यर्थः ।

दीयतां ॥ ४९ ॥ बलिरुवाच ॥ त्रिभिःप्रयोजनंकिंतेपदैःपदवतांवर ॥ शतंशतसहस्त्रंवापदानांमार्गतांभवान् ॥ ५० ॥
श्रीवामनउवाच ॥ एतैःपदैर्दैत्यपतेकृतकृत्योस्मिमार्गणे ॥ अन्येषामर्थिनांवित्तमिच्छयादास्यतेभवान् ॥ ५१ ॥ ए-
तच्छ्रुत्वातुगदितंवामनस्यमहात्मनः ॥ ददौतस्मैमहाबाहुर्वामनायपदत्रयं ॥ ५२ ॥ पाणौतुपतितेतोयेवामनोभूद-
वामनः ॥ सर्वदेवमयंरूपंदर्शयामासतत्क्षणात् ॥ ५३ ॥ चंद्रसूर्यौतुनयनेद्यौःशिरश्चरणौक्षितिः ॥ पादांगुल्यःपिशा-
चास्तुहस्तांगुल्यश्चगुह्यकाः ॥ ५४ ॥ विश्वेदेवाश्चजानुस्थाजंघेसाध्याःसुरोत्तमाः ॥ यक्षाश्चांगेपुसंभूतालेखाश्चाप्स-
रसस्तथा ॥ ५५ ॥ दृष्टिर्ऋक्षाण्यशेषाणिकेशाःसूर्यांशवःप्रभो ॥ तारकारोमकूपानिरोमेपुचमहर्षयः ॥ ५६ ॥ बाह-
वोविदिशस्तस्यदिशःश्रोत्रेमहात्मनः ॥ अश्विनौश्रवणेतस्यनासावायुर्महाबलः ॥ ५७ ॥ प्रसादेचंद्रमादेवोमनोध-
र्मःसमाश्रितः ॥ सत्यमस्याभवद्वाणीजिह्वादेवीसरस्वती ॥ ५८ ॥ ग्रीवादितिर्देवमाताविद्यास्तद्वलयस्तथा ॥ स्वर्ग-
द्वारमभून्मैत्रंत्वष्टापूषाचवैभ्रुवौ ॥ ५९ ॥ मुखेवैश्वानरश्चास्यवृषणौतुप्रजापतिः ॥ हृदयंचपरंब्रह्मपुंस्त्वंवैकश्यपोमुनिः
॥ ६० ॥ पृष्ठेस्यवसवोदेवामरुतःसर्वसंधिषु ॥ वक्षःस्थलेतथारुद्राधैर्यंचास्यमहार्णवाः ॥ ६१ ॥ उदरेचास्यगंधर्वा
मरुतश्चमहाबलाः ॥ लक्ष्मीर्मेधाधृतिःकांतिःसर्वविद्याश्चवैकटिः ॥ ६२ ॥ सर्वज्योतिरसौदेवस्तपश्चपरमंमहत् ॥ त-
स्यदेवाधिदेवस्यतेजःप्रोद्भूतमुत्तमं ॥ ६३ ॥ तनौकुक्षिषुवेदाश्चजानुनीचमहामखाः ॥ इष्टयःपशुबंधाश्चद्विजानांचेष्टि-
तानिच ॥ ६४ ॥ तस्यदेवमयंरूपंदृष्ट्वाविष्णोर्महाबलाः ॥ नोपसर्पंतितेदैत्याःपतंगाइवपावकं ॥ ६५ ॥ चिक्षुरस्तु
महादैत्यःपादांगुष्ठंगृहीतवान् ॥ दंताभ्यांतस्यवैग्रीवामंगुष्ठेनाहनद्धरिः ॥ ६६ ॥ प्रमथ्यसर्वानसुरान्पादहस्ततलैर्वि-

१ याचताम् ।

भुः ॥ कृत्वारूपंमहाकायंसंजहाराशुमेदिनीं ॥ ६७ ॥ तस्यविक्रमतोभूमिंचंद्रादित्यौस्तनांतरे ॥ नभोविक्रममाणस्य
सक्थिदेशेस्थितावुभौ ॥ ६८ ॥ परंविक्रममाणस्यजानुमूलेप्रभाकरौ ॥ विष्णोरास्तांस्थितस्यैतौदेवपालनकर्मणि
॥ ६९ ॥ जित्वालोकत्रयंकृत्स्नंहत्वाचासुरपुंगवान् ॥ पुरंदरायत्रैलोक्यंददौविष्णुरुरुक्रमः ॥ ७० ॥ सुतलंनामपा-
तालमधस्ताद्वसुधातलात् ॥ बलेर्दत्तंभगवताविष्णुनाप्रभविष्णुना ॥ ७१ ॥ अथदैत्येश्वरंप्राहविष्णुःसर्वेश्वरेश्वरः ॥
यत्त्वयासलिलंदत्तंगृहीतंपाणिनामया ॥ ७२ ॥ कल्पप्रमाणंतस्मात्तेभविष्यत्यायुरुत्तमं ॥ वैवस्वतेतथातीतेकालेम-
न्वंतरेतथा ॥ ७३ ॥ सावर्णिकेतुसंप्राप्तेभवानिंद्रोभविष्यति ॥ इदानींभुवनंदत्तंसर्वंशक्रायवैततः ॥ ७४ ॥ चतुर्युग-
व्यवस्थाचसाधिकाव्येकसप्ततिः ॥ नियंतव्यामयासर्वेयेतस्यपरिपंथिनः ॥ ७५ ॥ तेनाहंपरयाभक्त्यापूर्वमाराधितोव-
ले ॥ सुतलंनामपातालंसमादायवचोमम ॥ ७६ ॥ वसासुरममादेशंयथावत्परिपालयन् ॥ तत्रदेवासुरोपेतेप्रासाद-
शतसंकुले ॥ ७७ ॥ प्रोत्फुल्लपंकजसरोद्रुमशुद्धसरिद्वरे ॥ सुगंधीरूपसंपन्नोहेमाभरणभूषितः ॥ ७८ ॥ स्रक्चंदनादि-
दिग्धांगोनृत्यगीतमनोहरः ॥ उपभुंजमहाभोगान्विपुलान्दानवेश्वर ॥ ७९ ॥ ममाज्ञयाबलेतत्रतिष्ठस्त्रीशतसंवृतः ॥
यावत्सुरैश्चविप्रैश्चविरोधंनकरिष्यसि ॥ ८० ॥ तावत्त्वंभुंक्ष्वसंभोगान्सर्वकामसमन्वितान् ॥ यदासुरैश्चविप्रैश्चविरो-
धंत्वंकरिष्यसि ॥ बंधकृच्चतदापाशोदारुणोघोरदर्शनः ॥ ८१ ॥ बलिरुवाच ॥ तत्राशनंमेपातालेभगवन्भवदाज्ञया
॥ किंभविष्यत्युपादानमुपभोगोपपादकं ॥ ८२ ॥ आप्यायितोऽतोदेवेशस्मरेयंत्वामहंसदा ॥ श्रीभगवानुवाच ॥ दा-
नान्यविधिदत्तानिश्राद्धान्यश्रोत्रियाणिच ॥ ८३ ॥ हुतान्यश्रद्धयायानितानिदास्यंतितेफलं ॥ अदक्षिणास्तथायज्ञाःक्रि-

१ भविष्यतीतिशेषः ।

याश्चाविधिनाकृताः ॥ ८४ ॥ फलानितवदास्यंतिअधीतान्यव्रतानिच ॥ उदकेनविनापूजाविनादर्भेणयाःक्रियाः ॥ ८५ ॥ आज्येनचविनाहोमःफलंदास्यंतितेबले ॥ यश्चेदंस्थानमाश्रित्यक्रियाःकाश्चित्करिष्यति ॥ ८६ ॥ नतत्रचासुरोभागोभविष्यतिकदाचन ॥ ज्येष्ठाश्रमंमहापुण्यंतथाविष्णुपदंहृदं ॥ ८७ ॥ येचश्राद्धानिदास्यंतिव्रतंनियममेवच ॥ क्रियाकृताचयाकाचिद्विधिनाचमहात्मना ॥ ८८ ॥ सर्वंतदक्षयंतस्यभविष्यतिनसंशयः ॥ ज्येष्ठमासेसितेपक्षएकादश्यामुपोषितः ॥ ८९ ॥ द्वादश्यांवामनंदृष्ट्वास्नात्वाविष्णुपदेतथा ॥ दत्वादानंयथाशक्तिप्राप्नोतिपरमंपदं ॥ ९० ॥ लोमहर्षणउवाच ॥ बलयेऽमुंवरंदत्वाशक्रायचत्रिविष्टपं ॥ व्यापिनातेनरूपेणजगामादर्शनंहरिः ॥ ९१ ॥ शशासच यथापूर्वमिंद्रस्त्रैलोक्यपूजितः ॥ अवसच्चयथास्थानंबलिःपातालमाश्रितः ॥ ९२ ॥ इत्येतत्कथितंतस्यविष्णोर्माहात्म्यमुत्तमं ॥ शृणुयाद्योवामनस्यसर्वपापैःप्रमुच्यते ॥ ९३ ॥ बलिप्रह्लादसंवादंमंत्रितंबलिशक्रयोः ॥ बलेर्विष्णोश्चकथितं येस्मरिष्यंतिमानवाः ॥ ९४ ॥ नाधयोव्याधयस्तेषांनचमोहाकुलंमनः ॥ भविष्यतिद्विजश्रेष्ठाःपापंतस्यकदाचन ॥९५॥ च्युतराज्योनिजंराज्यमिष्टप्राप्तिंवियोगवान् ॥ समाप्नोतिमहाभागानरःश्रुत्वाकथामिमाम् ॥ ९६ ॥ ब्राह्मणोवेदमाप्नोतिजयतिक्षत्रियोमहीम् ॥ वैश्योधनसमृद्धिंचशूद्रःसुखमवाप्नुयात ॥ वामनस्यचमाहात्म्यंशृण्वन्पापैःप्रमुच्यते ॥ ९७ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येवामनबलिचरितंनामैकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ ॥ ॥

ऋषयऊचुः ॥ कथमेषासमुत्पन्नानदीनामुत्तमानदी ॥ सरस्वतीमहाभागाकुरुक्षेत्रप्रयायिनी ॥ १ ॥ कथंचसरआसाद्यकृत्वातीर्थानिपार्श्वतः ॥ प्रयातापश्चिमामाशांदृश्यादृश्यगतिःशुभा ॥ एतद्विस्तरतोब्रूहितीर्थंब्रह्मविदांवर ॥ २ ॥ लोमहर्षणउवाच ॥ प्लक्षवृक्षात्समुद्भूतासरिच्छ्रेष्ठासनातनी ॥ सर्वपापक्षयकरीस्मरणादेवनित्यशः ॥ ३ ॥ सैषाशैलस-

हस्राणिविदार्यचमहानदी ॥ प्रविष्टापुण्यतोयैषावनंद्वैतमितिश्रुतं ॥ ४ ॥ तस्मिन्प्लक्षेऽस्थितांदृष्ट्वामार्कंडेयोमहामुनिः ॥
प्रणिपत्यतदामूर्ध्नातुष्टावाथसरस्वतीं ॥ ५ ॥ त्वंदेविसर्वलोकानांमातावेदारणिःशुभा ॥ सदसद्देवियत्किंचिन्मो-
क्षबोधाययत्पदं ॥ ६ ॥ यथाजलंसागरेहितथातत्त्वयिसंस्थितं ॥ अक्षरंपरमंब्रह्मविश्वंचैतत्क्षरात्मकं ॥ ७ ॥ दारु-
ण्यवस्थितोवन्हिर्भूमौगंधोयथाध्रुवं ॥ तथात्वयिस्थितंब्रह्मजगच्चेदमशेषतः ॥ ८ ॥ ॐकाराक्षरसंस्थानंयत्रदेविस्थिरा-
स्थिरं ॥ तत्रमात्रात्रयंसर्वमस्तियद्देविनास्तिच ॥ ९ ॥ त्रयोलोकास्त्रयोवेदास्त्रैविद्यंपावकत्रयं ॥ त्रीणिज्योतींपिवर्गा-
श्चत्रयोधर्मादयस्तथा ॥ १० ॥ त्रयोगुणास्त्रयोवर्णास्त्रयोदेवास्तथाक्रमात् ॥ त्रिधातवस्तथावस्थाःपितरश्चाणिमादयः
॥ ११ ॥ एतन्मात्रात्रयंदेवितवरूपंसरस्वति ॥ विभिन्नदर्शनाआद्याब्रह्मणोहिसनातना ॥ १२ ॥ सोमसंस्थाहविःसं-
स्थाःपाकसंस्थाःसनातनाः ॥ तास्त्वदुच्चारणाद्देविक्रियंतेब्रह्मवादिभिः ॥ १३ ॥ अनिर्देश्यंतथाचान्यदर्धमात्राश्रितंपर-
म् ॥ अविकार्यक्षयंदिव्यंपरिणामविवर्जितम् ॥ १४ ॥ तथैतत्परमंरूपंयन्नशक्यंमयोदितुम् ॥ नचान्येनतथाजिह्वा-
ताल्वोष्ठादिभिरुच्यते ॥ १५ ॥ सविष्णुःसशिवोब्रह्माचंद्रार्कज्योतिरेवच ॥ विश्वावासंविश्वरूपंविश्वात्मानंमहेश्वरं ॥
॥ १६ ॥ सांख्यसिद्धांतवेदोक्तंबहुशाखास्थिरीकृतं ॥ अनादिमध्यनिधनंसदसच्चसदैवतु ॥ १७ ॥ एकंत्वनेकधाप्येकं
भावभेदसमाश्रितं ॥ अनाख्यंषड्गुणाख्यंचबह्वाख्यंत्रिगुणाश्रयं ॥ १८ ॥ नानाशक्तिविभावज्ञंनानाशक्तिविभावकं ॥
सुखात्सौख्यंमहासौख्यंरूपंतत्त्वगुणात्मकं ॥ १९ ॥ एवंदेवित्वयाव्याप्तंनिष्कलंसकलंजगत् ॥ अद्वैतावस्थितंब्रह्मयच्च
द्वैतेऽव्यवस्थितं ॥ २० ॥ येर्थानित्यायेविनश्यंतिचान्येयेर्थाःस्थूलायेविनश्यंतिसूक्ष्माः ॥ येवाभूमौयेन्तरिक्षेन्यतोवातेपां

१ चपरमाणवइतिपाठान्तरम् ।

दृश्यासात्वमेवोपलब्धिः ॥ २१ ॥ यद्वामूर्त्तंयच्चमूर्त्तंसमस्तंयद्वाभूतेष्वेवकर्मास्तिकिंचित् ॥ यद्वादेवेष्वस्तिलेखेन्यतोवा तत्संबद्धंवक्षैरैव्यंजनैश्च ॥ २२ ॥ एवंस्तुतातदादेवीविष्णोर्जिह्वासरस्वती ॥ प्रत्युवाचमहात्मानंमार्कंडेयंमहामुनिं ॥ यत्रत्वंनेष्यसेविप्रतत्रयास्याम्यतंद्रिता ॥ २३ ॥ मार्कंडेयउवाच ॥ आद्यंब्रह्मसरःपुण्यंततोनागहृदंस्मृतं ॥ कुरुणाऋपि-णाकृष्टंकुरुक्षेत्रंततःस्मृतं ॥ तस्यमध्येनवैयाहिपुण्यापुण्यजलावहा ॥ २४ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येसरस्वती-स्तोत्रंनामद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

लोमहर्षणउवाच ॥ इत्यृषेर्वचनंश्रुत्वामार्कंडेयस्यधीमतः ॥ नदीप्रवाहसंयुक्ताकुरुक्षेत्रंविवेशह ॥ १ तत्रसारंतुकंप्राप्य पुण्यतोयासरस्वती ॥ कुरुक्षेत्रंसमाप्लाव्यप्रयातापश्चिमांदिशं ॥ २ ॥ तत्रतीर्थसहस्राणिऋपिभिःसेवितानिच ॥ ता-न्यहंकीर्तयिष्यामिप्रसादात्परमेष्ठिनः ॥ ३ ॥ तीर्थानांस्मरणंपुण्यंदर्शनंपापनाशनं ॥ स्नानंपुण्यकरंप्रोक्तमपिदुष्कृत-कर्मणः ॥ ४ ॥ येस्मरिष्यंतितीर्थानांदेवताःप्रीणयंतिच ॥ स्नांतिचश्रद्दधानाश्चतेयांतिपरमांगतिम् ॥ ५ ॥ अपवित्रः पवित्रोवासर्वावस्थांगतोऽपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॥ ६ ॥ कुरुक्षेत्रंगमिष्यामिकुरुक्षेत्रेवसाम्य-हं ॥ अप्येतांवाचमुत्सृज्यसर्वपापैःप्रमुच्यते ॥ ७ ॥ ब्रह्मज्ञानंगयाश्राद्धंगोग्रहेमरणंध्रुवं ॥ वासःपुंसांकुरुक्षेत्रेमुक्तिरुक्ता चतुर्विधा ॥ ८ ॥ सरस्वतीदृषद्वत्योर्द्वयोर्नद्योर्यदंतरं ॥ तंदेवनिर्मितंदेशंब्रह्मावर्त्तंप्रचक्षते ॥ ९ ॥ दूरस्थोपिकुरुक्षेत्रंग-मिष्यामिवसाम्यहं ॥ एवंयःसततंब्रूयात्सोपिपापैःप्रमुच्यते ॥ १० ॥ तत्रैवचवसन्धीरःसरस्वत्यास्तटेस्थितः ॥ तस्य ज्ञानंब्रह्ममयंभविष्यतिनसंशयः ॥११॥ देवताऋपयःसिद्धाःसेवंतेकुरुजांगलं ॥ तस्यसंसेवनान्नित्यंब्रह्मचात्मनिपश्यति

१ मुक्तिकरीमितिपाठान्तरम् । २ धातुसंबन्धे प्रत्यया इत्यनेनलट् ।

॥ १२ ॥ चंचलंहिमनुष्यत्वंप्राप्ययेमोक्षकांक्षिणः ॥ वसंतिनियतात्मानोयेपिदुष्कृतकारिणः ॥ १३ ॥ तेविमुक्ताश्चक- 30
लुषैरनेकजन्मसंभवैः ॥ पश्यंतिनिर्मलंदेवंहृदयस्थंसनातनं ॥ १४ ॥ ब्रह्मवेदिःकुरुक्षेत्रंपुण्यंसन्निहितंसरः ॥ सेवमाना
नरानित्यंप्राप्नुवंतिपरंपदं ॥ १५ ॥ ग्रहनक्षत्रताराणांकालेनपतनाद्भयं ॥ कुरुक्षेत्रमृतानांचपतनंनैवविद्यते ॥ १६ ॥ 34
यत्रब्रह्मादयोदेवाऋषयःसिद्धचारणाः ॥ गंधर्वाश्चाप्सरोयक्षाःसेवंतेस्थानकांक्षिणः ॥१७॥ गत्वातुश्रद्धयायुक्तःस्नात्वा
स्थाणुमहाहृदे ॥ मनसाचिंतितंकामंलभतेनात्रसंशयः ॥ १८ ॥ नियमंचनरःकृत्वासरःकृत्वाप्रदक्षिणं ॥ रंतुकंचसमा-
साद्यक्षामयित्वापुनःपुनः ॥ १९ ॥ सरस्वत्यांनरःस्नात्वायक्षंदृष्ट्वाप्रणम्यच ॥ पुष्पंधूपंचनैवेद्यंदत्वावाचमुदीरयेत् ॥२०॥
तवप्रसादाद्यक्षेंद्रवनानिसरितस्तथा ॥ भ्रमिष्यामिचतीर्थानिह्यविघ्नंकुरुमेसदा ॥ २१ ॥ इतिश्रीवामनपुराणेसरोमा-
हात्म्येत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ऋषयऊचुः ॥ वनानिसप्तनोब्रूहिसप्तनद्यश्चकाःस्मृताः ॥ तीर्थानिचसमग्राणितीर्थस्नानफलंतथा ॥ १ ॥ येनयेनविधा-
नेनयस्यतीर्थस्ययत्फलं ॥ तत्सर्वंविस्तरेणेहब्रूहिपौराणिकोत्तम ॥ २ ॥ लोमहर्षणउवाच ॥ शृणुसप्तवनानीहकुरुक्षे-
त्रस्यमध्यतः ॥ येषांनामानिपुण्यानिसर्वपापहराणिच ॥ ३ ॥ काम्यकंचवनंपुण्यंतथादितिवनंमहत् ॥ व्यासस्यचवनं
पुण्यंफलकीवनमेवच ॥ ४ ॥ तथासूर्यवनंस्थानंतथामधुवनंमहत् ॥ पुण्यंशीतवनंनामसर्वकल्मषनाशनं ॥ ५ ॥ वना-
न्येतानिवैसप्तनदीःशृणुतमेद्विजाः ॥ सरस्वतीनदीपुण्यातथावैतरणीनदी ॥ ६ ॥ आपगाचमहापुण्यागंगामंदाकिनी 
नदी ॥ मधुस्रवाअम्लुनदीकौशिकीपापनाशिनी ॥ ७ ॥ दृषद्वतीमहापुण्यातथाहिरण्वतीनदी ॥ वर्षाकालवहाःसर्वा
वर्जयित्वासरस्वतीं ॥ ८ ॥ एतासामुदकंपुण्यंप्रावृट्कालेप्रकीर्त्तितं ॥ रजस्वलात्वमेतासांविद्यतेनकदाचन ॥ ९ ॥

तीर्थस्यचप्रभावेनपुण्याह्येताःसरिद्वराः ॥ शृण्वंतुमुनयःप्रीतास्तीर्थस्नानफलंमहत् ॥ गमनंस्मरणंचैवसर्वकल्मषनाशनं
॥ १० ॥ रंतुकंचनरोदृष्ट्वाद्वारपालंमहाबलं ॥ यक्षंसमभिवाद्यैवतीर्थयात्रांसमारभेत् ॥ ११ ॥ ततोगच्छेद्द्विविप्रेंद्रानाम्नादितिवनंमहत् ॥ अदित्यायत्रपुत्रार्थंकृतंघोरंमहत्तपः ॥ १२ ॥ तत्रस्नात्वाचसंपूज्यह्यदितिंदेवमातरम् ॥ पुत्रंजनयतेशूरंसर्वदोषविवर्जितम् ॥ १३ ॥ आदित्यशतसंकाशंविमानंचाधिरोहति ॥ ततोगच्छेद्द्विविप्रेंदाविष्णुस्थानमनुत्तमम् ॥ १४ ॥ सततंनामविख्यातंयत्रसंनिहितोहरिः ॥ विमलेचनरःस्नात्वादृष्ट्वाचविमलेश्वरम ॥ निर्मलःस्वर्गमायाति
रुद्रलोकंचगच्छति ॥ १५ ॥ हरिंचबलदेवंचाप्येकादश्यांसमन्वितौ ॥ दृष्ट्वादोषैर्विमुच्येतकलिकल्मषसंभवैः ॥ १६ ॥
ततःपारिप्लवंगच्छेत्तीर्थंत्रैलोक्यविश्रुतम् ॥ तत्रस्नात्वाचदृष्ट्वाचब्रह्माणंवेदसंयुतम् ॥ १७ ॥ ब्रह्मयज्ञफलंप्राप्यनिर्मलः
स्वर्गमाप्नुयात् ॥ तत्रापिसंभवंरम्यंकौशिक्यास्तीर्थसंभवं ॥ १८ ॥ संगमेचनरःस्नात्वाप्राप्नोतिपरमंपदम् ॥ अरण्ये
चापराधायेकृताहिपुरुषेणवै ॥ सर्वांस्तान्क्षमतेतत्रस्नातमात्रस्यदेहिनः ॥ १९ ॥ ततोदक्षाश्रमंगत्वादृष्ट्वादक्षेश्वरंशिवम्
॥ अश्वमेधस्ययज्ञस्यफलंप्राप्नोतिमानवः ॥ २० ॥ ततःशालूकिनंगच्छेत्स्नात्वातीर्थेद्विजोत्तमः ॥ हरिंहरेणसंयुक्तंपूजयित्वातुभक्तितः ॥ २१ ॥ प्राप्नोत्यभिमतंलोकंसर्वपापविवर्जितः ॥ सर्पिर्दधिसमासाद्यनागानांतीर्थमुत्तमम् ॥ २२ ॥
तत्रस्नानंनरःकृत्वामुक्तोनागभयाद्भवेत् ॥ ततोगच्छेच्चविप्रेंद्रानरकोद्वाररंतुकम् ॥ २३ ॥ तत्रापिरजनीमेकांस्नात्वातीर्थवरेशुभे ॥ तत्रद्वितीयंसंपूज्यद्वारपालंप्रयत्नतः ॥ २४ ॥ ब्राह्मणान्भोजयित्वाचप्रणिपत्यक्षमापयेत् ॥ तवप्रसादाद्यक्षेंद्रमुक्तोहंसर्वकिल्बिषैः ॥ २५ ॥ सिद्धिर्मयाभिलपितासंसारेतांलभाम्यहं ॥ एवंप्रसाद्ययक्षेंद्रंततःपंचनदंव्रजेत् ॥२६॥
पंचनद्यश्चरुद्रेणकृतादानवभीषणाः ॥ तेनसर्वेपुलोकेपुतीर्थंपंचनदंस्मृतं ॥ २७ ॥ कोटितीर्थानिरुद्रेणसमाजहृयतस्ततः

॥ तेनत्रैलोक्यविख्यातंकोटितीर्थंप्रचक्षते ॥ २८ ॥ तस्मिंस्तीर्थेनरःस्नात्वात्वदृष्ट्वाकोटीश्वरंहरम् ॥ पंचयज्ञानवाप्नोति
नित्यंश्रद्धासमन्वितः ॥ २९ ॥ तत्रैववामनोदेवःसर्वदेवैःप्रतिष्ठितः ॥ तत्रापिचनरःस्नात्वाह्यग्निष्टोमफलंलभेत् ॥ ३० ॥
अश्विनोस्तीर्थमासाद्यश्रद्धावान्योजितेंद्रियः ॥ रूपवान्भाग्ययुक्तश्चसयशस्वीनसंशयः ॥ ३१ ॥ वराहतीर्थमाख्या-
तंविष्णुनापरिकल्पितम् ॥ तस्मिन्स्नात्वाश्रद्दधानःप्रयातिपरमांगतिम् ॥ ३२ ॥ तत्रगच्छेच्चविप्रेंद्राःसोमतीर्थमनुत्तम-
म् ॥ यत्रसोमस्तपःस्तप्त्वाव्याधिमुक्तोभवत्पुरा ॥ ३३ ॥ तत्रसोमेश्वरंदृष्ट्वास्नात्वातीर्थवरेशुभे ॥ राजसूयस्ययज्ञस्य
फलंप्राप्नोतिमानवः ॥ ३४ ॥ व्याधिभ्यश्चविनिर्मुक्तःसर्वदोषविवर्जितः ॥ सोमलोकमवाप्नोतिचंद्रेणरमतेचिरं ॥ ३५ ॥
भूतेश्वरंचतत्रैवज्वालामालेश्वरंतथा ॥ तच्चलिंगंसमभ्यर्च्यनभूयोजन्मचाप्नुयात् ॥ ३६ ॥ एकहंसेनरःस्नात्वागोसहस्र-
फलंलभेत् ॥ कृतशौचःसमासाद्यतिर्थसेवीद्विजोत्तमाः ॥ ३७ ॥ पौंडरीकमवाप्नोतिकृतशौचोभवेन्नरः ॥ ततोमुंजवटंनाम
महादेवस्यधीमतः ॥ ३८ ॥ उपोष्यरजनीमेकांगाणपत्यमवाप्नुयात् ॥ तत्रैवचमहाभागायक्षिणीलोकविश्रुता ॥ ३९ ॥
स्नात्वाभिगम्यतत्रैवमहापातकनाशनं ॥ कुरुक्षेत्रस्यतद्द्वारंविश्रुतंपुण्यवर्द्धनं ॥ ४० ॥ प्रदक्षिणमुपावर्त्यब्राह्मणान्
भोजयेत्ततः ॥ पुष्करंचततोगत्वाह्यभ्यर्च्यपितृदेवताः ॥ ४१ ॥ जामदग्न्येनरामेणकृतंतच्चमहात्मना ॥ कृतकृत्योभवे-
द्राजाअश्वमेधंचविंदति ॥ ४२ ॥ कन्यादानंचयस्तत्रकार्त्तिक्यांवैकरिष्यति ॥ प्रसन्नादेवतास्तस्यदास्यंत्यभिमतंफलं
॥ ४३ ॥ कपिलश्चमहायक्षोद्वारपालःस्वयंस्थितः ॥ विघ्नंकरोतिपापानांदुर्गतिंचप्रयच्छति ॥ ४४ ॥ पत्नीतस्यमहा-
यक्षीनाम्नोलूखलमेखला ॥ आहत्यदुंदुभिंसातुभ्रमतेनित्यमेवहि ॥ ४५ ॥ साददर्शस्त्रियंचैकांसपुत्रांपापदेशजां ॥

१ पौंडरीकक्रतुफलम् । २ अश्वमेधफलम् । ३ एकादशीमारभ्य पौर्णमासीपर्यन्तमित्यर्थः बोधिन्येकादश्युत्तरं विवाहविधानात् ।

तामुवाचतदायक्षीआहत्यनिशिदुंदुभिं ॥ ४६ ॥ युगंधरेदधिप्राश्यउषित्वाचाच्युतस्थले ॥ तद्वद्भूतालयेस्नात्वासपुत्रा वस्तुमिच्छसि ॥ ४७ ॥ दिवामयातेकथितंरात्रौभक्ष्यामिनिश्चितं ॥ एतच्छ्रुत्वातुवचनंप्रणिपत्यचयक्षिणीं ॥ ४८ ॥ उवाचदीनयावाचाप्रसादंकुरुभामिनि ॥ ततःसायक्षिणीतांतुप्रोवाचकृपयान्विता ॥ ४९ ॥ यदासूर्यस्यग्रहणंकालेनभविता क्वचित् ॥ सरस्वत्यांतदास्नात्वापूतास्वर्गंगमिष्यसि ॥ ५० ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

लोमहर्षणउवाच ॥ ततोरामन्हृदंगछेत्तीर्थसेवीद्विजोत्तमः ॥ तत्ररामेणविप्रेणतरसादीप्ततेजसा ॥ १ ॥ क्षत्रमुत्साद्यविप्रेणन्हृदाःपंचनिवेशिताः ॥ पूरयित्वानरव्याघ्ररुधिरेणेतिनःश्रुतं ॥ २ ॥ पितरस्तर्पितास्तेनतथैवचपितामहाः ॥ ततस्तेपितरःप्रीतारामममूचुर्द्विजोत्तमाः ॥ ३ ॥ रामराममहाबाहोप्रीताःस्मस्तवभार्गव ॥ अनयापितृभक्त्याचविक्रमेणचतेविभो ॥ ४ ॥ वरंवृणीष्वभद्रंतेकमिच्छसिमहायशः ॥ एवमुक्तस्तुपितृभीरामःप्रभवतांवरः ॥ ५ ॥ अब्रवीत्प्रांजलिर्वाक्यंसपितॄन्गगनस्थितान् ॥ भवंतोयदिमेप्रीतास्तदनुग्राह्यतामयं ॥ ६ ॥ पितृप्रसादादिच्छेयंतपसोस्याप्यनंपुनः ॥ यतोरोषाभिभूतेनक्षत्रमुत्सादितंमया ॥ ७ ॥ ततस्तुपापान्मुच्येयंयुष्माकंतेजसाह्यहं ॥ ह्रदाश्चैतेतीर्थभूताभवेयुर्भुविविश्रुताः ॥ ८ ॥ एवंश्रुत्वाशुभंवाक्यंरामस्यपितरस्तदा ॥ प्रत्यूचुःपरमप्रीतारामंहर्षपुरस्कृताः ॥ ९ ॥ तपस्तेवर्द्धतांपुत्रपितृभक्त्याविशेषतः ॥ यच्चरोषाभिभूतेनक्षत्रमुत्सादितंत्वया ॥ १० ॥ ततश्चपापान्मुक्तस्त्वंपातितास्तेस्वकर्मभिः ॥ न्हृदाश्चैतेद्यतीर्थत्वंगमिष्यंतिनसंशयः ॥ ११ ॥ न्हृदेष्वेतेषुयःस्नात्वास्वान्पितॄंस्तर्पयिष्यति ॥ तस्यदास्यंतिपितरो यथाभिलषितंफलं ॥ १२ ॥ ईप्सितान्मानसान्कामान्स्वर्गवासंचशाश्वतं ॥ एवंदत्वावरान्विप्रारामस्यपितरस्तदा

१ प्राप्तिम् ।

॥ १३ ॥ रामंसुभार्गवंप्रीतास्तत्रैवांतर्दधुस्तदा ॥ एवंरामन्हदाःपुण्याभार्गवस्यमहात्मनः ॥ १४ ॥ स्नात्वान्हदेपुराम-
स्यब्रह्मचारीशुचिव्रतः ॥ रामंसमभ्यर्च्यतथाविंदेद्बहुसुवर्णकम् ॥ १५ ॥ वंशमूलंसमासाद्यतीर्थसेवीसुसंयतः ॥ स्ववंश-
मुद्धरेद्विप्राःस्नात्वाचैवसमूलकं ॥१६॥ कायशोधनमासाद्यतीर्थंत्रैलोक्यविश्रुतं ॥ शरीरशुद्धिमाप्नोतिस्नातस्तस्मिन्नसंशयः
॥१७॥ शुद्धदेहश्चसंयातियस्मान्नावर्त्ततेपुनः ॥ तावद्भ्रमंतितीर्थेषुसिद्धास्तीर्थपरायणाः ॥ यावन्नप्राप्नुवंतीहतीर्थंतत्कायशोधनं
॥१८॥ तस्मिंस्तीर्थेचसंप्लाव्यकायंसंयतमानसः ॥ परंपदमवाप्नोतियस्मान्नावर्त्ततेपुनः ॥१९॥ ततोगच्छेच्चविप्रेंद्रास्ती-
र्थंत्रैलोक्यविश्रुतं ॥ लोकायत्रोद्धृताःसर्वेविष्णुनाप्रभविष्णुना ॥२०॥ लोकोद्धारंसमासाद्यतीर्थस्मरणतत्परः ॥ स्नात्वा
तीर्थवरेतस्मिन्लोकंपश्यतिशाश्वतं ॥ २१ ॥ यत्रविष्णुःस्थितोनित्यंशिवोदेवश्चशाश्वतः ॥ तौदेवौप्रणिपातेनप्रसाद्यमु-
क्तिमाप्नुयात् ॥२२॥ श्रीतीर्थंतुततोगच्छेच्छालिग्राममनुत्तमं ॥ यत्रस्नातस्यसान्निध्यंसदादेवःप्रयच्छति ॥२३॥ कपिला-
न्हदमासाद्यतीर्थंत्रैलोक्यविश्रुतं ॥ तत्रस्नात्वार्चयित्वाचदैवतानिपितृंस्तथा ॥ २४ ॥ कपिलानांसहस्रस्यफलंविंदति
मानवः ॥ तत्रस्थितंमहादेवंकापिलंवपुराश्रितं ॥ २५ ॥ दृष्ट्वामुक्तिमवाप्नोतिऋषिभिःपूजितंशिवं ॥ सूर्यतीर्थंसमासाद्य
स्नात्वानियतमानसः ॥ २६ ॥ अर्चयित्वापितृन्देवानुपवासपरायणः ॥ अग्निष्टोममवाप्नोतिसूर्यलोकंचगच्छति
॥ २७ ॥ सहस्रकिरणंदेवंभानुंत्रैलोक्यविश्रुतं ॥ दृष्ट्वामुक्तिमवाप्नोतिनरोज्ञानसमन्वितः ॥ २८ ॥ भवानीवनमासा-
द्यतीर्थसेवीयथाक्रमं ॥ तत्राभिषेकंकुर्वाणोगोसहस्रफलंलभेत् ॥ २९ ॥ पितामहस्यपिबतोह्यमृतंपूर्वमेवहि ॥ उद्गारा-
त्सुरभिर्जातासाचपातालमाश्रिता ॥ ३० ॥ तस्याःसुरभयोजातामातरोलोकमातरः ॥ ताभिस्ततंसकलंव्याप्तंपातालंसु-

१ कपिलानां गवां सहस्रदानस्येत्यर्थः । सहस्रकपिलाषष्ठीव्रतानामित्यर्थोवा ।

निरंतरं ॥ ३१ पितामहस्ययजतोदक्षिणाथमुपाहृताः ॥ आहूताब्राह्मणास्तेचविश्रांताविवरेणाहि ॥३२॥ तस्मिन्विद्-
द्वारेतुस्थितोगणपतिःस्वयं ॥ यंदृष्ट्वासकलान्कामान्प्राप्नोतिनियतेंद्रियः ॥ ३३ ॥ संगिनींतुसमासाद्यतीर्थंमुक्तिसमा-
श्रयं ॥ देव्यास्तीर्थेनरःस्नात्वालभतेरूपमुत्तमं ॥ ३४ ॥ अनंतांश्रियमाप्नोतिपुत्रपौत्रैःसमन्वितः ॥ भोगांश्चविपुलांल्ल-
ब्ध्वाप्राप्नोतिपरमंपदं ॥३५॥ ब्रह्मावर्तेनरःस्नात्वाब्रह्मज्ञानसमन्वितः ॥ जायतेनात्रसंदेहःप्राणान्मुंचतिचेच्छया ॥३६॥
ततोगच्छेद्दिविप्रेंद्राद्वारपालंचरंतुकं ॥ तत्रतीर्थेसरस्वत्यायक्षेंद्रस्यमहात्मनः ॥ ३७ ॥ तत्रज्ञानंसमासाद्यह्युपवासप-
रायणः ॥ यक्षस्यचप्रसादेनलभतेकामिकंफलं ॥ ३८ ॥ ततोगच्छेद्दिविप्रेंद्राब्रह्मावर्तंमुनिस्तुतं ॥ ब्रह्मावर्तेनरःस्नात्वा
ब्रह्माचाप्नोतिनिश्चितं ॥ ३९ ॥ ततोगच्छेत्तुविप्रेंद्राःसुतीर्थकमनुत्तमं ॥ तत्रसन्निहिता[1]नित्यंपितरोदैवतैःसह ॥ ४० ॥
तत्राभिषेकंकुर्वीतपितृदेवार्चनेरतः ॥ अश्वमेधं[2]मवाप्नोतिपितॄन्प्रीणंति[3]शाश्वतम् ॥ ४१ ॥ ततोऽबवत्यांधर्मज्ञसमासाद्य
यथाक्रमं ॥ कामेश्वरस्यतीर्थेतुस्नात्वाश्रद्धासमन्वितः ॥ ४२ ॥ सर्वव्याधिविनिर्मुक्तोब्रह्मचाप्नोतिनिश्चितं ॥ मातृतीर्थे
चतत्रैवयत्रस्नातस्यभक्तितः ॥ ४३ ॥ प्रजाविवर्द्धतेनित्यमनंतांचाप्नुयाच्छ्रियं ॥ ततःसीतावनंगच्छेन्नियतोनियताशनः
॥ ४४ ॥ तीर्थंतत्रमहाविप्रामहदन्यत्रदुर्लभं ॥ पुनातिदर्शनादेवपुरुषानेकविंशतिं ॥ ४५ ॥ केशानभ्युक्ष्यचैकस्मिन्पू-
तोभवतिपापतः ॥ तत्रतीर्थवरंचान्यच्छुनांलोमापहंमहत् ॥ ४६ ॥ तत्रविप्रामहाप्राज्ञाविद्वांसस्तीर्थतत्पराः ॥ श्ववि-
लोमापहेतीर्थेविप्रास्त्रैलोक्यविश्रुते ॥ ४७॥ प्राणायामैर्निर्हरंतिस्वलोमानिद्विजोत्तमाः ॥ पूतात्मानश्चतेविप्राःप्रयांतिप-
रमांगतिं ॥ ४८ ॥ दशाश्वमेधिकंचैवतत्रतीर्थंसुविश्रुतं ॥ तत्रस्नात्वाभक्तियुक्तस्तदेवलभतेफलम् ॥ ४९ ॥ ततोगच्छे-

१ संनिधावितिशेषः। २ अश्वमेधजं पुण्यम्। ३ प्रीणयतीत्यर्थः।

द्विश्रद्धावान्मानुषंलोकविश्रुतम् ॥ दर्शनात्तस्यतीर्थस्यमुक्तोभवतिकिल्बिषैः ॥ ५० ॥ पुराकृष्णमृगास्तत्रव्याधेनशर- ३०
पीडिताः ॥ अवगाह्यसरस्यस्मिन्मानुषत्वमुपागताः ॥ ५१ ॥ ततोव्याधाश्चतेसर्वेतानपृच्छन्द्विजोत्तमान् ॥ मृगाःक्क
ऋषयोयाताअस्माभिःशरपीडिताः ॥ ५२ ॥ निमग्नास्तेसरःप्राप्यकिंतद्ब्रूतद्विजोत्तमाः ॥ तेऽब्रुवंस्तत्रवैपृष्टावयंतेच ३६
द्विजोत्तमाः ॥ ५३ ॥ अस्यतीर्थस्यमाहात्म्यान्मानुषत्वमुपागताः ॥ तस्माद्यूयंश्रद्दधानाःस्नात्वातीर्थेविमत्सराः
॥५४ ॥ सर्वपापविनिर्मुक्ताभविष्यथनसंशयः ॥ ततःस्नाताश्चतेसर्वेशुद्धदेहादिवंगताः ॥ ५५ ॥ एतत्तीर्थस्यमाहात्म्यं
मानुषस्यद्विजोत्तमाः ॥ येशृण्वंतिश्रद्दधानास्तेऽपियान्तिपरांगतिं ॥ ५६ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येपंचत्रिं-
शोऽध्यायः ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥ ॥
लोमहर्षणउवाच ॥ मानुषस्यतुपूर्वेणक्रोशमात्रेद्विजोत्तमाः ॥ आपगानामविख्यातानदीद्विजनिषेविता ॥ १ ॥ श्यामा-
कंपयसासिद्धमाज्येनचपरिप्लुतं ॥ येप्रयच्छंतिविप्रेभ्यस्तेषांपापंनविद्यते ॥ २ ॥ येतुश्राद्धंकरिष्यंतिप्राप्यतामापगांन-
दीं ॥ तेसर्वकामसंयुक्ताभविष्यंतिनसंशयः ॥ ३ ॥ स्मरंतिपितरस्तस्यस्मरंतिचपितामहाः ॥ अस्माकंचकुलेपुत्रःपौत्रो
वापिभविष्यति ॥ ४ ॥ यआपगांनदींगत्वाऽस्मांस्तिलैस्तर्पयिष्यति ॥ तेनतृप्ताभविष्यामोयावत्कुलशतंभवेत् ॥ ५ ॥
नभस्येमासिसंप्राप्तेकृष्णपक्षेविशेषतः ॥ चतुर्दश्यांतुमध्याह्नेपिंडदोमुक्तिमाप्नुयात् ॥ ६ ॥ ततोगच्छेच्चविप्रेंद्राब्रह्मणः
स्थानमुत्तमं ॥ ब्रह्मोदुंबरमित्येवंसर्वलोकेषुविश्रुतं ॥ ७ ॥ तत्रब्रह्मर्षिकुंडेषुस्नातस्यद्विजसत्तमाः ॥ सप्तर्षीणांप्रसादेनस- ५६
प्तसोमफलंलभेत् ॥ ८ ॥ भरद्वाजोगौतमश्चजमदग्निश्चकश्यपः ॥ विश्वामित्रोवसिष्ठश्चअत्रिश्चभगवानृषिः ॥ ९ ॥
एतेसमेत्यतत्कुंडंकल्पितंभुविदुर्लभं ॥ ब्रह्मणासेवितंतस्माद्ब्रह्मोदुम्बरमुच्यते ॥ १० ॥ तस्मिंस्तीर्थवरेस्नात्वाब्रह्मणोऽ-

व्यक्तजन्मनः ॥ ब्रह्मलोकमवाप्नोतिनात्रकार्याविचारणा ॥ ११ ॥ देवान्पितॄन्समुद्दिश्ययोविप्रंपूजयिष्यति ॥ पितर-
स्तस्यसुखितादास्यंतिभुविदुर्लभम् ॥ १२ ॥ सप्तर्षींश्चसमुद्दिश्यपृथक्स्नानंसमाचरेत् ॥ ऋषीणांचप्रसादेनसप्तलोका-
धिपोभवेत् ॥ १३ ॥ कपिलस्थेतिविख्यातंसर्वपातकनाशनं ॥ यस्मिन्स्थितःस्वयंदेवोवृद्धकेदारसंज्ञितः ॥ १४ ॥ तत्र
स्नात्वाऽर्चयित्वाचरुद्रंदंडिसमन्वितं ॥ अंतर्द्धानमवाप्नोतिशिवलोकेसमोदते ॥१५॥ यस्तत्रतर्पणंकृत्वापिबतेचुलकत्रयं ॥
दवदेवंनमस्कृत्यकेदारस्यफलंलभेत् ॥ १६ ॥ यस्तत्रकुरुतेश्राद्धंशिवमुद्दिश्यमानवः ॥ चैत्रशुक्लचतुर्दश्यांप्राप्नोतिपरमं
पदं ॥ १७ कलस्यांतुततोगच्छेद्यत्रदेवीचसंस्थिता ॥ दुर्गाकात्यायनीभद्रानिद्रामायासनातनी ॥ १८ ॥ कलस्यांच
नरःस्नात्वादृष्ट्वादुर्गांतटस्थितां ॥ संसारगहनंदुर्गंनिस्तरेन्नात्रसंशयः ॥ १९ ॥ ततोगच्छेद्द्विसरकंत्रैलोक्यस्यापिदुर्लभं ॥
कृष्णपक्षेचतुर्दश्यांदृष्ट्वादेवंमहेश्वरं ॥ २०॥ लभतेसर्वकामांश्चशिवलोकंसगच्छति ॥ तिस्रःकोट्यस्तुतीर्थानांसरकेद्विजस-
त्तमाः ॥ २१ ॥ रुद्रकोटिस्तथाकूपेसरोमध्येव्यवस्थिता ॥ तस्मिन्सरसियःस्नात्वारुद्रकोटिंस्मरेन्नरः ॥ २२ ॥ पूज-
यित्वारुद्रकोटिंभविष्यतिनसंशयः ॥ रुद्राणांचप्रसादेनसर्वदोषविवर्जितः ॥२३॥ ऐंद्रयानेनसंयुक्तःपरंपदमवाप्नुयात् ॥
इडास्पदंचतत्रैवतीर्थंपापभयापहं ॥ २४॥ यस्मिन्मुक्तिमवाप्नोतिदर्शनाद्देवमानवः ॥ तत्रस्नात्वार्चयित्वाचपितॄन्देवगणा-
नपि ॥ २५ ॥ नदुर्गतिमवाप्नोतिचिंतितंमनसाप्नुयात् ॥ केदारंचमहातीर्थंसर्वकल्मषनाशनं ॥ २६ ॥ तत्रस्नात्वातुपु-
रुषःसर्वदानफलंलभेत् ॥ किंरूपंचमहातीर्थंतत्रैवभुविदुर्लभं ॥२७॥ तस्मिन्स्नातस्तुपुरुषःसर्वयज्ञफलंलभेत् ॥ सरक-
स्यतुपूर्वेणतीर्थंत्रैलोक्यविश्रुतं ॥ २८ ॥ अस्यजन्मभुविख्यातंसर्वपापप्रणाशनं ॥ नारसिंहंवपुःकृत्वाहत्वादानवमूर्जि-

१ भुवि दुरापममृतादि ।

तम् ॥ २९ ॥ तिर्यग्योनिस्थितोविष्णुःसिंहपुरतिमाप्तवान् ॥ ततोदेवाःसगंधर्वाआराध्यवरदंशिवं ॥ ३० ॥ ऊचुःप्र-
णतसर्वांगाविष्णुदेहस्यलंभने ॥ ततोदेवोमहात्मासौशारभंरूपमास्थितः ॥ ३१ ॥ युद्धंचकारसुमहद्दिव्यंवर्षसहस्रकं ॥
युद्ध्यमानौतुतौदेवौपतितौन्हृदमध्यतः ॥ ३२ ॥ तस्मिन्सरस्तटेविप्रोदेवर्षिर्नारदःस्थितः ॥ अश्वत्थस्थानमाश्रित्यध्या-
नस्थस्तौददर्शह ॥ ३३ ॥ विष्णुश्चतुर्भुजोजज्ञेलिंगाकारःशिवःस्थितः ॥ तौदृष्ट्वातत्रपुरुषौतुष्टावभक्तिभावतः ॥३४॥
नमःशिवायदेवायविष्णवेप्रभविष्णवे ॥ हरयेचउमाभर्त्रेस्थितिकालभृतेनमः ॥ ३५ ॥ हरायबहुरूपायविश्वरूपायवि-
ष्णवे ॥ त्र्यंबकायसुसिद्धायकृष्णाय[1]ज्ञानहेतवे ॥ ३६ ॥ धन्योऽहंसुकृतीनित्यंयदृष्टौपुरुषोत्तमौ ॥ ममाश्रममिदंपुण्यंयु-
वाभ्यांविमलीकृतं ॥ ३७ ॥ अद्यप्रभृतित्रैलोक्येधन्यंजन्मेतिविश्रुतं ॥ यइहागत्यचस्नात्वापितॄन्संतर्पयिष्यति ॥ ३८ ॥
तस्यश्रद्धान्वितस्येहज्ञानमिंद्रं[2]भविष्यति ॥ अश्वत्थस्यचयन्मूलंसदातत्रवसाम्यहं ॥ ३९ ॥ अश्वत्थवंदनंकृत्वाशिवंकृ-
ष्णंनमस्यति ॥ ततोगच्छेद्द्विविप्रेंद्रानागस्यन्हृदमुत्तमं ॥ ४० ॥ पुंडरीकाम्भसिस्नात्वायज्ञस्यफलमाप्नुयात् ॥ दश-
म्यांशुक्लपक्षस्यचैत्रस्यतुविशेषतः ॥ ४१ ॥ स्नानंजपस्तथाश्राद्धंमुक्तिमार्गप्रदायकं ॥ ततस्त्रिविष्टपंगच्छेत्तीर्थंदेवनिषे-
वितं ॥ ४२ ॥ तत्रवैतरणीपुण्यानदीपापप्रमोचनी ॥ तत्रस्नात्वार्चयित्वाचशूलपाणिंवृषध्वजं ॥ ४३ ॥ सर्वपापविशु-
द्धात्मागच्छेच्चपरमांगतिं ॥ ततोगच्छेद्द्विविप्रेंद्रारसावर्तनमुत्तमम् ॥ ४४ ॥ तत्रस्नात्वाभक्तियुक्तःसिद्धिमाप्नोत्यनुत्तमा-
म् ॥ चैत्रशुक्लचतुर्दश्यांतीर्थेस्नात्वाह्यलेपके ॥ ४५ ॥ पूजयित्वाशिवंतत्रपापलेशोनविद्यते ॥ ततोगच्छेद्द्विविप्रेंद्राःफल- ५७
कीवनमुत्तमं ॥ ४६ ॥ यत्रदेवाःसगंधर्वाःसाध्याश्चऋषयस्तथा ॥ तपश्चरंतिविपुलंदिव्यंवर्षसहस्रकं ॥ ४७ ॥ द-

१ तमोगुणयुताय । २ यमं रौद्रंनपश्यति इति पाठान्तरम् ।

षष्ठ्यांनरःस्नात्वातर्पयित्वाचदेवताः ॥ अग्निष्टोमातिरात्रस्यफलंविंदतिमानवः ॥ ४८ ॥ सोमक्षयेचसंप्राप्तेसोमस्यच
दिनेतथा ॥ यःश्राद्धंकुरुतेमर्त्यस्तस्यपुण्यफलंशृणु ॥ ४९ ॥ मयायांचयथाश्राद्धंपितॄन्प्रीणातिनित्यशः ॥ तथाश्राद्धंच
कर्त्तव्यंफलकीवनमाश्रितैः ॥ ५० ॥ मनसास्मरतेयस्तुफलकीवनमुत्तमं ॥ तस्यैवपितरस्तृप्तिंप्रयास्यंतिनसंशयः
॥ ५१ ॥ तत्रापितीर्थंसुमहत्सर्वदेवैरलंकृतं ॥ तस्मिन्स्नातस्तुपुरुषोगोसहस्रफलंलभेत् ॥ ५२ ॥ पाणिखातेनरःस्ना-
त्वापितॄन्संतर्प्यमानवः ॥ अवाप्नुयाद्राजसूयंसांख्यंयोगंचविंदति ॥ ५३ ॥ ततोगच्छेद्दिसुमहत्तीर्थंमिश्रकमुत्तमं ॥ त-
त्रतीर्थानिमुनिनामिश्रितानिमहात्मना ॥ ५४ ॥ व्यासेनमुनिशार्दूलदधीचार्थंमहात्मना ॥ सर्वतीर्थेषुसस्नातोमिश्रके
स्नातियोनरः ॥ ५५ ॥ ततोव्यासवनंगच्छेन्नियतोनियताशनः ॥ मनोजवेनरःस्नात्वादृष्ट्वादेवंमनीषिणं ॥ ५६ ॥ मन-
साचिंतितंसर्वंसिद्ध्यतेनात्रसंशयः ॥ गत्वामधुवनंचैवदेव्यास्तीर्थेनरःशुचिः ॥ ५७ ॥ तत्रस्नात्वाचवैदेवान्पितॄंश्चप्रय-
तोनरः ॥ सदेव्यासमनुज्ञातोयथासिद्धिंलभेन्नरः ॥ ५८ ॥ कौशिक्याःसंगमेयस्तुदृषद्वत्यांनरोत्तमः ॥ स्नायीतनिय-
ताहारःसर्वपापैःप्रमुच्यते ॥ ५९ ॥ ततोव्यासस्थलींगच्छेद्यत्रव्यासेनधीमता ॥ पुत्रशोकाभिभूतेनदेहत्यागायनिश्चयः
॥ ६० ॥ कृतोदेवैश्चविप्रेंद्रपुनरुत्थापितस्तदा ॥ अभिगम्यस्थलींतस्यपुत्रशोकंनविंदति ॥ ६१ ॥ किंदत्तरूपमासाद्य
तिलप्रस्थंप्रदायच ॥ गच्छेत्रपरमांसिद्धिंततोमुक्तिमवाप्नुयात् ॥ ६२ ॥ अन्नंचसुदिनंचैवद्वेतीर्थेभुविदुर्लभे ॥ तयोः
स्नात्वाविशुद्धात्मासूर्यलोकमवाप्नुयात् ॥ ६३ ॥ कृतपुण्यंततोगच्छेत्त्रिपुलोकेषुविश्रुतं ॥ तत्राभिषेकंकुर्वीतगंगायां
प्रयतःस्थितः ॥ ६४ ॥ अर्चयित्वामहादेवमश्वमेधफलंलभेत् ॥ कोटितीर्थंचतत्रैवदृष्ट्वाकोटीश्वरंप्रभुं ॥ ६५ ॥ तत्र
स्नात्वाश्रद्धधानःकोटियज्ञफलंलभेत् ॥ ततोवामनकंगच्छेत्त्रिपुलोकेषुविश्रुतं ॥ ६६ ॥ यत्रवामनरूपेणविष्णुनाप्रभ-

अ० ३७

विष्णुना ॥ बलेरपहृतंराज्यमिंद्रायप्रतिपादितं ॥ ६७ ॥ तत्रविष्णुपदेस्नात्वाअर्चयित्वाचवामनं ॥ सर्वपापविशुद्धा-
त्माविष्णुलोकमवाप्नुयात् ॥ ६८ ॥ ज्येष्ठाश्रमंचतत्रैवसर्वपातकनाशनं ॥ तंतुदृष्ट्वानरोमुक्तिंसंप्रयातिनसंशयः
॥ ६९ ॥ ज्येष्ठमासेसितेपक्षेएकादश्यामुपोषितः ॥ द्वादश्यांचनरःस्नात्वाज्येष्ठत्वंलभतेनृषु ॥ ७० ॥ तत्रप्रतिष्ठिताविप्रा-
प्राविष्णुनाप्रभविष्णुना ॥ दीक्षाप्रतिष्ठासंयुक्ताविष्णुप्रीणनतत्पराः ॥ ७१ ॥ तेभ्योदत्तानिश्राद्धानिदानानिविविधा-
निच ॥ अक्षयाणिभविष्यंतियावन्मन्वंतरस्थितिः ॥ ७२ ॥ तत्रैवकोटितीर्थंचत्रिषुलोकेषुविश्रुतं ॥ तस्मिंस्तीर्थेनरःस्ना-
त्वाकोटियज्ञफलंलभेत् ॥ ७३ ॥ कोटीश्वरंनरोदृष्ट्वातस्मिंस्तीर्थेमहेश्वरं ॥ महादेवप्रसादेनगाणपत्यमवाप्नुयात् ॥ ७४ ॥
तत्रैवसुमहत्तीर्थंसूर्यस्यचमहात्मनः ॥ तस्मिन्स्नात्वाभक्तियुतःसूर्यलोकेमहीयते ॥ ७५ ॥ ततोगच्छेत्त्वविप्रेंद्रास्तीर्थंक-
ल्मषनाशनं ॥ कुलोत्तारणकंनाम्नाविष्णुनाकल्पितंपुरा ॥ ७६ ॥ वर्णानामाश्रमाणांचतारणायसुनिर्मलं ॥ तेपितत्ती-
र्थमासाद्यपश्यंतिपरमंपदं ॥ ७७ ॥ ब्रह्मचारीगृहस्थश्चवानप्रस्थोयतिस्तथा ॥ कुलानितारयेत्स्नातःसप्तसप्तचसप्तचै
॥ ७८ ॥ ब्राह्मणाःक्षत्रियावैश्याःस्त्रियःशूद्राश्चतत्पराः ॥ तीर्थस्नाताभक्तियुताःपश्यंतिपरमंपदं ॥ ७९ ॥ दूरस्थोपि
स्मरेद्यस्तुकुरुक्षेत्रंसवामनं ॥ सोपिमुक्तिमवाप्नोतिकिंपुनस्तुवसन्नरः ॥ ८० ॥ इतिश्रीवामनपुराणेसरोमाहात्म्ये
षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥
लोमहर्षणउवाच ॥ पवनस्यन्हदेस्नात्वादृष्ट्वादेवंमहेश्वरं ॥ विमुक्तःसर्वकलुषैःशैवंपदमवाप्नुयात् ॥ १ ॥ पुत्रशोकेनपव-
नोयस्मिंल्लीनोबभूवह ॥ ततःसब्रह्मकैर्देवैःस्तुत्वातंभक्तिसंयुतः ॥ २ ॥ ततोगच्छेद्धिहनुमत्स्थानंतच्छूलपाणिनः ॥ य-

१ श्रैष्ठ्यमिति यावत् । २ एकविंशतिरित्यर्थः । ३ पनसस्येति पाठान्तरम् ।

त्रदेवैःसगंधर्वैर्हनूमान्प्रकटीकृतः ॥ ३ ॥ तत्रतीर्थेनरःस्नात्वाअमृतत्वमवाप्नुयात् ॥ कुलोत्तारणमासाद्यतीर्थसेवीद्विजो- त्तमः॥ ४॥ कुलानितारयेत्सर्वान्मातामहपितामहान् ॥ शालिहोत्रस्यराजर्षेस्तीर्थंत्रैलोक्यविश्रुतं ॥ ५ ॥ तत्रस्नात्वा विमुक्तस्तुकलुषैर्देहसंभवैः ॥ श्रीकुंजंतुसरस्वत्यांतीर्थंत्रैलोक्यविश्रुतं ॥ ६ ॥ तत्रस्नात्वानरोभक्त्याह्यग्निष्टोमफलंलभे- त् ॥ ततोनैमिषकुंजंतुसमासाद्यनरःशुचिः ॥ ७॥ नैमिषस्यचस्नानेनयत्पुण्यंतत्समाप्नुयात् ॥ तत्रतीर्थंमहत्ख्यातंवेद- वत्यानिषेवितं ॥ ८ ॥ रावणेनगृहीतायाःकेशेषुद्विजसत्तमाः ॥ तद्वधायचसाप्राणान्मुमुचेशोककर्षिता ॥ ९ ॥ ततोजा- तागृहेराज्ञोजनकस्यमहात्मनः ॥ सीतानामेतिविख्यातारामपत्नीपतिव्रता ॥ १० ॥ साहृतारावणेनैवविनाशायात्म- नःस्वयं ॥ रामेणरावणंहत्वाअभिषिच्यविभीषणं ॥ ११ ॥ समानीतागृहंसीताकीर्त्तिरात्मवनंयथा ॥ तस्यास्तीर्थेनरः स्नात्वाकन्यायज्ञफलंलभेत् ॥ १२ ॥ विमुक्तःकलुषैःसर्वैःप्राप्नोतिपरमंपदं ॥ ततोगच्छेच्चसुमहद्ब्रह्मणःस्थानमुत्तमं ॥१३॥ यत्रवर्णावरःस्नात्वाब्राह्मण्यंलभतेनरः ॥ ब्राह्मणश्चविशुद्धात्मापरंपदमवाप्नुयात् ॥ १४ ॥ ततोगच्छेत्सोमतीर्थंत्रैलोक्ये- चापिदुर्लभं ॥ यत्रसोमस्तपस्तप्त्वाद्विजराज्यमवाप्नुयात् ॥१५॥ तत्रस्नात्वाऽर्चयित्वाचस्वपितॄन्दैवतानिच ॥ निर्मुक्तः स्वर्गमायातिकार्तिक्यांवामनंयथा ॥ १६ ॥ सप्तसारस्वतंतीर्थंत्रैलोक्यस्यापिदुर्लभं ॥ यत्रसप्तसरस्वत्यएकीभूतावहंति च ॥ १७ ॥ सुप्रभाकांचनाक्षीचविमलामानसह्रदा ॥ सरस्वत्तोयनाम्नीचसुवर्णाविमलोदका ॥१८॥ पितामहस्यय- जतःपुष्करेषुस्थितस्यह ॥ अब्रुवन्नृषयःसर्वेनायंयज्ञोमहाफलः ॥ १९ ॥ नदृश्यतेसरिच्छ्रेष्ठापुरस्थावैसरस्वती ॥ तच्छ्रु- त्वाभगवान्प्रीतःसस्माराथसरस्वतीं ॥२०॥ पितामहेनयजताह्याहूतापुष्करेषुच ॥ सुप्रभानामसादेवीतत्रख्यातासरस्व-

१ कन्यादानरूपी यज्ञ सास्य फलं लभेदिदर्भवः ।

ती ॥ २१ ॥ तांदृष्ट्वामुनयःप्रीतावेगयुक्तांसरस्वतीं ॥ पितामहंमानयन्तींतेतुतांबहुमेनिरे ॥ २२ ॥ एवमेषासरिच्छ्रेष्ठा पुष्करस्थासरस्वती ॥ समानीताकुरुक्षेत्रंमार्कंडेनमहात्मना ॥ २३ ॥ नैमिषेमुनयःस्थित्वाशौनकाद्यास्तपोधनाः ॥ तेपृच्छंतिमहात्मानंपुराणंलोमहर्षणं ॥ २४ ॥ कथंनःस्याद्यज्ञफलंवर्त्ततांसत्पथेमुने ॥ ततोब्रवीन्महाभागःप्रणम्यशि-रसामुनीन् ॥ २५ ॥ सरस्वतीस्थितायत्रतत्रयज्ञफलंमहत् ॥ एतच्छ्रुत्वातुमुनयोनानास्वाध्यायवेदिनः ॥ २६ ॥ समा-गम्यततःसर्वेसंस्मरंतिसरस्वतीं ॥ सातुध्याताततस्तत्रऋषिभिःसत्रयाजिभिः ॥ २७ ॥ समागताप्लावनार्थंयज्ञेतेषांमहा-त्मनां ॥ नैमिषेकांचनाक्षीतुमंकणेनमहौजसा ॥ २८ ॥ समायाताकुरुक्षेत्रंपुण्यतोयासरस्वती ॥ गयस्ययजमानस्यगयायां चमहाक्रतौ ॥ २९ ॥ आहूताचसरिच्छ्रेष्ठागययज्ञेसरस्वती ॥ विशालांनामतांप्राहुर्ऋषयःसंशितव्रताः ॥ ३० ॥ स-रित्साहिसमाहूतामंकणेनमहात्मना ॥ कुरुक्षेत्रंसमायाताप्रविष्टाचमहानदी ॥ ३१ ॥ उत्तरेकोशलाभागेपुण्येदेवर्षि-सेविते ॥ उद्दालकेनमुनिनातत्रध्यातासरस्वती ॥ ३२ ॥ आजगामसरिच्छ्रेष्ठातंदेशंमुनिकारणात् ॥ पूज्यमानामुनि-गणैर्वल्कलाजिनसंवृतैः ॥ ३३ ॥ मनोहरेतिविख्याताकेदारेयासरस्वती ॥ सर्वपापक्षयाज्ञेयाऋषिसिद्धनिषेविता ॥ ३४ ॥ सापितेनेहमुनिनाह्याराध्यपरमेश्वरं ॥ ऋषीणामुपकारार्थंकुरुक्षेत्रंप्रवेशिता ॥ ३५ ॥ दक्षेणयजतासापिगं-गाद्वारेसरस्वती ॥ विमलोदाभगवतीदक्षेणप्रकटीकृता ॥ ३६ ॥ समाहूताययौतत्रमंकणेनमहात्मना ॥ कुरुक्षेत्रेतुकु-रुणायजताचसरस्वती ॥ ३७ ॥ सरोमध्येसमानीतामार्कंडेयेनधीमता ॥ अभिष्टूयमहाभागःपुण्यतोयांसरस्वतीं ॥ यत्रमंकणकःसिद्धःसप्तसारस्वतेस्थितः ॥ ३८ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥

१ पावनार्थमिति पा०

ऋषयऊचुः ॥ कथंमंकणकःसिद्धःकस्माज्जातोमहानृषिः ॥ नृत्यमानस्तुदेवेनकिमर्थंसनिवारितः ॥ १ ॥ लोमहर्षणउ-
वाच ॥ कश्यपान्नसुतोजज्ञेमानसोमंकणोमुनिः ॥ स्नानंकर्त्तुंव्यवसितोगृहीत्वावल्कलंद्विजाः ॥ २ ॥ तत्रागताह्यप्सर-
सोरंभाद्याःप्रियदर्शनाः ॥ स्नांत्यैवरुचिराकारामुक्तवस्त्राअनिंदिताः[1] ॥ ३ ॥ ततोमुनेस्तदाक्षोभाद्रेतःस्कन्नंयदंभसि ॥
व्याधोजग्राहतंद्रेतः[2]कलशेन्यक्षिपत्तथा ॥ ४ ॥ सतधाप्रविभागंतुकलशस्थंजगामह ॥ तत्रर्षयःसप्तजाताविदुर्यान्मरुतोग-
णान् ॥५॥ वायुवेगोवायुबलोवायुहावायुमंडलः ॥ वायुकालोवायुरेतावायुचक्रश्चवीर्यवान् ॥६॥ एतेतनयास्तस्ययैर्धार-
यंतिचराचरं ॥ पुरामंकणकःसिद्धःकुशाग्रेणेतिमेश्रुतं ॥ ७ ॥ क्षतात्किलकरेविप्रास्तस्यशाकरसोस्रवत् ॥ सवैशाकरसं
दृष्ट्वाहर्षाविष्टःसनृत्तवान् ॥ ८ ॥ ततःसर्वंप्रनृत्तंचस्थावरंजंगमंचयत् ॥ प्रनृत्तंचजगद्दृष्ट्वातेजसातस्यमोहितं ॥ ९ ॥
ब्रह्मादिभिःसुरैस्तत्रऋषिभिश्चतपोधनैः ॥ विज्ञप्तोवैमहादेवोमुनेरर्थेद्विजोत्तमाः ॥ १० ॥ नायंनृत्येद्यथादेवतथात्वंक-
र्तुमर्हसि ॥ ततोदेवोमुनिंदृष्ट्वाहर्षाविष्टमतिंतदा ॥ ११ ॥ सुराणांहितकामार्थंमहादेवोभ्यभाषत ॥ हर्षस्थानंकिमर्थंच
तवैवंमुनिसत्तम ॥ तपस्विनोधर्मपथिस्थितस्यद्विजसत्तम ॥ १२ ॥ ऋषिरुवाच ॥ किंनपश्यसिमेब्रह्मन्कराच्छाकरसं
स्रुतं ॥ यंदृष्ट्वाचप्रनृत्तोवैहर्षेणमहतान्वितः ॥ १३ ॥ तंप्रहस्याब्रवीद्देवोमुनिंरागेणमोहितं ॥ अहंनविस्मयंविप्रगच्छा-
मीहप्रपश्यमां ॥ १४ ॥ एवमुक्त्वामुनिश्रेष्ठंदेवदेवोमहाद्युतिः ॥ अंगुल्यग्रेणविप्रेंद्राःस्वांगुष्ठस्ताडितोऽभवत् ॥ १५ ॥
ततोभस्मक्षतात्तस्मान्निर्गतंहिमसन्निभं ॥ तंदृष्ट्वाव्रीडितोविप्रःपादयोःपतितोऽब्रवीत् ॥ १६ ॥ नान्यद्देवादहंमन्येशूल-
पाणेर्महात्मनः ॥ चराचरस्यजगतोगुरुस्त्वमसिशूलधृक् ॥ १७ ॥ त्वदाश्रयाश्चदृश्यंतेसुराब्रह्मादयोऽनघ ॥ सर्वस्त्व-

१ स्नायंति रुधिरादिग्धास्तेन सार्धमनिन्दिताः ॥ इति पा०
२ तद्रेतः सतु जग्राह कलशेवै महातपाः ॥ इति पा०

मसिदेवानांकर्त्ताकारयितामहान् ॥ १८ ॥ त्वत्प्रसादात्सुराःसर्वेमोदंतेह्यकुतोभयाः ॥ सुरासुरस्यचाधीशनतपोमेक्षरे- अ०
न्महत् ॥ १९ ॥ लोमहर्षणउवाच ॥ एवंस्तुत्वामहादेवमृषिःसप्रणतोऽभवत् ॥ ततोदेवःप्रसन्नात्मातमृषिंवाक्यमब्रवीत्
॥ २० ॥ ईश्वरउवाच ॥ तपस्तेवर्द्धतांविप्रमत्प्रसादात्सहस्रधा ॥ आश्रमेचेहवत्स्यामित्वयासार्द्धमहंसदा ॥ २१ ॥ ३८
सततसारस्वतेस्नात्वायोमामर्चिष्यतेनरः ॥ नतस्यदुर्लभंकिंचिदिहलोकेपरत्रच ॥ २२ ॥ सारस्वतंचतेलोकंगमिष्यंतिन
संशयः ॥ शिवस्यचप्रसादेनप्राप्नोतिपरमंपदं ॥ २३ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येअष्टात्रिंशोऽध्यायः ॥ ३८ ॥
लोमहर्षणउवाच ॥ ततश्चौशनसंतीर्थंगच्छेत्तुश्रद्धयान्वितः ॥ उशनायत्रसंसिद्धोग्रहत्वंसमवाप्तवान् ॥ १ ॥ तस्मि-
न्पुण्येकुरुक्षेत्रेपातकैर्जन्मसंभवैः ॥ मुक्तोयातिपरंब्रह्मयतोनावर्त्ततेपुनः ॥ २ ॥ रहोदरोनाममुनिर्यत्रसिद्धोबभूवह ॥ म-
हताशिरसाग्रस्तस्तीर्थमाहात्म्यदर्शनात् ॥ ३ ॥ ऋषयऊचुः ॥ कथंरहोदरोग्रस्तःकथंमोक्षमवाप्तवान् ॥ तीर्थस्यतस्य
माहात्म्यंश्रोतुमिच्छामहेवयं ॥ ४ ॥ लोमहर्षणउवाच ॥ पुरावैदंडकारण्येराघवेणमहात्मना ॥ वसताद्विजशार्दूलाराः-
क्षसास्तत्रहिंसिताः ॥ ५ ॥ तत्रैकस्यशिरश्छिन्नंराक्षसस्यदुरात्मनः ॥ क्षुरेणशतधारेणतत्पपातमहावने ॥ ६ ॥ रहोद-
रस्यतल्लग्नंग्रीवायांचयदृच्छया ॥ वनेविचरतस्तस्यह्यस्थिभित्त्वाविवेशह ॥ ७ ॥ सतेनलग्नेनतदाविहर्त्तुंनशशाकह ॥
अभिगम्यमहाप्राज्ञस्तीर्थान्यायतनानिच ॥ ८ ॥ सतुतेनापिस्रवतावेदनार्त्तोमहामुनिः ॥ जगामसर्वतीर्थानिपृथिव्यां
यानिकानिचित् ॥ ९ ॥ ततःसकथयामासऋषीणांभावितात्मनां ॥ तेऽब्रुवन्नृषयोविप्रप्रयाह्यौशनसंप्रति ॥ १० ॥ ते- ६०
षांतद्वचनंश्रुत्वाजगामसरहोदरः ॥ ततऔशनसंतीर्थंतस्योपस्पृशतस्तदा ॥ ११ ॥ तच्छिरःशरणंमुक्त्वापपातांतर्जले
द्विजाः ॥ ततःसविरजाभूत्वापूतात्मावीतकल्मषः ॥ १२ ॥ आजगामाश्रमंप्रीतःकथयामासचाखिलं ॥ तेश्रुत्वाऋषयः

सर्वेतीर्थमाहात्म्यमुत्तमं ॥ १३ ॥ कपालमोचनमितिनामचक्रुःसमागताः ॥ तत्रापिसुमहत्तीर्थंविश्वामित्रस्यविश्रुतं ॥ १४ ॥ ब्राह्मण्यंलब्धवान्यत्रविश्वामित्रोमहामुनिः ॥ तस्मिंस्तीर्थवरेस्नात्वाब्राह्मण्यंलभतेध्रुवं ॥ १५ ॥ ब्राह्मणस्तु विशुद्धात्मापरंपदमवाप्नुयात् ॥ ततःपृथूदकंगच्छेन्नियतोनियताशनः ॥ १६ ॥ तत्रसिद्धस्तुब्रह्मर्षिःऋषंगुरितिनामतः ॥ जातिस्मरऋषंगुस्तुगंगाद्वारेसदास्थितः ॥ १७ ॥ अंतकालंततोदृष्ट्वापुत्रान्वचनमब्रवीत् ॥ स्मृत्वातीर्थगुणान्सर्वान्प्राहेदमृषिसत्तमान् ॥ १८ ॥ सरस्वत्युत्तरेतीर्थेयस्त्यजेदात्मनस्तनुम् ॥ पृथूदकेजप्यपरोनैतस्यमरणंभवेत् ॥ १९ ॥ तत्रैवब्रह्मयोन्यस्तिब्रह्मणायत्रवैपुरा ॥ पृथूदकंसमाश्रित्यसरस्वत्यास्तटेस्थितम् ॥ २० ॥ चातुर्वर्ण्यस्यसृष्ट्यर्थमात्मज्ञानपरोऽभवत् ॥ तस्याभिध्यायतःसृष्टिंब्रह्मणोऽव्यक्तजन्मनः ॥ २१ ॥ मुखतोब्राह्मणाजाताबाहुभ्यांक्षत्रियास्तथा ॥ ऊरुभ्यांवैश्यजातीयाःपद्भ्यांशूद्रास्ततोऽभवन् ॥ २२ ॥ चातुर्वर्ण्यंततोदृष्ट्वाआश्रमाःस्थापितास्ततः ॥ एवंप्रतिष्ठितंतीर्थंब्रह्मयोनीतिसंज्ञितं ॥ २३ ॥ तत्रस्नात्वामुक्तिकामःपुनर्योनिंनपश्यति ॥ तत्रैवतीर्थंविख्यातमवकीर्णेतिनामतः ॥ २४ ॥ यस्मिंस्तीर्थेबकोदाल्भ्योराष्ट्रंवैचित्यधर्षणात् ॥ जुहावब्राह्मणैःसार्धंतत्राबुध्यततोनृपः ॥ २५ ॥ ऋषयऊचुः ॥ कथंप्रतिष्ठितंतीर्थमवकीर्णेतिनामतः ॥ धृतराष्ट्रेणराज्ञासकिमर्थंनप्रसादितः ॥ २६ ॥ लोमहर्षणउवाच ॥ नैमिषेयाश्चऋषयोदक्षिणार्थंययुःपुरा ॥ तत्रैवचबकोदाल्भ्योधृतराष्ट्रमयाचत ॥ २७ ॥ तेनापितत्रनिंदार्थमुक्तंयच्चवृतंतुतत् ॥ ततःक्रोधेनमहतामांसान्युत्कृत्यतत्रह ॥ २८ ॥ पृथूदकेमहातीर्थेअवकीर्णेतिनामतः ॥ जुहावधृतराष्ट्रस्यराष्ट्रंनरपतेस्ततः ॥ २९ ॥ हूयमानेतदाराष्ट्रेप्रवृत्तेयज्ञकर्मणि ॥ अक्षीयतततोराष्ट्रंनृपतेर्दुष्कृतेनवै ॥ ३० ॥ ततःसचिंतयामासब्राह्मणस्यविचेष्टितं ॥ पुरोहितेनसहितोरत्नान्यादायसर्वशः ॥ ३१ ॥ प्रसादनार्थंविप्रस्यह्यवकीर्णेययौतदा ॥ प्रसादितः

सराज्ञाचतुष्ठःप्रोवाचतंनृपं ॥ ३२ ॥ ब्राह्मणानावमंतव्याःपुरुषेणविजानता ॥ ब्राह्मणश्चेदवज्ञातोहन्यात्त्रिपुरुषंकुलं
॥ ३३ ॥ एवमुक्त्वासनृपतिमाज्येनपयसापुनः ॥ उत्थापयामासमृतांस्तस्यराज्ञोहितेस्थितः ॥ ३४ ॥ तस्मिंस्तीर्थेतुयः
स्नातिश्रद्दधानोजितेंद्रियः ॥ सप्राप्नोतिनरोदिव्यंमनसाचिंतितंफलं ॥ ३५ ॥ तत्रतीर्थंसुविख्यातंयायातंनामनामतः ॥
यस्येहयजमानस्यमधुसुस्राववैनदी ॥ ३६ ॥ तस्मिन्स्नातोथभक्त्यातुमुच्यतेसर्वकिल्बिषैः ॥ फलंप्राप्नोतियज्ञस्यह्यश्व-
मेधस्यमानवः ॥ ३७ ॥ मधुस्रवंचतत्रैवतीर्थंपुण्यतमंद्विजाः ॥ तस्मिन्स्नात्वानरोभक्त्यामधुनातर्पयेत्पितॄन् ॥ ३८ ॥
तत्रापिसुमहत्तीर्थंवसिष्ठोद्वाहसंज्ञितं ॥ तत्रस्नातोभक्तियुतोवासिष्ठंलोकमाप्नुयात् ॥ ३९ ॥ इतिश्रीवामनपुराणेसरोमा-
हात्म्येएकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ॥ ॥ ॥ ॥
ऋषयऊचुः ॥ वसिष्ठस्यापवाहोऽसौमहावेगोबभूवह ॥ किमर्थंसासरिच्छ्रेष्ठातमृषिंप्रत्यवाहयत् ॥ १ ॥ लोमहर्षणउ-
वाच ॥ विश्वामित्रस्यराजर्षेर्वसिष्ठस्यमहात्मनः ॥ भृशंवैरंबभूवेहतपःस्पर्द्धाकृतेमहत् ॥ २ ॥ आश्रमोवैवसिष्ठस्यस्थाणु-
तीर्थेबभूवह ॥ तस्यपश्चिमदिग्भागेविश्वामित्रस्यधीमतः ॥ ३ ॥ यत्रेष्ट्वाभगवान्स्थाणुःपूजयित्वासरस्वतीं ॥ स्थापया-
मासदेवेशोलिंगाकारंसरस्वतीं ॥ ४ ॥ वसिष्ठस्तत्रतपसाघोररूपेणसंस्थितः ॥ तस्येहतपसाहीनोविश्वामित्रोबभूवह
॥ ५ ॥ सरस्वतींसमाहूयइदंवचनमब्रवीत् ॥ वसिष्ठंमुनिशार्दूलंस्वेनवेगेनचानय ॥ ६ ॥ इहायातंमुनिश्रेष्ठंहनिष्या-
मिनसंशयः ॥ एतच्छ्रुत्वातुवचनंव्यथितासानदीकिल ॥ ७ ॥ तथातांव्यथितांदृष्ट्वावेपमानांमहानदीं ॥ विश्वामित्रोऽ
वदत्क्रुद्धोवसिष्ठंशीघ्रमानय ॥ ८ ॥ ततोगत्वासरिच्छ्रेष्ठावसिष्ठंमुनिसत्तमं ॥ कथयामासरुदतीविश्वामित्रस्यतद्वचः

१ ययातेरिदं यायातं तस्येदमित्यण् । २ यत्र वसिष्ठस्यारुंधत्या सह विवाहस्तत् ।

॥ ९ ॥ तपःकृशांविवर्णांचभृशंशोकसमन्विताम् ॥ उवाचतांसरिच्छ्रेष्ठांविश्वामित्रायमांवह ॥ १० ॥ तस्यतद्वचनंश्रुत्वा कृपाशीलस्यसासरित् ॥ प्लावयामासतत्स्थानंप्रवाहेणांभसस्तदा ॥ ११ ॥ सचकूलापहारेणमैत्रावरुणिरुह्यतः ॥ वह-मानश्चतुष्टावतदादेवींसरस्वतीं ॥ १२ ॥ पितामहस्यसरसःप्रवृत्तासिसरस्वति ॥ व्याप्तंत्वयाजगत्सर्वंतवैवांभोभिरुत्त-मैः ॥ १३ ॥ त्वमेवकामगादेवीमेघेषुसृजसेपयः ॥ सर्वास्त्वापस्त्वमेवेतित्वत्तोवयंमहामहे ॥ १४ ॥ पुष्टिर्धृतिस्तथाकीर्त्तिः सिद्धिःकांतिःक्षमातथा ॥ स्वधास्वाहातथावाणीतवायत्तमिदंजगत् ॥ १५ ॥ त्वमेवसर्वभूतेषुवाणीरूपेणसंस्थिता ॥ ए-वंसरस्वतीतेनस्तुताभगवतीतदा ॥ १६ ॥ सुखेनोवाहतंविप्रंविश्वामित्राश्रमंप्रति ॥ न्यवेदयत्तदाचैत्वाविश्वामित्रायतं मुनिम् ॥ १७ ॥ तमानीतंसरस्वत्यादृष्ट्वाकोपसमन्वितः ॥ अथान्विषत्प्रहरणंवसिष्ठांतकरंतदा ॥ १८ ॥ तंतुक्रुद्धमभि-प्रेक्ष्यब्रह्महत्याभयान्नदी ॥ अपोवाहवसिष्ठंचमध्येनस्वांभसस्ततः ॥ १९ ॥ उभयोःकुर्वतीवाक्यंवंचयित्वाचगाधिजं ॥ ततोऽपवाहितंदृष्ट्वावसिष्ठमृषिसत्तमं ॥ २० ॥ अब्रवीत्क्रोधरक्ताक्षोविश्वामित्रोमहातपाः ॥ यस्मान्मांसरितांश्रेष्ठेवंच-यित्वाविनिर्गता ॥२१॥ शोणितंवहकल्याणिरक्षोग्रामसुसंयुता ॥ ततःसरस्वतीशप्ताविश्वामित्रेणधीमता ॥ २२॥ अवह-च्छोणितोन्मिश्रंतोयंसंवत्सरंतदा ॥ अथर्षयश्चदेवाश्चगंधर्वाप्सरसस्तदा ॥२३॥ सरस्वतींतदादृष्ट्वाबभूवुर्भृशदुःखिताः॥ तस्मिंस्तीर्थवरेरम्येशोणितंसमुपावहत् ॥ २४ ॥ ततोभूतपिशाचाश्चराक्षसाश्चसमागताः ॥ ततस्तेशोणितंसर्वेपिबंतिसु-खमासते ॥ २५ ॥ हृष्टाश्चतेनसुभृशंसुखिताविगतज्वराः ॥ नृत्यंतश्चहसंतश्चयथास्वर्गजितस्तथा ॥ २६ ॥ कस्यचि-त्त्वथकालस्यमुनयःशतयोजनात् ॥ तीर्थयात्रांसमाजग्मुःसरस्वत्यांतपोधनाः ॥ २७ ॥ तांदृष्ट्वाराक्षसैर्घोरैःपीयमानांम-

१ तादर्थ्ये चतुर्थ्येषा विश्वामित्रार्थमिति यावत् ।

हानदां ॥ परित्राणेसरस्वत्याःपरंयत्नंप्रचक्रिरे ॥ २८ ॥ तेतुसर्वेमहाभागाःसमागम्यमहाव्रताः ॥ आश्रित्यसरितांश्रे-
ष्ठामिदंवचनमब्रुवन् ॥ २९ ॥ किंकारणंसरिच्छ्रेष्ठेशोणितेनवहस्यथो ॥ एवमाकुलतांयातांश्रुत्वापृच्छामहेवयं ॥ ३० ॥ अ०
ततःसासर्वमाचष्टविश्वामित्रविचेष्टितं ॥ ततस्तेमुनयःप्रीताःसरस्वत्यांसमानयन् ॥ ३१ ॥ अरुणांपुण्यतोयौघांसर्वदुष्कृ-
तनाशनीं ॥ दृष्ट्वातोयंसरस्वत्याराक्षसादुःखिताभृशं ॥ ३२ ॥ ऊचुस्तान्वैमुनीन्सर्वान्दैन्ययुक्ताःपुनःपुनः ॥ वयंहिक्षु- ४०
धिताःसर्वेधर्महीनाश्चशाश्वताः ॥ ३३ ॥ नचनःकामकारोयंयद्वयंपापकारिणः ॥ युष्माकंचप्रसादेनदुष्कृतेनचकर्मणा
॥ ३४ ॥ पक्षोयंवर्धतेऽस्माकंयतश्चब्रह्मराक्षसाः ॥ एवंवैश्याश्चशूद्राश्चक्षत्रियाश्चविकर्मभिः ॥ ३५ ॥ येब्राह्मणान्प्रद्वि-
षंतितेभवंतीहराक्षसाः ॥ आचार्यमातरंचैवपितरंयेद्विषंतिह ॥ ३६ ॥ वृद्धानामवमानेनतेभवंतीहराक्षसाः ॥ योषितांचै-
वपापानांयोनिदोषेणवर्द्धते[1]॥३७॥ शक्ताभवंतःसर्वेषांलोकानामपितारणे ॥ तेषांतेमुनयःश्रुत्वाकृपाशीलाःपुनश्चते ॥३८॥
ऊचुःपरस्परंसर्वेतप्यमानाश्चतेद्विजाः ॥ क्षुतकीटावपन्नंचयच्चशिष्टाशितंभवेत् ॥ ३९ ॥ केशावपन्नमाधूतंमारुतश्वास-
दूषितं ॥ एतैःसंस्पृष्टमन्नंचभागोवैराक्षसोभवेत् ॥ ४० ॥ तस्माज्ज्ञात्वासदाविद्वांस्तान्येतानिविवर्जयेत् ॥ राक्षसा-
न्वैभोजयतेयोभुंक्तेस्वयमीदृशम् ॥४१॥ शोधयित्वातुतत्तीर्थमृषयस्तेतपोधनाः ॥ मोक्षार्थंरक्षसांतेषांसंगमंचाप्यकल्पयन्
॥४२॥ अरुणायाःसरस्वत्याःसंगमेलोकविश्रुते ॥ त्रिरात्रोपोषितःस्नातोमुच्यतेसर्वकिल्बिषैः॥ ४३ ॥ प्राप्तेकलियुगेघो-
रेह्यधर्मेप्रत्युपस्थिते ॥ अरुणासंगमेस्नात्वामुक्तिमाप्नोतिमानवः ॥ ४४ ॥ ततस्तेराक्षसाःसर्वेस्नाताःपापविवर्जिताः ॥
दिव्यमाल्यांबरधराःस्वर्गस्त्रीभिःसमन्विताः ॥ ४५ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येचत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ ६२

१ पापमित्यध्याहारः योषितां योनिदोषेण यत्पापं वर्धते तेन पापेन पापानां पापिनामित्यर्थः ।

लोमहर्षणउवाच ॥ समुद्रास्तत्रचत्वारऋषिणानिर्मिताःपुरा ॥ प्रत्येकंचनरःस्नातोगोसहस्रफलंलभेत् ॥ १ ॥ यत्किं-
चित्क्रियतेतस्मिंस्तपस्तीर्थेद्विजोत्तमाः ॥ परिपूर्णंहितत्सर्वमपिदुष्कृतकर्मणः ॥ २ ॥ शतसाहस्रकंतीर्थंतत्रैवशातिकं
द्विजाः ॥ उभयोरिहसुस्नातोगोसहस्रफलंलभेत् ॥ ३ ॥ सोमतीर्थंचतत्रापिसरस्वत्यारतटेस्थितं ॥ यस्मिन्स्नातस्तुपु-
रुषोराजसूयफलंलभेत् ॥ ४ ॥ रेणुकाष्टकमासाद्यश्रद्दधानोजितेंद्रियः ॥ मातृभक्त्यातुयत्पुण्यंतत्पुण्यंप्राप्नुयान्नरः
॥ ५ ॥ ऋणमोचनमासाद्यतीर्थंब्राह्मणसेवितं ॥ कुमारस्याभिषेकंचओजसंनामविश्रुतं ॥ ६ ॥ तस्मिन्स्नातस्तुपुरुषो
यशसाचसमन्वितः ॥ कौमारंपुरमाप्नोतिकृत्वास्नानंतुमानवः ॥ ७ ॥ चैत्रषष्ठ्यांशुक्लपक्षेयस्तुश्राद्धंकरिष्यति ॥ गया-
श्राद्धेचयत्पुण्यंतत्फलंप्राप्नुयान्नरः ॥ ८ ॥ सन्निहत्यांयथाश्राद्धंवायुनाकथितंपुरा ॥ तस्मात्सर्वप्रयत्नेनश्राद्धंतत्रसमाच-
रेत् ॥ ९ ॥ यस्तुस्नानंश्रद्दधानःचैत्रषष्ठ्यांकरिष्यति ॥ अक्षयंचोदकंतस्यपितॄणामुपजायते ॥ १० ॥ तत्रपंचवटंनाम
तीर्थंत्रैलोक्यविश्रुतं ॥ महादेवःस्थितोयत्रयोगमूर्तिधरःस्वयं ॥ ११ ॥ तत्रस्नात्वाऽर्चयित्वाचदेवदेवंमहेश्वरं ॥ गाणप-
त्यमवाप्नोतिदैवतैःसहमोदते ॥ १२ ॥ कुरुक्षेत्रंचविख्यातंकुरुणायत्रवैतपः ॥ तप्तंसुघोरंक्षेत्रस्यकर्षणार्थंद्विजोत्तमाः
॥ १३ ॥ तस्यघोरेणतपसातुष्टइंद्रोब्रवीद्वचः ॥ राजर्षेपरितुष्टोस्मितपसानेनसुव्रत ॥ १४ ॥ यज्ञंचयेकुरुक्षेत्रेकरिष्यंति
शतक्रतुं ॥ तेगमिष्यंतिसुकृतांल्लोकान्पापविवर्जितान् ॥ १५ ॥ अवहस्यततःशक्रोजगामत्रिदिवंप्रभुः ॥ आगम्याग-
म्यचैवैनंभूयोभूयोऽवहस्यच ॥ १६ ॥ शतक्रतुरनिर्विण्णःपृष्ट्वाःपृष्ट्वाजगामह ॥ यदातुतपसोग्रेणसंतप्तंदेहमात्मनः ॥ ततः
शक्रोऽब्रवीत्प्रीतोब्रूहियत्तेचिकीर्षितं ॥ १७ ॥ कुरुरुवाच ॥ येश्रद्दधानास्तीर्थेऽस्मिन्मानवानिवसंतिह ॥ तेप्राप्नुवंति
सदनंब्रह्मणःपरमात्मनः ॥ १८ ॥ अन्यत्रकृतपापायेपंचपातकदूषिताः ॥ अस्मिंस्तीर्थेनरःस्नातामुक्तायांतुपरांगतिं

॥ १९ ॥ कुरुक्षेत्रेपुण्यतमेकुरुक्षेत्रंद्विजोत्तमाः ॥ तंदृष्ट्वामुक्तपापस्तुपरंपदमवाप्नुयात् ॥ २० ॥ कुरुक्षेत्रेनरःस्नात्वामु-
क्तोभवतिकिल्बिषैः ॥ कुरुणासमनुज्ञातःप्राप्नोतिपरमंपदं ॥ २१ ॥ ततोगच्छेदनरकंतीर्थंत्रैलोक्यविश्रुतं ॥ यत्रपूर्वं
स्थितोब्रह्माऋषीणांचमहेश्वरः ॥ २२ ॥ रुद्रपत्नीपश्चिमतःपद्मनाभोंतरेस्थितः ॥ मध्येह्यनरकंतीर्थंत्रैलोक्यस्यापिदु-
र्लभं ॥ २३ ॥ यस्मिन्स्नातास्तुपुरुषाःप्रमुच्यंतेचपातकैः ॥ वैशाखेचयदाष्टम्यांमंगलस्यदिनंभवेत् ॥ २४ ॥ तदास्नानं
तत्रकृत्वामुक्तोभवतिपातकैः ॥ यःप्रयच्छेच्चकनकंतुर्यभागेनसंयुतं ॥ २५ ॥ कलशंचतथादद्यादपूपैःपरिशोभितं ॥ देव-
ताःप्रीणयेत्पूर्वंकरकैरत्नसंयुतैः ॥ २६ ॥ ततस्तुकलशौदद्यात्सर्वपातकनाशनौ ॥ अनेनैवविधानेनयस्तुस्नानंसमाचरेत्
॥ २७ ॥ समुक्तःकलुषैःसर्वैःप्रयातिपरमंपदं ॥ अन्यत्रापियदाषष्ठीमंगलेनभविष्यति ॥ २८ ॥ तत्रापिमुक्तिफलदा
कृत्यातस्मिन्भविष्यति ॥ तीर्थंचसर्वतीर्थानांयस्मिन्स्नातोद्विजोत्तमाः ॥ २९ ॥ सर्वदेवैरनुज्ञातःपरमंचाप्नुयात्पदं ॥ का-
म्यकंचवनंपुण्यंसर्वपातकनाशनं ॥ ३० ॥ यस्मिन्प्रविष्टमात्रस्तुमुक्तोभवतिकिल्बिषैः ॥ समाश्रित्यवनंपुण्यंसविताप्र-
कटःस्थितः ॥ ३१ ॥ पूषानामद्विजश्रेष्ठादर्शनान्मुक्तिमाप्नुयात् ॥ आदित्यस्यदिनेप्राप्तेतस्मिन्स्नातस्तुमानवः ॥ विशुद्ध-
मानसोऽभ्येतिमनसाचिंतितंफलं ॥ ३२ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येएकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥
ऋषयऊचुः ॥ काम्यकस्यतुपूर्वेणकुंजंदेवैर्निषेवितं ॥ तस्यतीर्थस्यसंभूतिंविस्तरेणब्रवीहिनः ॥ १ ॥ लोमहर्षणउवाच ॥
शृण्वंतुमुनयःसर्वेतीर्थमाहात्म्यमुत्तमं ॥ ऋषीणांचरितंश्रुत्वामुक्तोभवतिकिल्बिषैः ॥२॥ नैमिषेयाश्चऋषयःकुरुक्षेत्रंसमा-
गताः ॥ सरस्वत्यांचस्नानार्थंप्रवेशंनचलेभिरे ॥ ३ ॥ ततस्तुकल्पयामासुस्तीर्थंयज्ञोपवीतिनं ॥ शेषास्तुमुनयस्तत्रनप्र-
वेशंहिलेभिरे ॥ ४ ॥ रंतुकस्याश्रमाद्यावत्तावत्तीर्थंचचक्रकं ॥ ब्राह्मणैःपरिपूर्णंतुदृष्ट्वादेवीसरस्वती ॥ ५ ॥ हितार्थंसर्व-

विप्राणांकृत्वाकुंडानिसानदी ॥ प्रयातापश्चिममंमार्गैसर्वभूतहितेस्थिता ॥ ६ ॥ पूर्वप्रवाहेयःस्नातिगंगास्नानफलंलभेत् ॥
प्रवाहेदक्षिणेतस्यानर्म्मदासरितांवरा ॥ ७ ॥ पश्चिमेतुदिशाभागेयमुनाचाश्रितानदी ॥ यदाह्युत्तरतोयातिसिंधुर्भवति
सानदी ॥ ८ ॥ एवंदिशाप्रवाहेणह्यतिपुण्यासरस्वती ॥ तस्यांस्नातःसर्वतीर्थैस्नातोभवतिमानवः ॥ ९ ॥ ततोगच्छे-
द्द्विजश्रेष्ठमदनस्यमहात्मनः ॥ तीर्थंत्रैलोक्यविख्यातंविहारंनामनामतः ॥ १० ॥ यत्रदेवाःसमागम्याशिवदर्शनकांक्षि-
णः ॥ समागतानचापश्यन्देवंदेव्यासमन्वितं ॥ ११ ॥ तेस्तुवंतोमहादेवंनंदिनंगणनायकं ॥ ततःप्रसन्नोनंदीशःकथ-
यामासचेष्टितं ॥१२॥ भवस्यउमयासार्धंविहारेक्रीडितंमहत् ॥ तच्छ्रुत्वादेवताःसर्वाःपत्नीमाहूयतेगताः ॥ १३ ॥ तेषांक्री-
डाविनोदेनतुष्टःप्रोवाचशंकरः ॥ योऽस्मिंस्तीर्थेनरःस्नातिविहारेश्रद्धयान्वितः ॥ १४ ॥ धनधान्यप्रियैर्युक्तोभवतेनात्र
संशयः ॥ दुर्गातीर्थंततोगच्छेद्दुर्गयासेवितंमहत् ॥ १५॥ यत्रस्नात्वापितॄन्पूज्यनदुर्गतिमवाप्नुयात् ॥ तत्रापिचसरस्व-
त्याःकूलंत्रैलोक्यविश्रुतं ॥ १६ ॥ दर्शनान्मुक्तिमाप्नोतिसर्वपातकवर्जितः ॥ यस्तत्रतर्पयेद्देवान्पितॄंश्चश्रद्धयानरः ॥१७॥
अक्षय्यंलभतेसर्वंपितृतीर्थेविशिष्यते ॥ मातृहापितृहायश्चब्रह्महागुरुतल्पगः ॥ १८ ॥ स्नात्वाशुद्धिमवाप्नोतियत्रप्रा-
चीसरस्वती ॥ देवमार्गप्रतिष्ठायदेवमार्गेणनिःसृता ॥ १९ ॥ प्राचीसरस्वतीपुण्याअपिदुष्कृतकर्मणां ॥ त्रिरात्रंयेकरि-
ष्यंतिप्राचींप्राप्यसरस्वतीं ॥ २० ॥ तेषांनदुष्कृतंकिंचिद्देहमाश्रित्यतिष्ठति ॥ नरनारायणौदेवौब्रह्मास्थाणुस्तथाऋ-
षिः ॥ २१ ॥ प्राचींदिशंनिषेवंतःसदादेवाःसवासवाः ॥ येतुश्राद्धंकरिष्यंतिप्राचीमाश्रित्यमानवाः ॥ २२ ॥ तेषांनदु-
र्लभंकिंचिदिहलोकेपरत्रच ॥ तस्मात्प्राचीसदासेव्यापंचम्यांचविशेषतः ॥ २३ ॥ पंचम्यांसेवमानस्तुलक्ष्मीवांश्चभवे-

१ जायते इतिपाठः । भवते इतिपाठे भूप्रात्पावात्मनेपदी इत्यस्य रूपम् । २ ल्यबार्षः पूजयित्वेत्यर्थः । ३ स्नानदानादिकमित्यध्याहारः ।

न्नरः ॥ तीर्थमौशनसंतत्रत्रैलोक्यस्यापिदुर्लभं ॥२४॥ उशनायत्रसंसिद्धआराध्यपरमेश्वरं ॥ ग्रहमध्येपूज्यतेसतस्यतीर्थ-
स्यसेवनात् ॥ २५ ॥ एवंशुक्रेणमुनिनासेवितंतीर्थमुत्तमं ॥ येसेवंतेश्रद्दधानास्तेयांतिपरमांगतिं ॥ २६ ॥ यस्तुश्राद्धंन-
रोभक्त्यातस्मिंस्तीर्थेकरिष्यति ॥ पितरस्तारितास्तेनभविष्यंतिनसंशयः ॥ २७ ॥ चतुर्मुखंब्रह्मतीर्थंयत्रमर्यादयास्थि-
तं ॥ येसेवंतेचतुर्दश्यांसोपवासावसंतिच ॥२८॥ अष्टम्यांकृष्णपक्षस्यचैत्रेमासिद्विजोत्तमाः ॥ तेपश्यंतिपरंसूक्ष्मंयस्मा-
न्नावर्त्तनंपुनः ॥ २९ ॥ स्थाणुतीर्थंततोगच्छेत्सहस्रलिंगशोभितं ॥ तत्रस्थाणुवटंदृष्ट्वामुक्तोभवतिकिल्बिषैः ॥ ३० ॥
इतिश्रीवामनपुराणेसरोमाहात्म्येद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ ॥ ॥
ऋषयऊचुः ॥ स्थाणुतीर्थस्यमाहात्म्यंवटस्यापिमहामुने ॥ सान्निहत्याःपुरोत्पत्तिंपूरणंपांशुनाततः ॥ १ ॥ लिंगानांदर्श-
नात्पुण्यंस्पर्शनेनचकिंफलं ॥ तथैवसरमाहात्म्यंब्रूहिसर्वमशेषतः ॥ २ ॥ लोमहर्षणउवाच ॥ शृण्वंतुदेवताःसर्वेपुरा-
णंवामनंमहत् ॥ यच्छ्रुत्वामुक्तिमाप्नोतिप्रसादाद्वामनस्यतु ॥ ३ ॥ सनत्कुमारमासीनंस्थाणोर्वटसमीपतः ॥ ऋषि-
भिर्वालखिल्याद्यैर्ब्रह्मपुत्रैर्महात्मभिः ॥ ४ ॥ मार्कंडेयोमुनिस्तत्रविनयेनाभिगम्यच ॥ पप्रच्छसरमाहात्म्यंप्रमाणंच
स्थितंतथा ॥ ५ ॥ मार्कंडेयउवाच ॥ ब्रह्मपुत्रमहाभागसर्वशास्त्रविशारद ॥ ब्रूहिमेसरमाहात्म्यंसर्वपापभयापहं ॥ ६ ॥
कानितीर्थानिदृश्यानिगुह्यानिद्विजसत्तम ॥ लिंगानिकतिपुण्यानिस्थाणोर्यानिसमीपतः ॥ ७ ॥ येषांदर्शनमात्रेणमुक्तिं
प्राप्नोतिमानवः ॥ वटस्यदर्शनंपुण्यमुत्पत्तिंकथयस्वमे ॥ ८ ॥ प्रदक्षिणायांयत्पुण्यंतीर्थस्नानेनयत्फलं ॥ गुह्येषुदेव
दृष्टेषुयत्पुण्यमभिजायते ॥ ९ ॥ देवदेवोयथास्थाणुःसरमध्येव्यवस्थितः ॥ किमर्थंपांशुनाशक्रस्तीर्थंपूरितवान्पुनः

१ स्तन्त्रानामदन्तत्वेनेदम् ।

॥ १० ॥ स्थाणुतीर्थस्यमाहात्म्यंचक्रतीर्थस्ययत्फलं ॥ सूर्यतीर्थस्यमाहात्म्यंसोमतीर्थस्यब्रूहिमे ॥ ११ ॥ शंकर-
स्यचगुह्यानिविष्णोःस्थानानियानिच ॥ कथयस्वमहाभागसरस्वत्याःसविस्तरं ॥ १२ ॥ त्वंदेहीचापिदेवस्य
माहात्म्यंवेदतत्त्वतः ॥ विरंचस्यप्रसादेनविदितंसर्वमेवच ॥ १३ ॥ लोमहर्षणउवाच ॥ मार्कंडस्यवचःश्रुत्वाब्रह्मात्मा
समहामुनिः ॥ अतिभक्त्यातुतीर्थस्यप्रवलीकृतमानसः ॥१४॥ पर्यंकंशिथिलीकृत्यनमस्कृत्वामहेश्वरं ॥ कथयामासतत्
सर्वंयच्छ्रुतंब्रह्मणःपुरा ॥ १५ ॥ सनत्कुमारउवाच ॥ नमस्कृत्वामहादेवमीशानंवरदंशुभं ॥ उत्पत्तिंचप्रवक्ष्यामितीर्था-
नां ब्रह्मभाषितां ॥ १६ ॥ पूर्वमेकार्णवेघोरेनष्टेस्थावरजंगमे ॥ बृहदंडमभूदेकंप्रजानां बीजसंभवं ॥ १७ ॥ तस्मिन्नंडे
स्थितोब्रह्माशयनायोपचक्रमे ॥ सहस्रयुगपर्यंतंसुप्त्वासप्रत्यबुध्यत ॥१८॥ सत्वोद्रिक्तस्तथाब्रह्माशून्यंलोकमपश्यत ॥
सृष्टिंचिंतयतस्तस्यरजसामोहितस्यच ॥ १९ ॥ रजःसृष्टिगुणंप्रोक्तंसत्वंस्थितिगुणंविदुः ॥ उपसंहारकालेचप्रवर्त्तते
तमोगुणः ॥ २० ॥ गुणातीतःसभगवान्व्यापकःपुरुषःस्मृतः ॥ तेनेदंसकलंव्याप्तंयत्किंचिज्जीवसंज्ञितं ॥ २१ ॥
सब्रह्मासचगोविंदईश्वरःससनातनः ॥ यस्तंवेदमहात्मानंससर्वंवेदनिश्चितं ॥ २२ ॥ गुणातीतःसपुरुषःपरमात्मास-
नातनः ॥ यस्तंवेदमहात्मानंससर्वंवेदमोक्षवित् ॥ २३ ॥ किंतेषांसकलैस्तीर्थैराश्रमैर्वाप्रयोजनं ॥ येषांचानंतकंचित्त-
मात्मन्येवव्यवस्थितं ॥ २४ ॥ आत्मानदीसंयमपुण्यतीर्थासत्योदकाशीलशमादियुक्ता ॥ तस्यांस्नातःपुण्यकर्मापुनाति
नवारिणाशुद्ध्यतिचांतरात्मा ॥ २५ ॥ एतत्प्रधानंपुरुषस्यकर्मयदात्मसंबोधसुखेप्रविष्टं ॥ ज्ञेयंतदेवप्रवदंतिसंतस्तत्प्रा-
प्यदेहीविजहातिकामान् ॥ २६ ॥ नैतादृशंब्राह्मणस्यास्तिचित्तंयथैकतासमतासत्यताच ॥ शीलंस्थितिंदंडनिधानमा-

१ ब्रूहि देवातिदेवस्य माहात्म्यं देव तत्त्वतः इति पा० । २ आत्मरूपैवनदीति रूपकम् ।

जेवंततस्ततश्चोपरमःक्रियासु ॥ २७ ॥ अपिब्रह्मसमासेनयदुक्तंतेद्विजोत्तम ॥ यज्ज्ञात्वाब्रह्मपरमंप्राप्स्यसित्वंनसंशयः
॥ २८ ॥ इदानींशृणुचोत्पत्तिंब्रह्मणःपरमात्मनः ॥ इमंचोदाहरंस्तत्रश्लोकंनारायणंप्रति ॥ २९ ॥ आपोनाराइति
प्रोक्ताआपोवैनरसूनवः ॥ तासुशेतेसयस्माच्चतेननारायणःस्मृतः ॥ ३० ॥ विशुद्धसलिलेतस्मिन्विज्ञायांतर्गतंजगत् ॥
अंडंविभज्यभगवांस्तस्मादोमित्यजायत ॥ ३१ ॥ ततोभूरभवत्तस्माद्भुवइत्यपरःस्मृतः ॥ स्वःशब्दश्चतृतीयोभूद्भूर्भुवःस्वे-
तिसंज्ञिताः ॥ ३२ ॥ तस्यांतेजःसमभवत्तत्सवितुर्वरेण्यंयत् ॥ उदकंशोषयामासयत्तेजोणुविनिःसृतं ॥ ३३ ॥ तेज-
साशोषितंशेषंकललत्वमुपागतं ॥ कललाद्बुद्बुदंज्ञेयंततःकाठिन्यतांगतः ॥ ३४ ॥ काठिन्याद्धरिणीज्ञेयाभूतानांधारिणी
हिसा ॥ यस्मिन्स्थानेस्थितंह्यंडंतस्मिन्सन्निहितंसरः ॥ ३५ ॥ यदाद्यंनिःसृतंतेजस्तस्मादादित्यउच्यते ॥ अंडमध्येस-
मुत्पन्नोब्रह्मालोकपितामहः ॥ ३६ ॥ तस्योल्बंमेरुरभवज्जरायुःपर्वताःस्मृताः ॥ गर्भोदकंसमुद्राश्चतथानद्यःसहस्र-
शः ॥ ३७ ॥ नाभिस्थानाद्यदुदकंब्रह्मणोनिर्मलंमहत् ॥ महत्सरस्तेनपूर्णंविमलेनवरांभसा ॥३८॥ तस्मिन्मध्येस्था-
णुरूपीवटवृक्षोमहामनाः ॥ तस्माद्विनिर्गतावर्णाब्राह्मणाःक्षत्रियाविशः ॥ ३९ ॥ शूद्राश्चतस्मादुत्पन्नाःशुश्रूषार्थंद्वि-
जन्मनां ॥ ततश्चिंतयतःसृष्टिंब्रह्मणोऽव्यक्तजन्मनः ॥ ४० ॥ वालखिल्याःसमुत्पन्नामानसाःशुद्धिरूपिणः ॥ अष्टा-
शीतिसहस्राणिबभूवुश्चोर्ध्वरेतसः ॥ ४१ ॥ ततःसृष्टिंचिंतयतोब्रह्मणोऽव्यक्तजन्मनः ॥ मनसोमानसाजाताःसनकाद्या
महर्षयः ॥ ४२ ॥ पुनश्चिंतयतस्तस्यप्रजाकामस्यधीमतः ॥ ऋषयःसप्तचोत्पन्नास्तेप्रजापतयोऽभवन् ॥ ४३ ॥ पुन-
श्चिंतयतस्तस्यरजसामोहितस्यच ॥ वालखिल्याःसमुत्पन्नास्तपःस्वाध्यायतत्पराः ॥ ४४ ॥ तेसदास्नाननिरतादेवा-
र्चनपरायणाः ॥ उपवासैर्व्रतैस्तीव्रैःशोषयंतिकलेवरं ॥ ४५ ॥ दिव्यंवर्षसहस्रंतेकृशाधमनिसंतताः ॥ आराधयंतिदेवे-

शंनचतुष्यतिशंकरः ॥ ४६ ॥ ततःकालेनमहताउमयासहशंकरः ॥ आकाशमार्गेणतदादृष्ट्वादेवीसुदुःखिता ॥ ४७ ॥ प्रसाद्यदेवदेवेशंशंकरंप्राहसुव्रता ॥ क्लिश्यंतितेमुनिगणादेवदारुवनाश्रयाः ॥ ४८ ॥ तेषांक्लेशक्षयंदेवविधेहिकुरुमेदयां ॥ किंदेवधर्मनिष्ठानामनंतंदेवदुष्कृतं ॥४९॥ नाद्यापियेनसिद्ध्यंतिशुष्कस्नाय्वस्थिशोपिताः॥तच्छ्रुत्वावचनंदेव्याःपिनाकीपतितांतकः ॥ प्रोवाचप्रहसन्मूर्ध्नाचारुचंद्रांशुशोभितः ॥ ५० ॥ श्रीमहादेवउवाच ॥ नवेत्सिदेवितत्त्वेनधर्मस्य गहनांगतिं ॥ नैतेधर्म्मंविजानंतिनचकामाविवर्जिताः ॥ ५१ ॥ नचक्रोधेननिर्मुक्ताःकेवलंमूढबुद्धयः ॥ एतच्छ्रुत्वाब्रवीद्देवीमामेवंसंशितव्रतं ॥ ५२ ॥ देवप्रदर्शयात्मानंपरंकौतूहलंहिमे ॥ सइत्युक्तउवाचेदंदेवदेवःस्मिताननः ॥ ५३ ॥ तिष्ठत्वमत्रयास्यामियत्रैतेमुनिपुंगवाः ॥ साधयंतितपोघोरंदर्शयिष्यामिचेष्टितं ॥ ५४ ॥ इत्युक्तातुततोदेवीशंकरेणमहात्मना ॥ गच्छस्वेत्याहमुदिताभर्त्तारंभुवनेश्वरी ॥ ५५ ॥ यत्रतेमुनयःसर्वेकाष्ठलोष्टसमाःस्थिताः ॥ अधीयानामहाभागाहुताग्निसदनक्रियाः ॥ ५६ ॥ तान्विलोक्यततोदेवोनग्नःसर्वांगसुंदरः ॥ वनमालाकृतापीडोयुवाभिक्षाकपालभृत् ॥ ५७ ॥ आश्रमेपर्यटन्भिक्षांमुनीनामाश्रमंप्रति ॥ देहिभिक्षांततश्चोक्त्वाससंभ्रममन्वाश्रमंययौ ॥ ५८ ॥ तंविलोक्याश्रमगतंयोषितोब्रह्मवादिनां ॥ सकौतुकस्वभावेनतस्यरूपेणमोहिताः ॥ ५९ ॥ प्रोचुःपरस्परंनार्यएहिपश्यामभिक्षुकं ॥ परस्परमितिप्रोक्त्वागृह्यमूलफलंबहु ॥ ६० ॥ गृहाणभिक्षामूचुस्तास्तंदेवंमुनियोपितः ॥ सतुभिक्षाकपालंतत्प्रसार्यबहुसादरं ॥ ६१ ॥ देहिभिक्षांशिवंवोस्तुभवतीभ्यस्तपोधनाः ॥ हसमानस्तुदेवेशस्तत्रदेव्यानिरीक्षितः ॥ ६२ ॥ तत्रदत्त्वैवतांभिक्षांपप्रच्छुस्ताःस्मरातुराः ॥ नार्यऊचुः ॥ कोऽसौनामव्रतविधिस्त्वयातापससेव्यते ॥ ६३ ॥ यत्रनग्नेनलिं-

१ चंद्रखंडांशुशोभितः इति । पा०

गेनवनमालाविभूषितः ॥ भवान्वैतापसोहद्योब्रूहिस्मयदिमन्यसे ॥ ६४ ॥ इत्युक्तस्तापसस्ताभिःप्रोवाचहसिताननः
॥ इदंममव्रतंकिंचिन्नरहस्यंप्रकाशते ॥ ६५ ॥ शृण्वंतिबहवोयत्रतत्रवाख्यानाविद्यते ॥ अस्यव्रतस्यसुभगाइतिमत्वा
गमिष्यथ ॥ ६६ ॥ एवमुक्तास्तदातेनप्रत्यूचुस्ततंदामुनिं ॥ ततोभ्येहिगमिष्यामोमुनेनःकौतुकंमहत् ॥ ६७ ॥ इत्यु-
क्तास्तास्तदातंवैजगृहुःपाणिपल्लवैः ॥ काचित्कंठेसकंदर्पाकाचित्कामपरातथा ॥ ६८ ॥ जानुभ्यामपरानारीकेशेपुल-
लितापरा ॥ अपरातुकटीरंध्रेह्यपरापादयोरपि ॥ ६९ ॥ क्षोभंविलोक्यमुनयआश्रमेतुस्वयोषिताम् ॥ हन्यतामितिसं-
भाष्यकाष्ठपाषाणपाणयः ॥ ७० ॥ पातयंतिस्मदेवस्यलिंगमूर्ध्वंविभीषणं ॥ पातितेतुततोलिंगेगतोंतर्धानमीश्वरः
॥ ७१ ॥ देव्याजहासभगवान्कैलासंनगमाश्रितः ॥ पतितेदेवदेवस्यलिंगपृष्ठेचराचरे ॥ ७२ ॥ क्षोभोबभूवसुमहानृ-
षीणांभावितात्मनां ॥ एवंविदित्वातेतत्रवर्ततेव्याकुलाःस्मृताः ॥ ७३ ॥ उवाचैकोमुनिवरस्तत्रबुद्धिमतांवरः ॥ नवयंवि-
द्मःसद्भावंतापसस्यमहात्मनः ॥ ७४ ॥ विरिंचिंशरणंयामःसहिज्ञास्यतिचेष्टितं ॥ एवमुक्ताःसर्वएवमुनयःसजितेंद्रियाः
॥ ७५ ॥ ब्रह्मणःसदनंजग्मुर्देवैःसर्वैर्निषेवितं ॥ प्रणिपत्याथदेवेशंलज्जयाधोमुखाःस्थिताः ॥ ७६ ॥ अथतान्दुःखि-
तान्दृष्ट्वाब्रह्मावचनमब्रवीत् ॥ अहोमुग्धायदायूयंक्रोधेनकलुषीकृताः ॥ ७७ ॥ नधर्मंचक्रियांकांचिज्जानतेमूढबुद्धयः ॥
श्रूयतांधर्मसर्वस्वंतापसाःक्रूरकर्मणः ॥ ७८ ॥ विदित्वायद्बुधःक्षिप्रंधर्मस्यफलमाप्नुयात् ॥ योऽसावात्मनिदेहेऽस्मिन्
विभुर्नित्योव्यवस्थितः ॥ ७९ ॥ सोऽनादिःसमहास्थाणुःपृथक्त्वेपरिसूचितः ॥ मणिर्यथोपधानेनधत्तेवर्णोज्ज्वलोपिवै
॥ ८० ॥ तन्मयोभवतेतद्वदात्मापिमनसाकृतः ॥ मनसोभेदमाश्रित्यकर्मभिश्चोपचीयते ॥ ८१ ॥ ततःकर्मवशाद्भुंक्तेय-
द्भोगान्स्वर्गनारकान् ॥ तन्मनःशोधयेद्धीमान्ज्ञानयोगमुपक्रमैः ॥ ८२ ॥ तस्मिन्बुद्धेह्यंतरात्मास्वयमेवनिराकुलः ॥ नश-

रीरस्यसंक्लेशैरपिनिर्दहनात्मकः ॥ ८३ ॥ शुद्धिमाप्नोतिपुरुषःसंशुद्धंयस्यनोमनः ॥ क्रियानियमनार्थायपातकेभ्यःप्र-
कीर्त्तिताः ॥ ८४ ॥ यस्मादत्याविलंदेहंनशीघ्रंशुद्ध्यतेकिल ॥ तेनलोकेषुमार्गोयंसत्पथस्यप्रवर्त्तकः ॥ ८५ ॥ वर्णाश्र-
मविभागोयंलोकाध्यक्षेणकेनचित् ॥ निमित्तंमोहमाहात्म्यंनिह्नवोत्तमभागिनां ॥ ८६ ॥ भवंतःक्रोधकामाभ्यामभिभू-
ताश्रमेस्थिताः ॥ ज्ञानिनामाश्रमोवेश्मवेश्माश्रममयोगिनां ॥ ८७ ॥ क्वचन्यस्तसमस्तेच्छाक्वचनारीमयोभ्रमः ॥ क्व
क्रोधईदृशोघोरोयेनात्मानंनजानथ ॥ ८८ ॥ यत्क्रोधनोयजतियच्चददातिनित्यंयद्वातपस्तपतियच्चजुहोतितस्य ॥ प्राप्नो-
तिनोतस्यफलंहिलोकेमोघंफलंतस्यहिकोपनस्य ॥८९॥ इतिश्रीवामनपुराणेसरोमाहात्म्येत्रिचत्वारिंशोऽध्यायः ॥४३॥
सनत्कुमारउवाच ॥ ब्रह्मणोवचनंश्रुत्वाऋषयःसर्वएवते ॥ पुनरेवचपप्रच्छुर्जगतःश्रेयकारणं ॥ १ ॥ ब्रह्मोवाच ॥
गच्छामःशरणंदेवंशूलपाणिंत्रिलोचनं ॥ प्रसादाद्देवदेवस्यभविष्यथयथापुरा ॥ २ ॥ इत्युक्त्वाब्रह्मणासार्द्धंकैलासंगिरि-
मुत्तमं ॥ ददृशुस्तेसमासीनमुमयासहितंहरं ॥ ३ ॥ ततःस्तोतुंसमारब्धोब्रह्मालोकपितामहः ॥ देवाधिदेवंवरदंत्रैलो-
क्यस्यशिवंप्रभुं ॥ ४ ॥ ब्रह्मोवाच ॥ अनंतायनमस्तुभ्यंवरदायपिनाकिने ॥ महादेवायदेवायस्थाणवेपरमात्मने ॥ ५ ॥
नमोऽस्तुभुवनेशायतुभ्यंतारकसर्वदा ॥ ज्ञानानांदायकोदेवस्त्वमेकःपुरुषोत्तमः ॥ ६ ॥ नमस्तेपद्मगर्भायहृत्पद्मशायिने
नमः ॥ घोरशांतितपापायचंडक्रोधनमोस्तुते ॥ ७ ॥ नमस्तेदेवविश्वेशनमस्तेशूरनायक ॥ शूलपाणेनमस्तेऽस्तुनम-
स्तेविश्वभावन ॥ ८ ॥ एवंस्तुतोमहादेवोब्रह्मणाऋषिभिस्तदा ॥ उवाचतानाव्रजतलिंगंवोभवितापुनः ॥ ९ ॥ क्रियतां
मद्वचःशीघ्रंयेनमेप्रीतिरुत्तमा ॥ भविष्यतिप्रतिष्ठायांलिंगस्यात्रनसंशयः ॥ १० ॥ येलिंगंपूजयिष्यंतिमामकंभक्तिमा-
श्रिताः ॥ नतेषांदुर्लभंकिंचिद्भविष्यतिकदाचन ॥११॥ सर्वेषामपिपापानांकृतानामपिजानता ॥ शुद्ध्यतेलिंगपूजायाना-

त्रकार्योविचारणा ॥ १२ ॥ युष्माभिःपातितंलिंगंतारयित्वामहत्सरः ॥ सन्निहत्यांतुविख्यातंतस्मिन्शीघ्रंप्रतिष्ठितं
॥ १३ ॥ यथाभिलषितंकामंततःप्राप्स्यथब्राह्मणाः ॥ स्थाणुनाम्नाहिलोकेषुपूजनीयोदिवौकसां ॥ १४ ॥ स्थाण्वीश्वरे
स्थितोयस्मात्ततःस्थाण्वीश्वरःस्मृतः ॥ येस्मरंतिसदास्थाणुंतेमुक्ताःसर्वकिल्बिषैः ॥ १५ ॥ शुद्धदेहाभविष्यंतिदर्शना-
न्मोक्षगामिनः ॥ इत्येवमुक्तादेवेनऋषयोब्रह्मणासह ॥१६॥ तस्माद्दारुवनाल्लिंगंनेतुंसमुपचक्रमुः ॥ तंचालयितुमशक्ता-
स्तेदेवाऋषिभिःसह ॥ १७॥ श्रमेणमहतायुक्ताब्रह्माणंशरणंययुः ॥ तेषांश्रमाभिपन्नानामिदंब्रह्माब्रवीद्वचः ॥ १८ ॥
किंवाश्रमेणमहतानयूयंवहनक्षमाः ॥ स्वेच्छयापातितंलिंगंदेवदेवेनशूलिना ॥ १९ ॥ तस्मात्तमेवशरणंयास्यामःसहि-
ताःसुराः ॥ प्रसन्नश्चमहादेवःस्वयमेवसनेष्यति ॥ २० ॥ इत्येवमुक्ताऋषयोदेवाश्चब्रह्मणासह ॥ कैलासंगिरिमासा-
द्यरुद्रदर्शनकांक्षिणः ॥ २१ ॥ नचपश्यंतितेदेवंतताश्चिंतासमन्विताः ॥ ब्रह्माणमूचुर्मुनयःक्वसदेवोमहेश्वरः ॥ २२ ॥
ततोब्रह्माचिरंध्यात्वादेवदेवंमहेश्वरं ॥ हस्तिरूपेणतिष्ठंतंमुनिभिर्मानसैस्तुतं ॥ २३ ॥ अथतेऋषयःसर्वेदेवाश्चब्रह्मणा
सह ॥ गतामहत्सरःपुण्यंयत्रदेवःस्वयंस्थितः ॥ २४ ॥ नचपश्यंतितेदेवमन्विषंतस्ततस्ततः ॥ ततश्चिंतान्वितादेवाब्रह्म-
णासहितास्तथा ॥ २५ ॥ पश्यंतिदेवींसुप्रीतांकमंडलुविभूषितां ॥ प्रीयमाणास्तदादेवमिदंवचनमब्रुवन् ॥ २६ ॥ क्वदे-
विमातर्देवेशोदृश्यतेसर्वदःसमः ॥ श्रमेणमहतायुक्ताअन्विषंतोमहेश्वरं ॥ २७ ॥ ततस्तुकृपयाविष्टादेवीवचनमब्रवीत्
॥ अत्रैवाद्यमहाभागास्तंद्रक्ष्यथमहेश्वरम् ॥ २८ ॥ पीयतामम्मृतंदेवास्ततोद्रक्ष्यथशंकरं ॥ एतच्छ्रुत्वातुवचनंभवान्या
समुदाहृतं ॥ २९ ॥ सुखोपविष्टास्तेदेवाःपपुस्तदमृतंशुचि ॥ अनंतरंसुखासीनाःपप्रच्छुःपरमेश्वरीं ॥ ३० ॥ क्वसदे-
वइहायातोहस्तिरूपधरःस्थितः ॥ दर्शितश्चतदादेव्यासरोमध्येव्यवस्थितः ॥ ३१ ॥ दृष्ट्वादेवंहर्षयुक्ताःसर्वेदेवाःसवा-

६७

सवाः ॥ ब्रह्माणमग्रतःकृत्वाइदंवचनमब्रुवन् ॥ ३२ ॥ त्वयात्यक्तंमहादेवलिंगंत्रैलोक्यवंदितं ॥ तस्यचानयनेनान्यःस-
मर्थःस्यान्महेश्वर ॥ ३३ ॥ इत्येवमुक्तोभगवान्देवोब्रह्मादिभिर्हरः ॥ जगामऋषिभिःसार्द्धंदेवदारुवनाश्रयं ॥ ३४ ॥
तत्रगत्वामहादेवोहस्तिरूपधरोहरः ॥ करेणजग्राहततोलीलयापरमेश्वरम् ॥ ३५ ॥ तमादायमहादेवःस्तूयमानोमह-
र्षिभिः ॥ निवेशयामासतदासरःपार्श्वेतुपश्चिमे ॥ ३६ ॥ ततोदेवाःसर्वएवऋषयश्चतपोधनाः ॥ आत्मानंसफलंदृष्ट्वास्तोत्रं
चक्रुर्महेश्वरे ॥ ३७ ॥ नमस्ते परमात्मन् अनंतयोने लोकसाक्षिन् परमेष्ठिन् भगवन् सर्वज्ञ क्षेत्रज्ञ ज्ञानज्ञेय सर्वेश्वर
महाविरंचे महाविभूते महाक्षेत्रज्ञ महापुरुष सर्वभूतावास मनोनिवास आदिदेव महादेव सदाशिव ईशान दुर्विज्ञेय
दुराराध्य महाभूतेश्वर परमेश्वर महायोगेश्वर त्र्यंबक महायोगिन् परब्रह्म परमज्योतिः ब्रह्मविदुत्तम ॐकार वषट-
कार स्वाहाकार स्वधाकार परमकारण सर्वगत सर्वदर्शन सर्वशक्त सर्वदेव अज सहस्रार्चिः सुधामन् हरधाम वंश-
वर्त्त संवर्त्त संकर्षण वडवानल अग्नीषोमात्मक पवित्र महापवित्र महामेघ महाकामहन् हंस परमहंस महाराजिक
महेश्वर महाकामुक महाहंस भवक्षयकर सुरसिद्धार्चित हिरण्यवाह हिरण्यरेतः हिरण्यनाभ हिरण्याग्रकेश मुंजके-
शिन् सर्वलोकवरप्रद सर्वानुग्रहकर कमलेशय हृदयेशय ज्ञानोदधे शंभो च विभो महायज्ञ महायाज्ञिक सर्वयज्ञमय
सर्वयज्ञसंस्तुत निराश्रय समुद्रेश अत्रिसंभूत भक्तानुकंपक अभग्नयोग योगधर वासुकिमहाहिविद्योतितविग्रह ह-
रितनयन त्रिलोचन जटाधर नीलकंठ चंद्रार्धधर उमाशरीरार्धधर शूलधर पिनाकधर खड्गचर्मधर गजचर्मधर दुस्त-
रसंसारमहासंहारकर प्रसीद भक्तजनवत्सल ॥१॥ एवंस्तुतोदेवगणैःस्वभक्त्यासब्रह्ममुख्यैश्चपितामहेन ॥ त्यक्त्वातदा-
हस्तिरूपंमहात्मालिंगेतदासंनिधानंचकार ॥ ३८ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येचतुस्त्रिंशोऽध्यायः ॥ ४४ ॥ ॥

सनत्कुमारउवाच ॥ अथोवाचमहादेवोदेवान्ब्रह्मपुरोगमान् ॥ ऋषीणांचैवप्रत्यक्षंतीर्थमाहात्म्यमुत्तमं ॥ १ ॥ एतत्स-
न्निहितंप्रोक्तंसरःपुण्यतमंमहत् ॥ मयोपवेशितंयस्मात्तस्मान्मुक्तिप्रदायकं ॥२॥ इहयेपुरुषाःकेचिद्ब्राह्मणाःक्षत्रियाविशः॥
लिंगस्यदर्शनादेवपश्यंतिपरमंपदं ॥ ३ ॥ अहन्यहनितीर्थानिआसमुद्रात्सरांसिच ॥ स्थाणुतीर्थंसमेष्यंतिमध्यंप्राप्तेदि-
वाकरे ॥ ४ ॥ स्तोत्रेणानेनसततंयेमांस्तोष्यंतिभक्तितः ॥ तस्याहंसुलभोनित्यंभविष्यामिनसंशयः ॥ ५ ॥ इयुक्त्वाभग-
वान्रुद्रोह्यंतर्धानंगतःप्रभुः ॥ देवाश्चऋषयःसर्वेस्वानिस्थानानिभेजिरे ॥६॥ ततोनिरंतरंस्वर्गंमानुषैर्मिश्रितंकृतं॥ स्थाणु-
लिंगस्यमाहात्म्यदर्शनात्स्वर्गमाप्नुयुः ॥ ७ ॥ ततोदेवगणाःसर्वेब्रह्माणंशरणंययुः ॥ तानुवाचतदाब्रह्माकिमर्थमिहचाग-
ताः ॥ ८ ॥ ततोदेवाःसर्वएवइदंवचनमब्रुवन् ॥ मानुषेभ्योभयंतीर्थेरक्षास्माकंपितामह ॥ ९ ॥ तानुवाचतदाब्रह्मादेवांत्रि-
दशनायकं ॥ पांशुनापूर्यतांशीघ्रंसाद्धँशक्रेहितंकुरु ॥ १० ॥ ततोववर्षभगवान्पांशुनापाकशासनः ॥ सप्ताहंपूरयामा-
सुःसेंद्रादेवास्तदास्मृताः ॥ ११ ॥ तंदृष्ट्वापांशुवर्षंचदेवदेवोमहेश्वरः ॥ करेणधारयामासलिंगंतीर्थवटंतथा ॥ १२ ॥
तस्मात्पुण्यतमंतीर्थंपाद्यंयत्रोदकंस्थितं ॥ तस्मिन्स्नातःसर्वतीर्थेस्नातोभवतिमानवः ॥ १३ ॥ यस्तत्रकुरुतेश्राद्धंवटालिं-
गस्यचांतरे ॥ तस्यप्रीताश्चपितरोदास्यंतिभुविदुर्लभं ॥ १४ ॥ पूरितंचततोदृष्ट्वाऋषयःसर्वएवते ॥ पांशुनासर्वगात्रा-
णिस्पृशंतिश्रद्धयान्विताः ॥ १५ ॥ तेपिनिर्धूतपापाश्चपांशुनामुनयोगताः ॥ पूज्यमानाःसुरगणैःप्रयाताब्रह्मणःपदं
॥ १६ ॥ येतुसिद्धामहात्मानस्तेलिंगंपूजयंतिच ॥ व्रजंतिपरमांसिद्धिंपुनरावृत्तिदुर्लभां ॥ १७ ॥ एवंज्ञात्वातदाब्रह्मा
लिंगंशैलमयंतदा ॥ आद्यंलिंगंतदास्थाप्यतस्योपरिविधायते ॥ १८ ॥ ततःकालेनमहतातेजसातस्यरंजितं ॥ तस्या-
पिस्पर्शनात्सिद्धाःपरंपदमवाप्नुयुः ॥ १९ ॥ ततोदेवैःपुनर्ब्रह्माविज्ञप्तोद्विजसत्तमाः ॥ एतेयांतिपरांसिद्धिंलिंगस्यदर्शना-

६८

त्परां ॥ २० ॥ तच्छ्रुत्वाभगवान्ब्रह्मादेवानांहितकाम्यया ॥ उपर्युपरिलिंगानिसप्ततत्रचकरह ॥ २१ ॥ ततोयेमुक्ति-
कामाश्चसिद्धाश्रमपरायणाः ॥ सेव्यपांशुंप्रयत्नेनप्रयाताःपरमंपदं ॥ २२ ॥ पांशवोपिकुरुक्षेत्रेवायुनासमुदीरिताः ॥
महादुष्कृतकर्माणःप्रयांतिपरमंपदं ॥ २३ ॥ अज्ञानाज्ज्ञानतोवापिस्त्रियावापुरुषस्यवा ॥ नश्यतेदुष्कृतंसर्वंस्थाणुतीर्थ-
प्रभावतः ॥ २४ ॥ लिंगस्यदर्शनान्मुक्तिःस्पर्शनाच्चवटस्यच ॥ तत्सन्निधौजलेस्नात्वाप्राप्नोत्यभिमतंफलं ॥ २५ ॥
पितृणांतर्पणंयस्तुजलेतस्मिन्करिष्यति ॥ बिंदौबिंदौतुतोयस्यह्यनंतफलभाग्भवेत् ॥ २६ ॥ यस्तुकृष्णतिलैःश्राद्धंस्था-
णोर्लिंगस्यपश्चिमे ॥ तर्पयेच्छ्रद्धयायुक्तःसप्रीणयेद्युगत्रयं ॥ २७ ॥ यावन्मन्वंतरंप्रोक्तंयावल्लिंगस्यचस्थितिः ॥ ता-
वत्प्रीताश्चपितरःपिबंतेजलमुत्तमं ॥ २८ ॥ कृतेयुगेसान्निहत्यंत्रेतायांवायुसंज्ञितं ॥ कलिद्वापरयोर्मध्येकूपेरुद्रह्रदंस्मृतं
॥ २९ ॥ चैत्रस्यकृष्णपक्षेचचतुर्दश्यांनरोत्तमः ॥ स्नात्वारुद्रकरेतीर्थेपरंपदमवाप्नुयात् ॥ ३० ॥ यस्तुवटस्थितोरात्रौ
ध्यायतेपरमेश्वरं ॥ स्थाणोर्वटप्रसादेनमनसाचिंतितंफलं ॥ ३१ ॥ इतिश्रीवामनपुराणे सरोमाहात्म्येपंचचत्वारिं-
शोऽध्यायः ॥ ४५ ॥ ॥ ॥ ॥ ॥ ॥ ॥
सनत्कुमारउवाच ॥ स्थाणोर्वटस्योत्तरतःशुक्रतीर्थंप्रकीर्त्तितं ॥ स्थाणोर्वटस्यपूर्वेणव्योमतीर्थंद्विजोत्तमाः ॥ १॥ स्थाणो-
र्वटंदक्षिणतोदक्षतीर्थमुदाहृतम ॥ स्थाणोःपश्चिमदिग्भागेनकुलस्यगणःस्मृतः ॥ २॥ एतानिपुण्यतीर्थानिमध्येस्थाणु-
रितिस्मृतः ॥ तस्यदर्शनमात्रेणप्राप्नोतिपरमंपदं ॥ ३ ॥ अष्टम्यांचचतुर्दश्यांयस्त्वेतानिपरिक्रमेत् ॥ उमाचलिंगरूपं-
णहरपार्श्वंनमुंचति ॥ ४ ॥ तस्यादर्शनमात्रेणसिद्धिंप्राप्नोतिमानवः ॥ वटस्यउत्तरेपार्श्वेतक्षकेणमहात्मना ॥ ५ ॥

१ प्राप्नुयादित्यनुवर्तनीयम् । २ शुक्रतीर्थमिति पाठा० । ३ सोमतीर्थमिति पा० । ४ स्थाणोर्वटं पश्चिमतः स्कन्द तीर्थंप्रतिष्ठितम ।

प्रतिष्ठितंमहालिंगंसर्वकामप्रदायकं ॥ वटस्यपूर्वदिग्भागेविश्वकर्मकृतंमहत् ॥ ६ ॥ लिंगंप्रत्यक्षमेवंदृष्ट्वासिद्धिमाप्नो-
तिमानवः ॥ तत्रैवलिंगरूपेणस्थितादेवीसरस्वती ॥ ७ ॥ प्रणम्यतांप्रयत्नेनबुद्धिंमेधांचविंदति ॥वटपार्श्वेस्थितंलिं-
गंब्रह्मणातत्प्रतिष्ठितं ॥ ८ ॥ दृष्ट्वावटेश्वरंदेवंप्रयातिपरमंपदं ॥ ततःस्थाणुवटंदृष्ट्वाकृत्वाचापिप्रदक्षिणं ॥ ९ ॥ प्रद-
क्षिणीकृतातेनसप्तद्वीपावसुंधरा ॥ स्थाणोःपश्चिमदिग्भागेनकुलीशोगणःस्मृतः ॥ १० ॥ तमभ्यर्च्यप्रयत्नेनसर्वपापैःप्र-
मुच्यते ॥ तस्यदक्षिणदिग्भागेतीर्थंरुद्राकरंस्मृतं ॥ ११ ॥ तस्मिन्स्नातःसर्वतीर्थेस्नातोभवतिमानवः ॥ तस्यचोत्तरदि-
ग्भागेरावणेनमहात्मना ॥ १२ ॥ प्रतिष्ठतंमहालिंगंगोकर्णंनामनामतः ॥ आषाढमासेयाकृष्णाभविष्यतिचतुर्दशी
॥ १३ ॥ तत्रस्नात्वासोपवासोमुक्तोभवतिकिल्बिषैः ॥ तत्रैवसिद्धिदंलिंगंमेघनादेनस्थापितं ॥ १४ ॥ संपूजयित्वाप्रय-
त्नेनलभतेमहतांश्रियं ॥ तस्यपश्चिमदिग्भागेकुंभकर्णेनपूजितं ॥ १५ ॥ ज्येष्ठेमासिसितेपक्षेअष्टम्यांश्रद्धयानरः ॥
सोपवासोवसेद्यस्तुतस्यपुण्यफलंशृणु ॥ १६ ॥ पदेपदेयज्ञफलंसप्राप्नोतिनसंशयः ॥ एतानिमुनिभिःसाध्यैरादित्यैर्व-
सुभिस्तथा ॥ १७ ॥ मरुद्भिर्वह्निभिश्चैवसेवितानिप्रयत्नतः ॥ अन्येपिप्राणिनःकेचित्प्रविष्टाःस्थाणुमुत्तमं ॥ १८ ॥ ते
सर्वेपापनिर्मुक्ताःप्रयांतिपरमंपदं ॥ अस्तियत्संनिधौलिंगंदेवदेवस्यशूलिनः ॥ १९ ॥ उमासालिंगरूपेणहरपार्श्वंनमुं-
चति ॥ यश्चपश्यतिगोकर्णंतस्यपुण्यफलंलभेत् ॥ २० ॥ कामतोऽकामतोवापियत्पापंतेनसंचितं ॥ तस्माद्विमुच्यतेपा-
पात्पूजयित्वाहरंशुचिः ॥ २१ ॥ कौमारब्रह्मचर्येणयत्पुण्यंप्राप्यतेनरैः ॥ तत्पुण्यंशंकरंतस्यामष्टम्यांयोऽर्चयेच्छिवं
॥ २२ ॥ यदीच्छेत्परमंरूपंसौभाग्यंधनसंपदः ॥ कुमारेश्वरमाहात्म्यात्सिद्ध्यतेनात्रसंशयः ॥ २३ ॥ तस्यचोत्तरदि-
ग्भागेलिंगंपूज्यविभीषणः ॥ अजरश्चामरश्चैवकल्पयित्वाबभूवह ॥ २४ ॥ आषाढस्यतुमासस्यशुक्लायाचाष्टमीभवे-

६१

त् ॥ तस्यांपूज्यःसोपवासश्चाम्रतत्वमवाप्नुयात् ॥ २५ ॥ पूर्णैपूर्णैरितंलिंगंतस्मिन्स्थानेद्विजोत्तम ॥ तंपूजयित्वायत्ने-
नसर्वकामानवाप्नुयात् ॥ २६ ॥ दूषणस्त्रिशिराश्चैवतत्रपूज्यमहेश्वरं ॥ यथाभिलषितान्कामानापतुस्तौमुदान्वितौ
॥ २७ ॥ चैत्रमासेसितेपक्षेयोनरस्तत्रपूजयेत् ॥ तस्यतौवरदौदेवौप्रयच्छेतेऽभिवांछितं ॥ २८ ॥ स्थाणोर्वटस्यपूर्वेणह-
स्तिपादेश्वरःशिवः ॥ तंदृष्ट्वामुच्यतेपापैरन्यजन्मनिसंभवैः ॥ २९ ॥ तस्यदक्षिणतोलिंगंहारीतस्यऋषेःस्थितं ॥ यत्प्र-
णम्यप्रयत्नेनसिद्धिंप्राप्नोतिमानवः ॥ ३० ॥ तस्यदक्षिणपार्श्वेतुवापीतस्यमहात्मनः ॥ लिंगंत्रैलोक्यविख्यातंसर्वपाप-
हरंशिवं ॥ ३१ ॥ कंकालरूपिणाचापिरुद्रेणसुमहात्मना ॥ प्रतिष्ठितंमहालिंगंसर्वपापप्रणाशनं ॥ ३२ ॥ भुक्तिदंमु-
क्तिदंप्रोक्तंसर्वकिल्बिषनाशनं ॥ लिंगस्यदर्शनादेवह्यग्निष्टोमफलंलभेत् ॥३३॥ तस्यपश्चिमदिग्भागेलिंगंसिद्धंप्रतिष्ठि-
तं ॥ सिद्धेश्वरंतुविख्यातंसर्वसिद्धिप्रदायकं ॥ ३४ ॥ तस्यदक्षिणदिग्भागेमृकंडेनमहात्मना ॥ तत्रप्रतिष्ठितंलिंगंदर्श-
नात्सिद्धिदायकम् ॥ ३५ ॥ तस्यंपूर्वेचदिग्भागेआदित्येनमहात्मना ॥ प्रतिष्ठितंलिंगवरंसर्वकिल्बिषनाशनं ॥ ३६ ॥
चित्रांगदस्तुगंधर्वोरंभाचाप्सरसांवरा ॥ परस्परंसानुरागौस्थाणुदर्शनकांक्षिणौ ॥ ३७ ॥ दृष्ट्वास्थाणुंपूजयित्वासानुरा-
गौपरस्परं ॥ आगम्यवरदंदेवंप्रतिष्ठाप्यमहेश्वरं ॥ ३८ ॥ चित्रांगदेश्वरंदृष्ट्वातथारंभेश्वरंद्विज ॥ सुभगोदर्शनीयश्चकु-
लेजन्मसमाप्नुयात् ॥ ३९ ॥ तस्यदक्षिणतोलिंगंवज्रिणास्थापितंपुरा ॥ तस्यप्रसादात्संप्राप्तंमनसाचिंतितंफलं
॥ ४० ॥ पराशरेणमुनिनातथैवाराध्यशंकरं ॥ प्राप्तंकवित्वंपरमंदर्शनाच्छंकरस्यच ॥ ४१ ॥ वेदव्यासेनमुनिनाआ-
राध्यपरमेश्वरं ॥ सर्वज्ञत्वंब्रह्मज्ञानंप्राप्तंदेवप्रसादतः ॥ ४२ ॥ स्थाणोःपश्चिमदिग्भागेलिंगंहिमवतेश्वरं ॥ प्रतिष्ठितं

१ स्वरेण पूजितामिति पाठा० । २ महति प्रतिष्ठिते कुले इत्यर्थः ।

त्समुत्तस्थौपुरुषोन्हस्वदर्शनः ॥ तमूचुर्ऋषयःसर्वेनिषीदत्वभ्रवानिति ॥ १९ ॥ तस्मान्निषादाउत्पन्नावेनकल्मपसंभवाः
॥ ततस्तेऋषयःसर्वेममंथुर्दक्षिणंकरं ॥ २० ॥ मथ्यमानेकरेतस्मिन्नुत्पन्नःपुरुषोऽपरः ॥ बृहच्छैलप्रतीकाशोदिव्यल-
क्षणलक्षितः ॥ २१ ॥ धनुर्बाणांकितकरश्चक्रध्वजसमन्वितः ॥ तमुत्पन्नंतदादृष्ट्वासर्वेदेवाःसवासवाः ॥ २२ ॥ अभ्य-
षिंचन्पृथिव्यं तंराजानंभूमिपालकं ॥ ततःसरंजयामासधर्मेणपृथिवींतदा ॥ २३ ॥ पित्राविरंजितातस्यतेनसापरिपा-
लिता ॥ ततोराजेतिशब्दोऽस्यपृथिव्यांरंजनादभूत् ॥ २४ ॥ सराज्यंप्राप्यवैन्यस्तुचिंतयामासपार्थिवः ॥ पितामम अ-
धर्मिष्ठोयज्ञविच्छित्तिकारकः ॥ २५ ॥ कथंतस्यक्रियाकार्यापरलोकसुखावहा ॥ इत्येवंचिंतयानस्यनारदोऽभ्याजगामह
॥ २६ ॥ तस्मैसचासनंदत्वाप्रणिपत्यचपृष्टवान् ॥ भगवन्सर्वलोकस्यजानासित्वंशुभाशुभं ॥ २७ ॥ पिताममदुरा-
चारोदेवब्राह्मणनिंदकः ॥ स्वधर्मरहितोविप्रपरलोकमवाप्नुयात् ॥ २८ ॥ ततोऽब्रवीन्नारदस्तंज्ञात्वादिव्येनचक्षुषा ॥
म्लेच्छमध्येसमुत्पन्नःक्षयकुष्ठसमन्वितः ॥ २९ ॥ तच्छ्रुत्वावचनंतस्यनारदस्यमहात्मनः ॥ चिंतयामासदुःखार्त्तःकथंका-
र्यंमयाभवेत् ॥ ३० ॥ इत्येवंचिंतयानस्यमतिर्जातामहात्मनः ॥ पुत्रःसकथ्यतेलोकेयःपितृंस्त्रायतेभयात् ॥ एवंसंचिं-
त्यसतदानारदंपृष्टवान्मुनिं ॥ ३१ ॥ नारदउवाच ॥ गच्छत्वंतस्यतंदेहंतीर्थेषुकुरुनिर्मलं ॥ यत्रस्नातोमहत्तीर्थंसरः
संनिहितंप्रति ॥ ३२ ॥ एतच्छ्रुत्वातुवचनंनारदस्यमहात्मनः ॥ चिंतयामासतंदेशंराजासचजगामह ॥ ३३ ॥ सग-
त्वाउत्तरंदेशंम्लेच्छमध्येददर्शह ॥ कुष्ठरोगेणतंवीक्ष्यक्षयेणचसमन्वितं ॥ ३४ ॥ ततःशोकेनमहतासंतप्तोवाक्यमब्रवीत् 
॥ हाम्लेच्छानौमिपुरुषंस्वगृहंचनयाम्यहं ॥ ३५ ॥ तत्राहमेनंनिरुजंकरिष्येयदिमन्यथ ॥ तथेतिसर्वतोम्लेच्छाःपुरुषंतं
दयापरं ॥ ३६ ॥ ऊचुःप्रणतसर्वांगायथाजानासितत्कुरु ॥ ततआनीयपुरुषान्शिबिकावाहनोचितान् ॥ ३७ ॥ द-

त्वाशुल्कंचद्विगुणंसुखेनानीयतांद्विजः ॥ ततःश्रुत्वातुवचनंतस्यराज्ञोदयावतः ॥ ३८ ॥ गृहीत्वाशिबिकांक्षिप्रंकुरुक्षेत्रे-
णयांतिते ॥ तत्रनीत्वास्थाणुतीर्थमवतीर्यततोगताः ॥ ३९ ॥ ततःसराजामध्याह्नेतंस्नापयितुमुद्यतः॥ ततोवायुरंतरिक्षेइदं
वचनमब्रवीत् ॥ ४० ॥ मातातसाहसंकार्षीस्तीर्थंरक्षप्रयत्नतः ॥ अयंपापेनघोरेणअतीवपरिवेष्टितः ॥ ४१ ॥ वेदनिं-
दामहत्पापंतस्यांतोनैवलभ्यते ॥ सोयंस्नातोमहत्तीर्थंनाशयिष्यतितत्क्षणात् ॥ ४२ ॥ एतद्वायोर्वचःश्रुत्वादुःखेनमह-
तान्वितः ॥ उवाचशोकसंतप्तस्तस्यदुःखेनदुःखितः ॥ एषघोरेणपापेनह्यतीवपरिवेष्टितः ॥ ४३ ॥ प्रायश्चित्तंकरिष्येऽ
हंयद्वदिष्यंतिदेवताः ॥ ततस्तादेवताःसर्वाइदंवचनमब्रुवन् ॥४४॥ स्नात्वास्नात्वाचतीर्थेत्वमभिषिंचस्ववारिणा ॥ आग-
सोलुम्पनंयावत्प्रतिकूलांसरस्वतीं ॥ ४५ ॥ स्नात्वामुक्तिमवाप्नोतिपुरुषःश्रद्धयान्वितः ॥ एषस्वपापणपरोदेवद्रूपण-
तत्परः ॥ ४६ ॥ ब्राह्मणैश्चपरित्यक्तोनैषशुद्ध्यतिकर्हिचित् ॥ तस्मादेनंसमुद्दिश्यस्नात्वातीर्थेषुभक्तितः ॥ ४७ ॥ अ-
भिषिंचस्वतोयेनततःपूतोभविष्यति ॥ इत्येतद्वचनंश्रुत्वाकृत्वातस्याश्रमंततः ॥ ४८ ॥ तीर्थयात्रांययौराजाउद्दिश्यज-
नकंस्वकं ॥ सतेष्वाप्लवनंकुर्वंस्तीर्थेषुचदिनेदिने ॥ ४९ ॥ अभ्यषिंचत्स्वपितरंतीर्थतोयेननित्यशः ॥ एतस्मिन्नेवकालेतु
सारमेयोजगामह ॥ ५० ॥ स्थाणोर्मठेकौलपतिर्देवद्रव्यस्यरक्षिता ॥ परिग्रहस्यद्रव्यस्यपरिपालयितासदा ॥ ५१ ॥
प्रियश्चसर्वलोकेषुदेवकार्यपरायणः ॥ तस्यैवंवर्त्तमानस्यधर्ममार्गेस्थितस्यच ॥ ५२ ॥ कालेनचलिताबुद्धिर्देवद्रव्य-
स्यनाशने ॥ तेनाधर्मेणयुक्तस्यपरलोकगतस्यच ॥ ५३ ॥ दृष्ट्वायमोऽब्रवीद्वाक्यंश्वयोनिंव्रजमाचिरं ॥ तद्वाक्यानंतरं
जातःश्वावैसौगंधिकेवने ॥ ५४ ॥ ततःकालेनमहताश्वयूथपरिवारितः ॥ परिभूतःसारमेयादुःखेनमहतावृतः ॥ ५५ ॥
त्यक्त्वाद्वैतवनंपुण्यंसांनिहत्यंययौसरः ॥ तस्मिन्प्रविष्टमात्रस्तुस्थाणोरेवप्रसादतः ॥ ५६ ॥ अतीवतृषयायुक्तःसरस्व-

त्यांममज्जह ॥ तत्रसंप्लुतदेहस्तुविमुक्तःसर्वकिल्बिषैः ॥ ५७ ॥ आहारलोभेनतदाप्रविवेशकुलंमठं ॥ प्रविशंतंतदादृष्ट्वा श्वानंभयसमन्वितं ॥ ५८ ॥ सतंपस्पर्शशनकैःस्थाणुतीर्थेममज्जह ॥ पतितःपूर्वतीर्थेषुविप्रुषैःपरिषेचितः ॥ ५९ ॥ शुनोऽस्यगात्रसंभूतैरब्बिंदुभिःस्मसिंचितः ॥ विरक्तदृष्टिःसशुनःक्षणेनचततःपरं ॥ ६० ॥ स्थाणुतीर्थस्यमाहात्म्यात्स-पुत्रेणचतारितः ॥ नियतस्तत्क्षणाज्जातोदिव्यदेहसमन्वितः ॥ प्रणिपत्यतदास्थाणुंस्तुतिंकर्तुंप्रचक्रमे ॥ ६१ ॥ वेन उवाच ॥ प्रपद्येदेवमीशानंत्वामजंचंद्रभूषणं ॥ महादेवंमहात्मानंविश्वस्यजगतःपतिं ॥ ६२ ॥ नमस्तेदेवदेवेशसर्व-शत्रुनिषूदन ॥ देवेशबलिविष्टंभिन्देवदैत्यैश्चपूजित ॥ ६३ ॥ विरूपाक्षसहस्राक्षत्र्यक्षयक्षेश्वरप्रिय ॥ सर्वतःपाणिपा-दस्त्वंसर्वतोऽक्षिशिरोमुख ॥ ६४ ॥ सर्वतःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठसि ॥ शंकुकर्णमहाकर्णकुंभकर्णार्णवालय ॥ ६५ ॥ गजेंद्रकर्णगोकर्णपाणिकर्णनमोस्तुते ॥ शतजिह्वशतावर्तशतोदरशतानन ॥ ६६ ॥ गायंतित्वांगायत्रि-णोह्यर्कंयंत्यर्कमर्किणः ॥ ब्रह्माणंत्वाशतक्रतोरूर्ध्वंत्वामिहमेनिरे ॥ ६७ ॥ मूर्तौहितेमहामूर्तेसमुद्रास्तुधरातथा ॥ देवताः सर्वएवात्रगोष्ठेगावइवासते ॥ ६८ ॥ शरीरेतवपश्यामिसोममग्निंजलेश्वरं ॥ नारायणंतथासूर्यंब्रह्माणंचबृहस्पतिं ॥ ६९ ॥ भगवन्कारणंकार्यंक्रियाकारणमेवतत् ॥ प्रभवःप्रलयश्चैवसदसच्चापिदैवतं ॥ ७० ॥ नमोभवायशर्वायवर-दायोग्ररूपिणे ॥ अंधकासुरहंत्रेचपशूनांपतयेनमः ॥ ७१ ॥ त्रिजटायत्रिशीर्षायत्रिशूलासक्तपाणये ॥ त्र्यंबकायत्रि-नेत्रायत्रिपुरघ्ननमोऽस्तुते ॥ ७२ ॥ नमोदंडायचंडायअंडायोत्पत्तिहेतवे ॥ डिंडिमासक्तहस्तायदंडिमुंडायतेनमः ॥ ७३ ॥ 
नमोर्ध्वकेशदंष्ट्रायशुष्कायविकृतायच ॥ धूम्रलोहितकृष्णायनीलग्रीवायतेनमः ॥ ७४ ॥ नमोस्त्वप्रतिरूपायविरूपायशि-

वायच ॥ सूर्यमालायसूर्यायस्वरूपध्वजमालिने ॥ ७५ ॥ नमोनानाभिरामायनमःपटुतरायच ॥ नमोगणेंद्रनाथायवृ-
षस्कंधायधन्विने ॥ ७६ ॥ संक्रंदनायचंडायपर्णधारपुटायच ॥ नमोहिरण्यवर्णायनमःकनकवर्चसे ॥ ७७ ॥ नमः
स्तुतायस्तुत्यायस्तुतिस्थायनमोस्तुते ॥ सर्वायसर्वभक्षायसर्वभूतशरीरिणे ॥ ७८ ॥ नमोहोत्रेचहंत्रेचसितोदग्रपताकि-
ने ॥ नमोनमायमंत्रायनमःकटकटायच ॥ ७९ ॥ नमोऽस्तुकृशनाशायशयितायोत्थितायच ॥ स्थितायधामसारायमुं-
डायकुटिलायच ॥८०॥ नमोनर्त्तनशीलायलयवादित्रशालिने ॥ नाट्योपहारलुब्धायमुखवादित्रशालिने ॥८१॥ नमो
ज्येष्ठायश्रेष्ठायबलातिबलघातिने ॥ कालनाशायकालायसंसारक्षयरूपिणे ॥८२॥ हिमवद्दुहितुर्भर्त्रेभैरवायनमोस्तुते ॥
उग्रायचनमोनित्यंनमोस्तुदशबाहवे ॥ ८३ ॥ चितिभस्मप्रियायैवकपालासक्तपाणये ॥ विभीषणायभीष्मायहिमव्रत-
धरायच ॥ ८४ ॥ नमोविकृतवक्रायवक्त्रप्रांतोग्रदष्टये[2] ॥ पक्वाममांसलुब्धायतुंबीवीणाप्रियायच ॥ ८५ ॥ नमोवृ-
षांकवृक्षायगोमितेनमतेनमः[3] ॥ कटंकटायभीमायनमःपचपचायच ॥ ८६ ॥ नमःसर्ववरिष्ठायवरायवरदायिने ॥ नमो
विरक्तवक्त्रायभावनायाक्षमालिने ॥ ८७ ॥ विभेदभेदभिन्नायछायायैतपनायच ॥ अघोरघोररूपायघोरघोरतराय
च ॥ ८८ ॥ नमःशिवायशांतायनमःशांततमायच ॥ बहुनेत्रकपालायएकमूर्त्तेनमोस्तुते ॥ ८९ ॥ नमःक्षुद्रायलुब्धा-
ययज्ञभागप्रियायच ॥ पंचालायसितांगायनमोयमनियामिने ॥ ९० ॥ नमश्चित्रोरुघंटायघंटाघंटनिघंटिने ॥ सह-
स्रशतघंटायघंटामालाविभूषिणे ॥ ९१ ॥ प्राणिसंघट्टघंटायनमःकिलकिलप्रिय ॥ हुंहुंकारायपारायहुंकारायप्रि-
यायच ॥ ९२ ॥ नमःसमसमेनित्यंगृहवृक्षनिकेतने ॥ गर्भमांसशृगालायतारकायतरायच ॥ ९३ ॥ नमोयज्ञायय-

१ नामातिनामाय—इति पा० । २ नमःपुतोग्रदष्टये इति पा० । ३ नमोवृषाङ्कदंष्ट्रा (ष्टा) यगोवृषाभिमते नमः इति पा० । ४ गंधाय इति पा० ।

जिनेहुतायप्रहुतायच ॥ यज्ञवाहायहव्यायतप्यायतपनायच ॥ ९४ ॥ नेमस्तुंडायतुंड्यायतुंडानांपतयेनमः ॥ अन्नदा-
यान्नपतयेनमोनानान्नभोजिने ॥ ९५ ॥ नमःसहस्रशीर्षायसहस्रचरणायच ॥ सहस्रोद्यतशूलायसहस्राभरणायच
॥ ९६ ॥ बालानुचरगोपूत्रेचबाललीलाविलासिने ॥ नमोबालायवृद्धायक्षुब्धायक्षोभणायच ॥९७॥ गंगालुलितकेशा-
यमुंजकेशायवैनमः ॥ नमःषट्कर्मतुष्टायत्रिकर्मनिरतायच ॥ ९८ ॥ नग्नप्राणायचंडायकृशायास्फोटनायच ॥ धर्मार्थ-
काममोक्षाणांकथ्यायकथनायच ॥ ९९ ॥ सांख्यायसांख्यमुख्यायसांख्ययोगमुखायच ॥ नमोविरथरथ्यायचतुष्प-
थरथायच ॥ १०० ॥ कृष्णाजिनोत्तरीयायहरिकेशनमोस्तुते ॥ त्र्यंबिकांबिकनाथायव्यक्ताव्यक्तायवेधसे ॥ १०१ ॥
कामकामदकामघ्नतृप्तातृप्तविचारिणे ॥ नमःसर्वद्यापघ्नकल्पसंध्याविचारिणे ॥ १०२ ॥ महासत्वमहाबाहोमहाबल
नमोस्तुते ॥ महामेघधरप्रख्यमहाकालमहाद्युते ॥ १०३ ॥ मेघावर्त्तयुगावर्त्तचंद्रार्कपतयेनमः ॥ त्वमन्नमन्नभोक्ताच
पक्वभुक्पावनोऽनलः ॥ १०४ ॥ जरायुजाश्चांडजाश्चस्वेदोद्भिज्जाश्चतेनमः ॥ त्वमेवदेवदेवेशभूतग्रामश्चतुर्विधः ॥१०५॥
स्रष्टाचराचरस्यास्यपाताहंतातथैवच ॥ त्वामाहुर्ब्रह्मविद्वांसःपरंब्रह्मविदांगतिः ॥ १०६ ॥ मनसःपरमंज्योतिर्ज्योतिस्त्वं
ज्योतिषामपि ॥ हंसोवृक्षोमधुकरःप्राहुस्त्वांब्रह्मवादिनः ॥ १०७ ॥ यज्ञेष्टकाःश्रेष्ठकश्चत्वामाहुर्मुनयस्तथा ॥ पठ्यसे
स्तुतिभिर्नित्यंवेदोपनिषदांगणैः ॥ १०८ ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्रावर्णावराश्चये ॥ त्वमेवमेघसंघाश्चविद्युतोऽ-
शनिगर्जितं ॥ १०९ ॥ संवत्सरस्त्वमृतवोमासोमासार्धमेवच ॥ युगानिमेषाःकाष्ठाश्चनक्षत्राणिग्रहाबलाः ॥ ११० ॥
वृक्षाणांककुभोसित्वंगिरीणांहिमवान्गिरिः ॥ व्याघ्रोमृगाणांपततांतार्क्ष्योऽनंतश्चभोगिनां ॥ १११ ॥ क्षीरोदोस्युद-

१ नमस्तुपयसेतुभ्यम्—इति पा० । २ नमःसर्वद्यापन्नकलामंध्येति पा० ।

धीनांचयंत्राणांधनुरेवच ॥ वज्रंप्रहरणानांचव्रतानांसत्यमेवच ॥ ११२ ॥ त्वमेवद्वेषइच्छाचरागोमोक्षःक्षमाक्षमे ॥ व्य-
वसायोधृतिर्लोभःकामक्रोधौजयाजयौ ॥ ११३ ॥ त्वंशरीत्वंगदीचापिखट्वांगीचशरासनी ॥ छेत्ताभेत्ताप्रहर्तासिमन्तानेता-
तासनातनः ॥ ११४ ॥ दशलक्षणसंयुक्तोधर्मोऽर्थःकामएवच ॥ समुद्राःसरितोगंगापर्वताश्चसरांसिच ॥ ११५ ॥ ल-
तावल्ल्यस्तृणौषध्यःपशवोमृगपक्षिणः ॥ पृथुकर्मगुणारंभःकालःपुष्पफलप्रदः ॥ ११६ ॥ आदिश्चांतश्चवेदान्,गाय-
त्रीप्रणवस्तथा ॥ लोहितोहरितोनीलःकृष्णःपीतःसितस्तथा ॥ ११७॥ कद्रुश्चकपिलश्चैवकपोतोमेचकस्तथा ॥ सवर्ण-
श्चाप्यवर्णश्चकर्ताहर्तात्वमेवहि ॥ ११८ ॥ त्वमिंद्रश्चयमश्चैववरुणोधनदोनिलः ॥ उपप्लवस्तत्रभानुःस्वर्भानुर्भानुरेवच
॥ ११९ ॥ शिष्याहौत्रंत्रिसौपर्णयजुषांशतरुद्रियं ॥ पवित्रंचपवित्राणांमंगलानांचमंगलं ॥ १२० ॥ तिंदुकोगिरिजो
वृक्षोमुद्गंचाखिलजीविनां ॥ प्राणाःसत्वंरजश्चैवतमश्चप्रतिपत्पतिः ॥ १२१॥ प्राणोऽपानःसमानश्चउदानोव्यानएवच ॥
उन्मेषश्चनिमेषश्चक्षुतंजृंभितमेवच ॥१२२॥लोहितांतर्गतोदृष्टिर्महावक्रोमहोदरः॥ शुचिरोमाहरिश्मश्रुरूर्ध्वकेशश्चलाच-
लः ॥१२३॥ गीतवादित्रनृत्यज्ञोगीतवादित्रकप्रियः ॥ मत्स्योजालोजलौकाश्चकालकेलिःकलाकलिः ॥१२४॥ अका-
लश्चविकालश्चदुष्कालःकालएवच ॥ मृत्युश्चमृत्युकर्ताचयज्ञोयज्ञभयंकरः ॥१२५॥ संवर्तकोऽतकश्चैवसंवर्तकबलाहकः॥
घंटोघंटीमहाघंटीचरीमालीचमातलिः ॥१२६॥ ब्रह्मकालयमाग्नीनांदंडीमुंडीत्रिमुंडधृक्॥ चतुर्युगश्चतुर्वेदश्चातुर्होत्रप्रवर्त-
कः ॥१२७॥ चातुराश्रम्यनेताचचातुर्वर्ण्यकरस्तथा ॥ नित्यलक्षप्रियोमूर्तोगणाध्यक्षोगणाधिपः ॥१२८॥ रक्तमाल्यां-
बरधरोगिरिकोगैरिकप्रियः ॥ शिल्पीचशिल्पिनांश्रेष्ठःसर्वशिल्पप्रवर्तकः ॥१२९॥ भगनेत्रांकुशःशंभुःपूष्णोदंतविना-
शनः ॥ स्वाहास्वधावषट्कारोनमस्कारोनमोनमः ॥ १३० ॥ गूढव्रतोगुह्यतपास्तारकस्तारकामयः ॥ धाताविधातासं-

धाताप्टथिव्याधरणेपरः ॥ १३१ ॥ ब्रह्मातपश्चसत्यंचव्रतचर्यमथार्जवं ॥ भूतात्माभूतकृद्भूतिर्भूतभव्यभवोद्भवः ॥ १३२ ॥
भूर्भुवःस्वरृतंचैवध्रुवोदंतोमहेश्वरः ॥ दीक्षितोदीक्षितःकांतोदुर्दांतोदांतसंभवः ॥ १३३ ॥ चंद्रावर्त्तोयुगावर्त्तःसंवर्त्तःसंप्र-
वर्त्तकः ॥ बिंदुःकामोह्यणुःस्थूलःकर्णिकारस्त्रजप्रियः ॥ १३४ ॥ नंदिमुखोभीममुखःसुमुखोदुर्मुखस्तथा ॥ हिरण्यग-
र्भःशकुनिर्महोरगपतिर्विराट् ॥ १३५ ॥ अधर्महामहादेवोदंडधारोगणोत्कटः ॥ गोनर्दोगोप्रतारश्चगोवृषेश्वरवाहनः
॥ १३६ ॥ त्रैलोक्यगोप्तागोविंदोगोमार्गोमार्गएवच ॥ स्थिरःश्रेष्ठश्चस्थाणुश्चविकोपःकोपएवच ॥ १३७ ॥ दुर्वार-
णोदुर्विषहोदुःसहोदुरतिक्रमः ॥ दुर्द्धर्षोदुष्प्रकाशश्चदुर्दर्शोदुर्जयोजयः ॥ १३८ ॥ शशांकानलशीतोष्णक्षुत्तृषाश्चजरा-
मयाः ॥ आधयोव्याधयश्चैवआधिहाव्याधिनाशनः ॥ १३९ ॥ समूहश्चासमूहश्चहंतादेवःसनातनः ॥ शिखंडीपुंडरी-
काक्षःपुंडरीकवनालयः ॥ १४० ॥ त्र्यंबकोदंडधारश्चउग्रदंष्ट्रःकुलांतकः ॥ विषाग्र्यंयःसुरश्रेष्ठसोमपास्त्वंमरुत्पते
॥ १४१ ॥ अमृताशीजगन्नाथोदेवदेवगणेश्वरः ॥ विषाग्निपाःसोमपाश्चक्षीरपाआज्यपास्तथा ॥ १४२ ॥ मधुश्च्युता-
नांमधुपाब्रह्मवांस्त्वंघृतच्युतः ॥ सर्वलोकस्यभोक्तात्वंसर्वलोकपितामहः ॥ १४३ ॥ हिरण्यरेताःपुरुषस्त्वमेकस्त्वं
स्त्रीपुमांस्त्वंहिनपुंसकंच ॥ बालोयुवास्थविरोजीर्णदंष्ट्रस्त्वन्तोगिरिर्विश्वकृद्विश्वकर्त्ता ॥ १४४ ॥ त्वंवैधाताविश्वकृतोव-
रेण्यस्त्वांपूजयंतिप्रणताःसदैव ॥ चंद्रादित्यौचक्षुषीतेभवानीत्वमेवचाग्निःप्रपितामहश्च ॥ सरस्वतीवाग्बलमूलमाताअ-
होरात्रेनिमिषोन्मेषकर्त्ता ॥ १४५ ॥ नब्रह्मानचगोविंदःपौराणाऋषयोनते ॥ माहात्म्यंवेदितुंशक्तायाथातथ्येनशंकर
॥ १४६ ॥ पुंसांशतसहस्राणियत्समावृत्यतिष्ठति ॥ महतस्तमसःपारेगोप्तामंताभवान्सदा ॥ १४७ ॥ यंविनिद्रा

१ विक्रोशःक्रोशएवचेति पा० । २ हिदेव इति पा० । ३ आराध्य त्वां सरस्वतीं वाचं लभन्ते इति पा० ।

जितश्वासाःसत्वस्थाःसंजितेंद्रियाः ॥ ज्योतिःपश्यंतियुंजानास्तस्मैयोगात्मनेनमः ॥ १४८ ॥ यामूर्त्तयश्चसूक्ष्मास्ते नशक्यायानिदर्शितुं ॥ ताभिर्मांसततंरक्षपितापुत्रमिवौरसं ॥ १४९ ॥ रक्षमांरक्षणीयोयंतवानघनमोस्तुते ॥ भक्तानुकंपीभगवान्भक्तश्चाहंसदात्वयि ॥ १५० ॥ जटिनेदंडिनेनित्यंलंबोदरतथाकृतो ॥ दीर्घजिह्वमहादंष्ट्रतस्मैरुद्रात्मने नमः ॥ १५१ ॥ यस्यकेशेषुजीमूतानद्यःसर्वांगसंधिषु ॥ कुक्षौसमुद्राश्चत्वारस्तस्मैतोयात्मनेनमः ॥ १५२ ॥ संभक्ष्य सर्वभूतानियुगांतेपर्युपस्थिते ॥ यःशेतेजलमध्यस्थस्तंप्रपद्येऽबुशायिनं ॥ १५३ ॥ प्रविश्यवदनंराहोर्यःसोमंपिबतेनिशि ॥ ग्रसत्यर्कंचस्वर्भानूरक्षितस्तेचतेजसा ॥ १५४ ॥ येचानुपतितागर्भारुद्रतोकस्यरक्षिणः ॥ नमस्तेस्तुस्वधास्वाहाप्राप्नुवंतिमुदंतुते ॥ १५५ ॥ येऽगुष्ठमात्राःपुरुषादेहस्थावरदेहिनां ॥ रक्षंतुदेहिनांनित्यंतेममाप्याययंतुवै ॥ १५६ ॥ येनदीषुसमुद्रेषुपर्वतेषुगुहासुच ॥ वृक्षमूलेषुगोष्ठेषुकांतारगहनेषुच ॥ १५७ ॥ चतुष्पथेषुरथ्यासुचत्वरेषुसभासुच ॥ हस्त्यश्वरथशालासुजीर्णोद्यानालयेषुच ॥ १५८ ॥ येचपंचसुभूतेषुदिशासुविदिशासुच ॥ चंद्रार्कयोर्मध्यगतायेचचंद्रार्करश्मिषु ॥ १५९ ॥ रसातलगतायेचयेचतस्मात्परंगताः ॥ नमस्तेभ्योनमस्तेभ्योनमस्तेभ्यश्चनित्यशः ॥ १६० ॥ येषांनविद्यतेसंख्याप्रमाणंरूपमेवच ॥ असंख्यायेगणारुद्रानमस्तेभ्योऽस्तुनित्यशः ॥ १६१ ॥ प्रसीदममभद्रंतेतवभावगतस्यच ॥ त्वयिमेहृदयंदेवत्वयिबुद्धिर्मतिस्त्वयि ॥ स्तुत्वैवंसमहादेवंविररामद्विजोत्तमः ॥ १६२ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ ॥ ॥ ॥

सनत्कुमारउवाच ॥ अथैनमब्रवीद्देवस्त्रैलोक्याधिपतिर्भवः ॥ आश्वासनकरंचास्यवाक्यविद्वाक्यमुत्तमं ॥ १ ॥ शिवउवा-

१ लंबोदरशरीरिणे ॥ कमंडलुनिषंगायेति पा० । २ रुद्रगंधस्यरक्षिणे इति पा० ।

च ॥ अहोतुष्टोस्मितेराजन्स्तवेनानेनसुव्रत ॥ बहुनात्रकिमुक्तेनमत्समीपेवसिष्यसि ॥ २ ॥ उषित्वासुचिरंकालंममगा-
त्रोद्भवःपुनः ॥ असुरोह्यंधकोनामभविष्यसिसुरांतकृत् ॥ ३ ॥ हिरण्याक्षगृहेजन्मप्राप्यवृद्धिंगमिष्यसि ॥ पूर्वाधर्मेण
घोरेणवेदनिंदाकृतेनच ॥ ४ ॥ साभिलाषोजगन्मातुर्भविष्यसियदातदा ॥ देहंशूलेनहत्वाऽहंपातयिष्येसमार्बुदं ॥ ५ ॥
तत्रापिकल्मषंत्यक्त्वाद्दक्ष्ञामांभक्तितःपुनः[1] ॥ ख्यातोगणाधिपोभूत्वानाम्नाभृंगिरिटिःस्मृतः ॥ ६ ॥ मत्संनिधानेस्थि-
त्वात्वंततःसिद्धिंगमिष्यसि ॥ वेनप्रोक्तंस्तवमिमंकीर्तयेद्यःशृणोतिच ॥ ७ ॥ नाशुभंप्राप्नुयात्किंचिद्दीर्घमायुरवाप्नुयात् ॥
यथासर्वेषुदेवेषुविशिष्टोभगवान्शिवः ॥ ८ ॥ तथास्तवोवरिष्ठोयंस्तवानांवेननिर्मितः ॥ यशोराज्यसुखैश्वर्यधनमानार्थ-
कांक्षिभिः ॥ ९ ॥ श्रोतव्योभक्तिमास्थायविद्याकामैश्वयत्नतः ॥ व्याधितोदुःखितोदीनश्चौरराजभयान्वितः ॥ १० ॥
राजकार्यविमुक्तोवामुच्यतेमहतोभयात् ॥ अनेनैवतुदेहेनवर्णानांश्रेष्ठतांव्रजेत् ॥ ११ ॥ तेजसायशसाचैवयुक्तोभवतिनि-
र्मलः ॥ नराक्षसाःपिशाचावानभूतानविनायकाः ॥ १२ ॥ विघ्नंकुर्युर्गृहेतत्रयत्रायंपठ्यतेस्तवः ॥ शृणुयाद्यास्तवंनारी
अनुज्ञांप्राप्यभर्तृतः ॥ १३ ॥ मातृपक्षेपितुःपक्षेपूज्याभवतिदेववत् ॥ शृणुयाद्यःस्तवंदिव्यंकीर्तयेद्वासमाहितः ॥ १४ ॥
तस्यसर्वाणिकार्याणिसिद्धिंगच्छंतिनित्यशः ॥ मनसाचिंतितंयच्चयच्चवाचानुकीर्तितं ॥ १५ ॥ सर्वंसंपद्यतेतस्यस्तवन-
स्यानुकीर्तनात् ॥ मनसाकर्मणावाचाकृतमेनोविनश्यति ॥ वरंवरयभद्रंतेयत्त्वयामनसेप्सितं ॥ १६ ॥ वेनउवाच ॥
अस्यलिंगस्यमाहात्म्यात्तथालिंगस्यदर्शनात् ॥ मुक्तोहंपातकैःसर्वैस्तवदर्शनतःकिल ॥ १७ ॥ यदितुष्टोसिदेवेशय-
दिदेयोवरोमम ॥ देवस्वभक्षणाज्जातंश्वयोनौतवसेवकं ॥ १८ ॥ एतस्यापिप्रसादंत्वंकर्तुमर्हसिशंकर ॥ एतस्यापिभ-

[1] तत्रापि कल्पं संभूत्वा स्तुत्वा मां भक्तितः पुनः ॥ इति पा० ।

यान्मध्येसरसोहंनिमज्जितः ॥ १९ ॥ देवैर्निवारितःपूर्वंतीर्थेस्मिन्स्नानकारणात् ॥ अयंकृतोपकारश्चएतदर्थंवृणोम्यहं
॥ २० ॥ तस्यैतद्वचनंश्रुत्वातुष्टःप्रोवाचशंकरः ॥ एषोऽपिपापनिर्मुक्तोभविष्यतिनसंशयः ॥२१॥ प्रसादान्मेमहाबाहोशि
वलोकंगमिष्यति ॥ तथास्तवमिमंश्रुत्वामुच्यतेसर्वपातकैः ॥ २२ ॥ कुरुक्षेत्रस्यमाहात्म्यंसरसोऽस्यमहीपते ॥ मम
लिंगस्यचोत्पत्तिंश्रुत्वापापैःप्रमुच्यते ॥ २३ ॥ सनत्कुमारउवाच ॥ इत्येवमुक्त्वाभगवान्सर्वलोकनमस्कृतः ॥ पश्यतां
सर्वलोकानांतत्रैवांतरधीयत ॥ २४ ॥ सचश्वातत्क्षणादेवस्मृत्वाजन्मपुरातनं ॥ दिव्यमूर्तिधरोभूत्वातंराजानमुपस्थितः
॥ २५ ॥ कृत्वास्नानंततोवैन्यःपितृदर्शनलालसः ॥ स्थाणुतीर्थेकुटींशून्यांदृष्ट्वाशोकसमन्वितः ॥ २६ ॥ दृष्ट्वाब्रवीत्ततोवा-
क्यंहर्षेणमहतान्वितः ॥ सत्पुत्रेणत्वयावत्सत्रातोहंनरकार्णवात् ॥ २७ ॥ त्वयाभिषिंचितोनित्यंतीर्थस्थपुलिनेस्थितः ॥
अस्यसाधोःप्रसादेनस्थाणोर्देवस्यदर्शनात्॥२८॥मुक्तपापश्चस्वर्लोकंयास्येयत्रशिवःस्थितः ॥इत्येवमुक्त्वाराजानंप्रति
ष्ठाप्यमहेश्वरं ॥ २९ ॥ स्थाणुतीर्थेययौसिद्धिंतेनपुत्रेणतारितः ॥ सचश्वापरमांसिद्धिंस्थाणुतीर्थप्रभावतः ॥ ३० ॥ वि-
मुक्तःकलुषैःसर्वैर्जगामभवमंदिरं ॥ राजापितृऋणैर्मुक्तःपरिपाल्यवसुंधरां ॥ ३१ ॥ पुत्रानुत्पाद्यधर्मेणकृत्वायज्ञांनिरर्ग-
लं ॥ दत्वाकामांश्चविप्रेभ्योभुक्त्वाभोगान्पृथग्विधान् ॥ ३२ ॥ सुहृदोद्रविणैर्युक्तान्कामैःसंतर्प्यचस्त्रियः ॥ अभिषि-
च्यसुतंराज्येकुरुक्षेत्रंययौनृपः ॥ ३३ ॥ तत्रतप्त्वातपोघोरंपूजयित्वाचशंकरं ॥ आत्मेच्छयातनुंत्यक्त्वाप्रयातःपरमंपदं
॥ ३४ ॥ एतत्प्रभावंतीर्थस्यस्थाणोर्यःशृणुयान्नरः ॥ सर्वपापविनिर्मुक्तःप्रयातिपरमांगतिं ॥ ३५ ॥ इतिश्रीवामनपुराणे
सरोमाहात्म्येअष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ ॥ ॥ ॥
मार्कंडेयउवाच ॥ चतुर्मुखानामुत्पत्तिंविस्तरेणममानघ ॥ पृथ्वीश्वराणांचतथाश्रोतुमिच्छाप्रवर्त्तते ॥ १ ॥ सन-

त्कुमारउवाच ॥ शृणुसर्वमशेषेणकथयिष्यामितेनघ ॥ ब्रह्मणःस्त्रष्टुकामस्ययद्वृत्तंपद्मजन्मनः ॥ २ ॥ उत्पन्नएवभगवान्
ब्रह्मालोकपितामहः ॥ ससर्जसर्वभूतानिस्थावराणिचराणिच ॥ ३ ॥ पुनश्चिंतयतःसृष्टिंयज्ञेकन्यामनोरमा ॥ नीलो-
त्पलदलश्यामातनुमध्यासुलोचना ॥ ४ ॥ तांदृष्ट्वाभिमतांब्रह्मामैथुनायाजुहावतां ॥ तेनपापेनमहताशिरोशीर्यंतवेधसः
॥ ५ ॥ तेनशीर्णेनसययौतीर्थेत्रैलोक्यविश्रुतं ॥ सान्निहत्यंसरःपुण्यंसर्वपापक्षयावहं ॥ ६ ॥ तत्रपुण्यस्थाणुतीर्थेऋषिपि-
सिद्धनिषेविते ॥ सरस्वत्युत्तरेतीरेप्रतिष्ठाप्यचतुर्मुखः ॥ ७ ॥ आराधयामासतदाधूपैर्गंधैर्मनोरमैः ॥ उपहारैस्तथाद्दद्यै
रुद्रसूक्तैर्दिनेदिने ॥८॥ तस्यैवंभक्तियुक्तस्यशिवपूजारतस्यच ॥ स्वयमेवाजगामाथभगवान्नीललोहितः ॥ ९ ॥ तमाग-
तंशिवंदृष्ट्वाब्रह्मालोकपितामहः ॥ प्रणम्यशिरसाभूमौस्तुतिंतस्यचकारह ॥१०॥ ब्रह्मोवाच ॥ नमस्तेस्तुमहादेवभूतभ-
व्यभवाश्रय ॥ नमस्तेस्तुतिनित्यायनमस्त्रैलोक्यपालिने ॥ ११ ॥ नमःपवित्रदेहायसर्वकल्मषनाशिने ॥ चराचरगुरो
गुह्यंगुह्यानांचप्रकाशकृत् ॥ १२ ॥ रोगानयांतिभिषजैःसर्वरोगविनाशन ॥ गौरवाजिनसंवीतवीतशोकनमोस्तुते
॥ १३ ॥ वारिकल्लोलसंक्षुब्धमहाबुद्धिविघट्टन ॥ त्वन्नामजापिनोदेवनभवंतिभवाश्रयाः ॥ १४ ॥ नमस्तेनित्यनित्या-
यनमस्त्रैलोक्यनाशिने ॥ शंकरायाप्रमेयायव्याधीनांशमनायच ॥ १५ ॥ परायापरिमेयायसर्वभूतप्रियायच ॥ योगेश्व-
रायदेवायसर्वपापक्षयायच ॥ १६ ॥ नमःस्थाण्वेप्रसिद्धायासिद्धबंदिस्तुतायच ॥ भूतसंसारदुर्गायविश्वरूपायतेनमः
॥ १७ ॥ फणींद्रोक्तमहिम्नेतेफणींद्रांगदधारिणे ॥ फणींद्रवरहारायभास्करायनमोनमः ॥ १८ ॥ एवंस्तुतोमहादेवो
ब्रह्माणंप्राहशंकरः ॥ नचमन्युस्त्वयाकार्योभाविन्यर्थेकदाचन ॥ १९ ॥ पुरावाराहकल्पेतेयन्मयापकृतंशिरः ॥ चतुर्मु-
खंचतदभून्नकदाचिन्नशिष्यति ॥ २० ॥ अस्मिन्सन्निहितेतीर्थेलिंगानिममभक्तितः ॥ प्रतिष्ठाप्यविमुक्तस्त्वंसर्वपापैर्भ-

विष्यसि ॥ २१ ॥ सृष्टिकामेनचत्वयायतोहंप्रेरितःकिल ॥ तेनाहंत्वंतथेत्युक्त्वाभूतेभ्योदर्शनंगतः ॥ २२ ॥ दीर्घकालंतपस्तप्त्वामग्नःसंनिहितेस्थितः ॥ सुमहांततःकालंत्वंप्रतीक्षांममाकरोः ॥ २३ ॥ स्रष्टाहंसर्वभूतानांमनसाकल्पितस्त्वया ॥ सोब्रवीत्त्वांतदादृष्ट्वामांमग्नंचततोंभसि ॥ २४ ॥ यदिनैवाग्रजस्त्वेभ्यस्ततःस्रक्ष्यामहेप्रजाः ॥ त्वयैवोक्तश्चनैवास्तित्वदन्यःपुरुषोग्रजः ॥ २५ ॥ स्थाणुरेषजलेमग्नोविवशःकुरुमद्वितं ॥ ससर्वभूतानसृजद्दक्षादींश्चप्रजापतीन् ॥ २६ ॥ यैरिमंप्राकरोत्सर्वंभूतग्रामंचतुर्विधं ॥ ताःसृष्टमात्राःक्षुधिताःप्रजाःसर्वाःप्रजापतिं ॥ २७ ॥ जिघत्सवस्तदाब्रह्मन्सहसाप्राद्रवंस्तदा ॥ संभक्ष्यमाणस्त्राणार्थीपितामहमुपाद्रवत् ॥ २८ ॥ अथासांचमहावृत्तिःप्रजानांसंविधीयतां ॥ दत्तंताभ्यस्त्वयाह्यन्नंस्थावराणांमहौषधीः ॥ २९ ॥ जंगमानिचभूतानिदुर्बलानिबलीयसां ॥ विहितान्नाःप्रजाःसर्वाःपुनर्जग्मुर्यथागतं ॥ ३० ॥ ततोववृधिरेसर्वाःप्रीतियुक्ताःपरस्परं ॥ भूतग्रामेविवृद्धेतुतुष्टेलोकगुरौत्वयि ॥ ३१ ॥ समुत्तिष्ठन्जलात्तस्मात्प्रजाःसंदृष्टवानहं ॥ ततोऽहंताःप्रजादृष्ट्वाविहिताःस्वेनतेजसा ॥ ३२ ॥ क्रोधेनमहतायुक्तोलिंगमुत्पाट्यचाक्षिपम् ॥ तत्क्षिप्तंसरसोमध्येऊर्ध्वमेवयदास्थितं ॥ ३३ ॥ तदाप्रभृतिलोकेऽस्मिन्स्थाणुरित्येषविश्रुतः ॥ सकृद्दर्शनमात्रेणविमुक्तःसर्वकिल्बिषैः ॥ ३४ ॥ प्रयातिपरमंमोक्षंयस्मान्नावर्ततेपुनः ॥ यश्चेहतीर्थेनिवसेत्कृष्णाष्टम्यांसमाहितः ॥ ३५ ॥ समुक्तःपातकैःसर्वैरगम्यागमनोद्भवैः ॥ इत्युक्त्वाभगवान्देवस्तत्रैवांतरधीयत ॥ ३६ ॥ ब्रह्माविशुद्धपापस्तुपूज्यदेवंचतुर्मुखं ॥ लिंगानिदेवदेवस्यससृजेशरमध्यतः ॥ ३७ ॥ आद्यंब्रह्मसरःपुण्यंहरेःपार्श्वेप्रतिष्ठितं ॥ द्वितीयंब्रह्मसदनंस्वकीयेह्याश्रमेकृतम् ॥ ३८ ॥ तस्यैवपूर्वदिग्भागेतृतीयंचप्रतिष्ठितम् ॥ चतुर्थंब्रह्मणोलिंगंसरस्वत्यास्तटेस्थितं ॥ ३९ ॥ कृतमेतानितीर्थानिपुण्यानिपावनानिच ॥ येपश्यंतिनिशाहारास्तेयांतिपरमांगतिं

॥ ४० ॥ कृतेयुगेहरेःपार्श्वेत्रेतायांब्रह्मणाश्रमे ॥ द्वापरेतस्यपूर्वेणसरस्वत्यास्तटेकलौ ॥ ४१ ॥ एतानिपूजयित्वातुदृ-
ष्ट्वाभक्तिसमन्विताः ॥ विमुक्ताःकलुषैःसर्वैःप्रयांतिपरमांगतिं ॥ ४२ ॥ सृष्टिकालेभगवतापूजितस्तुमहेश्वरः ॥ सरस्व-
त्युत्तरेतीरेनाम्नाख्यातश्चतुर्मुखः ॥ ४३ ॥ तंपूजयित्वायत्नेनसोपवासोजितेंद्रियः ॥ अगम्यागमनैर्दोषैर्मुच्यतेनात्रसंशयः
॥ ४४ ॥ ततस्त्रेतायुगेप्राप्तेस्थाणोर्देवसमीपतः ॥ पूजितंसुमहल्लिंगंतत्रापिचचतुर्मुखं ॥ ४५ ॥ तंप्रणम्यश्रद्दधानोमु-
च्यतेसर्वकिल्बिषैः ॥ लीलाशंकरसंभूतंतथावैभानुशंकरं ॥ ४६ ॥ तथैवद्वापरेप्राप्तेस्वाश्रमेप्राप्यशंकरं ॥ विमुक्तोरा-
जसैर्भावैर्वर्णसंकरसंभवैः ॥ ४७ ॥ ततःकृष्णचतुर्दश्यांपूजयित्वातुमानवः ॥ विमुक्तःपातकैःसर्वैरभोज्यस्यान्नसंभवैः
॥ ४८ ॥ कलिकालेतुसंप्राप्तेवसिष्ठाश्रममास्थितः ॥ चतुर्मुखंस्थापयित्वाययौसिद्धिमनुत्तमां ॥ ४९ ॥ तत्रापियेनि-
राहाराःश्रद्दधानाजितेंद्रियाः ॥ पूजयंतिमहादेवंतेयांतिपरमंपदं ॥ ५० ॥ इत्येतत्स्थाणुतीर्थस्यमाहात्म्यंकीर्त्तितंतव
॥ तच्छ्रुत्वासर्वपापेभ्योमुक्तोभवतिमानवः ॥ ५१ ॥ इतिश्रीवामनपुराणेसरोमाहात्म्येएकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥
सनत्कुमारउवाच ॥ ततोऽब्रवीद्देववरस्तुतीर्थंयस्माद्भवानेकतयाप्रयाति ॥ पृथूदकेत्येवचनामतुभ्यंभविष्यतेतीर्थवरःपृ-
थिव्याः ॥ १ ॥ एवंपृथूदकंदेवाःपुण्यंपापभयापहं ॥ तंगच्छध्वंमहातीर्थंयावित्ष्यंतोनिबोधथ ॥ २ ॥ यदामृगशिरो
ऋक्षेशशिसूर्यौबृहस्पतिः ॥ तिष्ठंतिसातिथिःपूर्वालक्ष्यापरिगीयते ॥ ३ ॥ तद्गच्छध्वंसुरश्रेष्ठायत्रप्राचीसरस्वती ॥ पितॄ-
नाराधयध्वंचतत्रश्राद्धेनभक्तितः ॥ ४ ॥ ततोमुरारिवचनंदृष्ट्वादेवाःसवासवाः ॥ समाजग्मुःकुरुक्षेत्रेपुण्यंतीर्थंपृथूदकं
॥ ५ ॥ तत्रस्नात्वासुराःसर्वेबृहस्पतिमचोदयन् ॥ विवस्वन्भगवन्नृष्यमिदंमृगशिरःकुरु ॥ ६ ॥ पुण्यांतिथिंपापहरां

१ ब्रह्मणा युक्ते आश्रमे इत्यर्थः ।

तवकालोऽयमागतः ॥ प्रवर्त्ततेरविस्तत्रचंद्रमापिविशत्यसौ ॥ ७ ॥ तवायत्तंगुरोकार्यंसुराणांतत्कुरुष्ववः ॥ इत्येवमु-
क्तोदेवैस्तुदेवाचार्योऽब्रवीदिदं ॥ ८ ॥ यदिवर्षाधिपोऽहंस्यांततोयास्यामिदेवताः ॥ बाढमूचुःसुराःसर्वेततोऽसौप्राक्रमन्मृ-
गं ॥ ९ ॥ आषाढेमासिमार्गर्क्षेचंद्रक्षयतिथिर्हिया ॥ तस्यांपुरंदरःप्रीतःपिंडंपितृषुभक्तितः ॥ १० ॥ प्रादात्तिलैर्मधू-
न्मिश्रंहविष्यान्नंकुरुष्वच ॥ ततःप्रीतास्तुपितरस्तांप्राहुस्तनयांनिजां ॥ ११ ॥ मेनांदेवाश्चशैलायहिमयुक्तायवैददुः ॥
तांमेनांहिमवाँल्लब्ध्वाप्रसादाद्दैवतेष्वथ ॥ प्रीतिमानभवच्चासौरेमेसतुयथेच्छया ॥ १२ ॥ ततोहिमाद्रिःपितृकन्ययास-
मंसंतर्पयन्वैविषयान्यथेष्टं ॥ अजीजनत्सातनयाश्चतिस्रोरूपातियुक्ताःसुरयोपितस्तु ॥ १३ ॥ इतिश्रीवामनपुराणे
उमासंभवेकुरुक्षेत्रमाहात्म्यंनामपञ्चाशत्तमोऽध्यायः ॥ ५० ॥ ॥ ॥ ॥
पुलस्त्यउवाच ॥ मेनायांकन्यकास्तिस्रोजातारूपगुणान्विताः ॥ सुनाभइतिचख्यातश्चतुर्थस्तनयोभवत् ॥ १ ॥ रक्तां-
गीरक्तनेत्राचरक्तांबरविभूषिता ॥ रागिणीनामसंजाताज्येष्ठामेनासुतामुने ॥ २ ॥ शुभांगीपद्मपत्राक्षीनीलकुंचितमू-
र्धजा ॥ श्वेतमाल्यांबरधराकुटिलानामचापरा ॥ ३ ॥ नीलांजनचयप्रख्यानीलेंदीवरलोचना ॥ रूपेणानुपमाकाली
जघन्यामेनकासुता ॥ ४ ॥ जातास्ताःकन्यकास्तिस्रःषडब्दात्पुरतोमुने ॥ कर्त्तुंतपःप्रयाताश्चदेवास्तादद्दृशुःशुभाः
॥ ५ ॥ ततोदिवाकरैःसर्वैर्वसुभिश्चतपस्विनी ॥ कुटिलाब्रह्मलोकंतुनीताशशिकरप्रभा ॥ ६ ॥ अथोचुर्देवताःसर्वाः
किंत्वियंजनयिष्यते ॥ पुत्रंमहिषहंतारंब्रह्मन्व्याख्यातुमर्हसि ॥ ७ ॥ ततोब्रवीत्सुरपतिर्नेयंशक्तातपस्विनी ॥ शार्वं-
धारयितुंतेजोवराकीमुच्यतांत्वियं ॥ ८ ॥ ततस्तुकुटिलाक्रुद्धाब्रह्माणंप्राहनारद ॥ तथायतिष्येभगवन्यथाशार्वंसुदुर्द्धरं

१ तिलाविमिश्रञ्च । इति पा० ।

॥ ९ ॥ धारयिष्याम्यहंतेजस्तथैवशृणुसत्तम ॥ तपसाहंसुतस्तेनसमाराध्यजनार्द्दनं ॥ १० ॥ यथाहरस्यमूर्धानंनम-
यिष्येपितामह ॥ तथादेवकरिष्यामिसत्यंसत्यंमयोदितं ॥ ११ ॥ पुलस्त्यउवाच ॥ ततःपितामहःक्रुद्धःकुटिलांप्राहदा-
रुणां ॥ भगवानादिकृद्ब्रह्मासर्वेशोपिमहामुने ॥ १२ ॥ ब्रह्मोवाच ॥ यस्मान्मद्वचनंपापेनक्षांतंकुटिलेत्वया ॥ तस्मा-
न्मच्छापनिर्दग्धासर्वास्वापोभविष्यसि ॥ १३ ॥ इत्येवंब्रह्मणाशप्ताहिमवद्दुहितामुने ॥ आपोमयाब्रह्मलोकंप्लावयामा-
सवेगिनी ॥ १४ ॥ तामुद्वृत्तजलांदृष्ट्वाप्रबबंधपितामहः ॥ ऋक्सामाथर्वयजुर्भिर्बंधनैःसर्वतोदृढं ॥ १५ ॥ साबद्धासं-
स्थिताब्रह्मंस्तत्रैवगिरिकन्यका ॥ आपोमयाप्लावयंतीब्रह्मणोविमलालयं ॥ १६ ॥ यासारागवतीनामसापिनीतासुरै-
र्दिवं ॥ ब्रह्मणेतांनिवेद्यैवतामप्याहप्रजापतिः ॥ १७ ॥ सापिक्रुद्धाऽब्रवीच्चैनंतथातप्स्येमहत्तपः ॥ यथामन्नामसंयुक्तो
महिषघ्नोभविष्यति ॥ १८ ॥ तांशशापाथसब्रह्मासंध्यारागोभविष्यति ॥ यामद्वाक्यमलंघ्यंवैसुरैर्लंघयसेबलात्
॥ १९ ॥ सापिजातामुनिश्रेष्ठसंध्यारागवतीततः ॥ प्रतीच्छन्कृत्तिकाभागेशैलेय्याविग्रहंदृढं ॥ २० ॥ ततोगतेकन्यके
द्वेज्ञात्वामेनातपस्विनी ॥ तपसोवारयामासउमेत्येवाब्रवीच्चसा ॥२१॥ तदेवमार्तानामास्याश्चक्रेपितृश्रुताशुभा[1] ॥ उमे-
त्येवहिकन्यायाःसाजगामतपोवनं ॥ २२ ॥ ततःसामनसादेवंशूलपाणिंवृषध्वजं ॥ रुद्रंचेतसिसंधार्यतपस्तेपेसुदुष्करं
॥ २३ ॥ ततोब्रह्माब्रवीद्देवान्गच्छध्वंहिमवत्सुतां ॥ इहानयध्वंतत्कालंतपस्यंतींहिमालये ॥ २४ ॥ ततोदेवाःसमाज-
ग्मुर्ददृशुःशैलनंदिनीं ॥ तेजसाविजितास्तस्यानशेकुरुपसर्पितुं ॥ २५ ॥ इंद्रोमरुद्गणैःसार्धंनिर्धूतस्तेजसातया ॥ ब्र-
ह्मणोऽधिकतेजोस्याविनिवेद्यप्रतिष्ठितः ॥ २६ ॥ ततोब्रह्माब्रवीद्देवान्ध्रुवंशंकरवल्लभा ॥ यूयंसतेजसोनूनंविक्षिप्तास्तुह-

१ तदेव मेना नामास्याश्चक्रेपुत्र्याः स्वभावतः ॥ इति पा० ।

तप्रभाः ॥ २७॥ तस्माद्व्रजध्वंस्वंस्वंहिस्थानंभोविगतज्वराः ॥ सतारकंहिमहिषंविद्ध्वंनिहतंरणे ॥ २८॥ इत्येवमुक्ता
देवेनब्रह्मणासेंद्रकाःसुराः ॥ जग्मुःस्वान्येवधिष्ण्यानिसद्योवैविगतज्वराः ॥ २९ ॥ उमामपितपस्यंतींहिमवान्पर्वतेश्व-
रः ॥ निवर्त्यतपसस्तस्मात्सदारोह्यनयद्गृहान् ॥ ३० ॥ देवोप्याश्रित्यतद्रौद्रंव्रतंनामनिराश्रयं ॥ विचचारमहाशैला-
न्मेरुप्राग्र्यान्महामतिः ॥ ३१ ॥ सकदाचिन्महाशैलंहिमवंतंसमागतः ॥ तेनार्चितःश्रद्धयासौतांरात्रिमवसद्धरः ॥ ३२ ॥
द्वितीयेन्हिगिरीशेनमहादेवोनिमंत्रितः ॥ इहैवतिष्ठस्वविभोतपःसाधनकारणात् ॥ ३३ ॥ इत्येवमुक्तोगिरिणाहरश्च-
क्रेमतिंचतां ॥ तथाचाश्रममाश्रित्यत्यक्त्वासस्वंनिराश्रमं ॥ ३४ ॥ वसतोप्याश्रमेतस्यदेवदेवस्यशूलिनः ॥ तंदेशम-
गमत्कालीगिरिराजसुताशुभा ॥ ३५ ॥ तामागतांहरोदृष्ट्वाभूयोजातांप्रियांसतीं ॥ स्वागतेनाभिसंपूज्यतस्थौयोगर-
तोहरः ॥ ३६ ॥ साचाभ्येत्यवरारोहाकृतांजलिपरिग्रहा ॥ ववंदेचरणौशैलेसखिभिःसहभामिनी ॥ ३७ ॥ ततस्तुसु-
चिराच्छर्वःसमीक्ष्यगिरिकन्यकां ॥ नयुक्तंचैवमुक्त्वाथसगणोन्तर्दधेततः ॥३८॥ सापिशर्ववचोरौद्रंश्रुत्वाज्ञानसमन्विता
॥ अंतर्दुःखेनदह्यंतीपितरंप्राहपार्वती ॥ ३९ ॥ तातयास्येमहारण्येतप्तुंघोरंमहत्तपः ॥ आराधनायदेवस्यशंकरस्यपि-
नाकिनः ॥ ४० ॥ तथेत्युक्तंवचःपित्रापादेतस्यैवविस्तृते ॥ ललिताख्यातपस्तेपेहराराधनकाम्यया ॥ ४१ ॥ तस्याः
सख्यस्तदादेव्याःपरिचर्यांतुकुर्वते ॥ समित्कुशफलंचापिमूलाहरणमादितः ॥ ४२ ॥ विनोदनार्थंपार्वत्यामृन्मयःशूल-
धृग्वरः ॥ कृतश्चतेजोयुक्तश्चरुद्रोमेस्त्वितिसाब्रवीत् ॥४३॥ पूजांकरोतितस्यैवतंपश्यन्तीमुहुर्मुहुः ॥ ततोऽस्यास्तुष्टिमगम-
च्छ्रद्धयात्रिपुरांतकृत् ॥ ४४ ॥ बटुरूपंसमाधायआषाढीमुंजमेखली ॥ यज्ञोपवितीछत्रीचमृगाजिनधरस्तथा ॥ ४५ ॥

१ निराश्रममिति पा० । २ पालाशदण्डधरः । पालाशो दण्ड आषाढः ।

कमंडलुव्यग्रकरोभस्मारुणितविग्रहः ॥ प्रत्याश्रमंपर्यटन्सतंकाल्याश्रममागतः ॥ ४६ ॥ तमुत्थायतदाकालीसखी-
भिःसहनारद ॥ पूजयित्वायथान्यायंपर्यपृच्छदिदंततः ॥ ४७ ॥ उमोवाच ॥ कस्मादागम्यतेभिक्षोकुत्रस्थानेतवाश्र-
मः ॥ कुतस्त्वंपरिगंतासिममशीघ्रंनिवेदय ॥ ४८ ॥ भिक्षुरुवाच ॥ ममाश्रमपदंबालेवाराणस्यांशुचिव्रते ॥ अथैतत्ती-
र्थयात्रायांगमिष्यामिपृथूदकं ॥ ४९ ॥ देव्युवाच ॥ किंपुण्यंतत्रविप्रेंद्रयद्यासिलंपृथूदके ॥ पथिस्नानेनचफलंकेपु
किंलब्धवानसि ॥ ५० ॥ भिक्षुरुवाच ॥ मयास्नानंप्रयागेतुकृतंप्रथममेवहि ॥ ततोथतीर्थेकुब्जाम्रेजयंतेचंडिकेश्वरे
॥ ५१ ॥ बंधुवृंदेचकर्कंधेतीर्थेकनखलेतथा ॥ सरस्वत्यामग्निकुंडेभद्रायांतुत्रिविष्टपे ॥ ५२ ॥ कौनटेकोटितीर्थेचतक्षके
चकृशोदरि ॥ निष्कामेनकृतंस्नानंततोभ्यागात्तवाश्रमं ॥ ५३ ॥ इहस्थांत्वांसमाभाष्यगमिष्यामिपृथूदकं ॥ पृच्छामिय-
दहंत्वांवैतत्रनक्रोद्धुमर्हसि ॥ ५४ ॥ अहंयस्तपसात्मानंशोषयामिकृशोदरि ॥ बाल्येऽपिसंयततनुस्ततःश्लाघ्यंद्विजन्म-
नां ॥ ५५ ॥ किमर्थंभवतीरौद्रंप्रथमेवयसिस्थिता ॥ तपःसमाश्रिताभीरुसंशयःप्रतिभातिमे ॥ ५६ ॥ प्रथमेवयसि
स्त्रीणांसहभर्त्राविलासिनि ॥ सुभोगाभोगिताःकालाव्रजंतिस्थिरयौवने ॥ ५७ ॥ तपसावांछयंतीहगिरिजेसचराचरा ॥
रूपाभिजनमैश्वर्यंतच्चतेवर्त्ततेबहु ॥ ५८ ॥ तत्किमर्थमपास्यैतानलंकारान्जटाधृताः ॥ चीनांशुकंपरित्यज्यकिंत्वंव-
ल्कलधारिणी ॥ ५९ ॥ पुलस्त्यउवाच ॥ ततस्तुतपसावृद्धादेव्याःसोमप्रभासखी ॥ भिक्षवेकथयामासयथावत्साहि
नारद ॥ ६० ॥ सोमप्रभोवाच ॥ तपश्चर्याद्विजश्रेष्ठपार्वत्यायेनहेतुना ॥ तंशृणुष्वमहाकालीहरंभर्त्तारमिच्छति ॥ ६१ ॥
पुलस्त्यउवाच ॥ सोमप्रभायावचनंश्रुत्वासंकंप्यवैशिरः ॥ विहस्यचमहाहासंभिक्षुराहवचस्त्विदं ॥ ६२ ॥ भिक्षुरुवा-
च ॥ वदामितेपार्वतिवाक्यमेवंकेनप्रदत्तातवबुद्धिरेषा ॥ कथंकरःपल्लवकोमलस्तेसमेष्यतेशार्वकरंससर्पं ॥ ६३ ॥ त-

थादुकूलांबरशालिनीत्वंमृगारिचर्माभिवृतस्तुरुद्रः ॥ त्वंचंदनाक्तासचभस्मभूषितोनयुक्तरूपंप्रतिभातिमेत्विदं ॥ ६४ ॥
पुलस्त्यउवाच ॥ एवंवादिनिविप्रेंद्रपार्वतीभिक्षुमब्रवीत् ॥ मामैवंवदभिक्षोत्वंहरःसर्वगुणाधिकः ॥ ६५ ॥ शिवोवाप्य-
थवाभीमःसधनोनिर्धनोथवा ॥ अलंकृतोवादेवेशस्तथावाप्यनलंकृतः ॥ ६६ ॥ यादृशस्तादृशोवापिसमेनाथोभविष्यति
॥ निवार्यतामयंभिक्षुर्विवक्षुःस्फुरिताधरः ॥ नतथानिंदकःपापीयथाश्रोताशशिप्रभे ॥ ६७ ॥ पुलस्त्यउवाच ॥ इत्येवमु-
क्त्वावरदासमुत्थातुमथैच्छत ॥ ततोऽत्यजद्भिक्षुरूपंस्वरूपस्थोऽभवच्छिवः ॥६८॥ भूत्वोवाचप्रियेगच्छस्वमेवभवनंपितुः
॥ तवार्थायप्रहेष्यामिमहर्षीन्हिमवद्गृहे ॥ ६९ ॥ यच्चेहरुद्रमीहंत्यामृन्मयश्चेश्वरःकृतः ॥ असौभद्रेश्वरेत्येवंख्यातोलो-
केभविष्यति ॥ ७० ॥ देवदानवगंधर्वायक्षाःकिंपुरुषोरगाः ॥ पूजयिष्यंतिसततंमानवाश्चशुभेप्सवः ॥ ७१ ॥ इत्येवमु-
क्तादेवेनगिरिराजसुतामुने ॥ जगामांबरमाविश्यस्वमेवभवनंपितुः ॥ ७२ ॥ शंकरोपिमहातेजाविसृज्यगिरिकन्यकां
॥ पृथूदकंजगामाथस्नानंचक्रेविधानतः ॥ ७३ ॥ ततस्तुदेवप्रवरोमहेश्वरःपृथूदके ॥ कृतंतेनतदास्नानमपास्तसर्वक-
ल्मषः ॥ ७४ ॥ कृत्वासनंदीसगणःसवाहनोमहागिरिंमंदरमाजगाम ॥ आयातित्रिपुरांतकेसहगणैःपर्यायुतैःसप्तभिरा
रोहत्पुलकोबभौगिरिवरःसंहृष्टचित्तःक्षणात् ॥ चक्रेदिव्यफलैर्जलेनशुचिनामूलैश्चकंदादिभिःपूजांसर्वगणेश्वरैःसहवि-
भोराद्रिस्त्रिनेत्रस्यतु ॥ ७५ ॥ इतिश्रीवामनपुराणेउमासंभवेमंदरगिरिप्रवेशोनामएकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥ ॥
पुलस्त्यउवाच ॥ ततःसंपूजितोरुद्रःशैलेनप्रीतिमानभूत् ॥ सस्मारचमहर्षींस्तुअरुंधत्यासमंततः ॥ १ ॥ तेसंस्मृतास्तु
ऋषयःशंकरेणमहात्मना ॥ समाजग्मुर्महाशैलंमंदरंचारुकंदरं ॥ २ ॥ तानागतान्समीक्ष्यैवदेवस्त्रिपुरनाशनः ॥ अ-
भ्युत्थायाभिपूज्यैतानिदंवचनमब्रवीत् ॥ ३ ॥ धन्योयंपर्वतश्रेष्ठःश्लाघ्यःपूज्यश्चदैवतैः ॥ धूतपापस्तथाजातोभवतांपा-

दर्पकजैः ॥ ४ ॥ स्थीयतांविस्तततरम्येगिरिप्रस्थेसमेशुभे ॥ शिलासुपद्मवर्णासुश्लक्ष्णासुचमृदुष्वथ ॥ ५ ॥ पुलस्त्य
उवाच ॥ इत्येवमुक्तादेवेनशंकरेणमहर्षयः ॥ समवेत्यत्वरुंधत्याविविशुःशैलसानुनि ॥ ६ ॥ उपविष्टेषुऋषिषुनंदीदे-
वगणाग्रणीः ॥ अर्घ्यादिभिःसमभ्यर्च्यस्थितःप्रयतमानसः ॥ ७ ॥ ततोऽब्रवीत्सुरपतिर्धर्म्यंवाक्यंहितंसुरान् ॥ आ-
त्मनोयशसोवृद्ध्यैसप्तर्षीन्विनयान्वितान् ॥ ८ ॥ हरउवाच ॥ कश्यपात्रेवारुणेयगाधेयशृणुगौतम ॥ भरद्वाजशृणु-
ष्वत्वमंगिरस्त्वंशृणुष्वच ॥ ९ ॥ ममासीद्दक्षतनुजाप्रियासादक्षकोपतः ॥ उत्ससर्जसतीप्राणान्योगंदृष्ट्वापुराकिल
॥ १० ॥ साद्यभूयःसमुद्भूताशैलराजसुताउमा ॥ तांमदर्थायशैलेंद्रोयाच्यतांद्विजसत्तमाः ॥ ११ ॥ पुलस्त्यउवाच ॥
सप्तर्षयश्चैवमुक्ताबाढमित्यब्रुवन्वचः ॥ ॐनमःशंकरायेतिप्रोक्त्वाजग्मुर्हिमालयं ॥ १२ ॥ ततोप्यरुंधतींशर्वःप्राहग-
च्छस्वसुंदरि ॥ पुरंध्र्योहिपुरंध्रीणांगतिंधर्मस्यवैविदुः ॥ १३ ॥ इत्येवमुक्तादुर्लंघ्यंलोकाचारात्वरुंधती ॥ नमस्तेरुद्रइ-
त्युक्त्वाजगामपतिनासह ॥ १४ ॥ गत्वाहिमाद्रिशिखरमोषधिप्रस्थमेवच ॥ ददृशुःशैलराजस्यपुरंदरपुरीमिव ॥ १५ ॥
ततःसंपूज्यमानास्तेशैलयोषिद्भिरादरात् ॥ सुनाभादिभिरव्यग्रैःपूज्यमानातुपार्वती ॥ १६ ॥ गंधर्वैःकिंनरैर्यक्षैस्तथा-
न्यैस्तत्पुरस्सरैः ॥ विविशुर्भुवनंरम्यंहिमाद्रेर्हाटकोज्वलं ॥ १७ ॥ ततःसर्वेमहात्मानस्तपसाधौतकल्मषाः ॥ समा-
साद्यमहाद्वारंसंतस्थुर्द्वास्थकारणात् ॥ १८ ॥ ततस्तुत्वरितोभ्यागाद्द्वास्थोद्रिर्गंधमादनः ॥ धारयन्वैकरेदंडंपद्मराग-
मयंमहत् ॥ १९ ॥ ततस्तमूचुर्मुनयोगत्वाशैलपतिंशुभं ॥ निवेदयास्मान्संप्राप्तान्महत्कार्यार्थिनोवयं ॥ २० ॥ इत्ये-
वमुक्तःशैलेंद्रमृषिभिर्गंधमादनः ॥ जगामतत्रयत्रास्तेशैलराजोऽद्रिभिर्वृतः ॥ २१ ॥ निषण्णोभुविजानुभ्यांदत्वाहस्तौ
मुखेगिरिः ॥ दंडंनिक्षिप्यकक्षायामिदंवचनमब्रवीत् ॥ २२ ॥ गंधमादनउवाच ॥ इमेहिऋषयःप्राप्ताःशैलराजतवा-

जिरे ॥ द्वारेस्थिताःकार्यिणस्तेतवदर्शनलालसाः ॥ २३ ॥ पुलस्त्यउवाच ॥ द्वास्थवाक्यंसमाकर्ण्यसमुत्थायाचलेश्वरः
॥ स्वयमभ्यागमद्द्वारिसमादायार्घमुत्तमं ॥ २४ ॥ तानर्च्यार्घ्यादिनाशैलःसमानीयसभातलं ॥ उवाचवाक्यंवाक्य-
ज्ञःकृतासनपरिग्रहान् ॥ २५ ॥ हिमवानुवाच ॥ अनभ्रवृष्टिःकिमियमुताहोऽकुसुमंफलं ॥ अप्रतर्क्यमचिंत्यंचभव-
दागमनंविदं ॥ २६ ॥ अद्यप्रभृतिधन्योस्मिशैलराजोस्मिसत्तमाः ॥ संशुद्धदेहोस्म्यद्यैवयद्भवंतोममाजिरं ॥ २७ ॥
असत्संसर्गसंशुद्धंकृतवंतोद्विजोत्तमाः ॥ दृष्टिपूतंपदाक्रांतंतीर्थंसारस्वतंयथा ॥ २८ ॥ दासोहंभवतांविप्राःकृतपुण्यश्च
सांप्रतं ॥ येनार्थिनोहितेयूयंतन्मानुज्ञातुमर्हथ ॥ २९ ॥ सदारोहंसमंपुत्रैर्भृत्यैर्नप्रभुरव्ययः ॥ किंकरोऽस्मिस्थितायु-
ष्मदाज्ञाकारीतदुच्यतां ॥ ३० ॥ पुलस्त्यउवाच ॥ शैलराजवचःश्रुत्वाऋषयःसंशितव्रताः ॥ ऊचुरंगिरसंवृद्धंकार्यमद्रौ
निवेदय ॥ ३१ ॥ इत्येवंनोदितःसर्वैर्ऋषिभिःकश्यपादिभिः ॥ प्रत्युवाचपरंवाक्यंगिरिराजंतमंगिराः ॥ ३२ ॥ अंगि-
राउवाच ॥ श्रूयतांपर्वतश्रेष्ठयेनकार्येणवैवयं ॥ समागतास्त्वत्सदनमरुंधत्यासमंगिरे ॥ ३३ ॥ योऽसौमहात्मासर्वा-
त्मादक्षयज्ञक्षयंकरः ॥ शंकरःशूलधृक्शर्वस्त्रिनेत्रोवृषवाहनः ॥ ३४ ॥ जीमूतकेतुःशत्रुघ्नोयज्ञभोक्तास्वयंप्रभुः ॥ यमी-
श्वरंवदन्त्येकेशिवंस्थाणुवरंहरं ॥ ३५ ॥ भीममुग्रंमहेशानंमहादेवंपशोःपतिं ॥ वयंतेनप्रेषिताःस्मस्त्वत्सकाशंगिरीश्वर
॥ ३६ ॥ इयंयात्वत्सुताकालीसर्वलोकेषुसुंदरी ॥ तांप्रार्थयतिदेवेशस्तांभवान्दातुमर्हसि ॥ ३७ ॥ सएवधन्योहिपिता-
यस्यपुत्रीपतिंशुभं ॥ रूपाभिजनसंपत्त्याप्राप्नोतिगिरिसत्तम ॥ ३८ ॥ यावंतोजंगमागम्याभूताःशैलचतुर्विधाः ॥ ते-
षांमातात्वियंदेवीयतःप्रोक्तःपिताहरः ॥ ३९ ॥ प्रणम्यशंकरंदेवाःप्रणमंतुसुतांतव ॥ कुरुष्वपादंशत्रूणांमूर्ध्निभस्मपाङ्-

१ भृत्यैर्नस्तृप्तिरव्यया इति पा० ।

स्तुतं ॥ ४० ॥ याचितारोवयंशर्वेवरोदातात्वमप्युमा ॥ वधूःसर्वजगन्माताकुरुयच्छ्रेयसेनव ॥ ४१ ॥ पुलस्त्यउवाच ॥
तद्वचोंगिरसःश्रुत्वाकालीतस्थावधोमुखी ॥ हर्षमागम्यसहसापुनर्दैन्यमुपागता ॥ ४२ ॥ ततःशैलपतिःप्राहपर्वतंगंध-
मादनं ॥ गच्छशैलानुपामंत्र्यसर्वानाहर्तुमर्हसि ॥ ४३ ॥ ततःशीघ्रतरःशैलोगृहाद्गृहमगाज्जवी ॥ मेर्वाद्यान्पर्वतश्रेष्ठा-
नाजुहावसमंततः ॥ ४४ ॥ तेप्याजग्मुस्त्वरावंतःकार्यंमत्वामहत्तदा ॥ विविशुर्विस्मयाविष्टाःसौवर्णेष्वासनेषुच ॥ ४५ ॥
उदयोहेमकूटश्चरम्यकोमंदरस्तथा ॥ उद्दालकोवारुणश्चवराहोगरुडासनः ॥ ४६ ॥ शुक्तिमान्वेगसानुश्चदृढशृंगो-
पिशृंगवान् ॥ चित्रकूटस्त्रिकूटश्चतथान्येक्षुद्रपर्वताः ॥ ४७ ॥ उपविष्टाःसभायांवैप्रणिपत्यऋषींश्चतान् ॥ ततोगिरीशः
स्वांभार्यांमेनामाहूतवान्स्वयं ॥४८॥ समागच्छतुकल्याणीसमंपुत्रेणभामिनी ॥ साभिवंद्यऋषीणांचचरणांश्चतपस्वि-
नी ॥ ४९ ॥ सर्वान्ज्ञातीन्समाभाष्यविवेशस्वसुतातव ॥ ततोद्रिषुमहाशैलउपविष्टेषुनारद ॥ उवाचवाक्यंवाक्यज्ञः
सर्वानाभाष्यसुस्वरं ॥ ५० ॥ हिमवानुवाच ॥ इमेसप्तर्षयःपुण्यायाचितारःसुतांमम ॥ महेश्वरार्थंकन्यांतुतच्चावेद्यंभ-
वत्सुवै ॥ ५१ ॥ तद्वद्ध्वंयथान्यायंज्ञातयोयूयमेवमे ॥ नोल्लंघ्ययुष्मान्दास्यामितत्क्षमंवक्तुमर्हथ ॥ ५२ ॥ पुलस्त्य
उवाच ॥ हिमवद्वचनंश्रुत्वामेर्वाद्याःस्थावरोत्तमाः ॥ सर्वएवाब्रुवन्वाक्यंस्थितास्तेष्वासनेषुते ॥ ५३ ॥ याचितारश्च
मुनयोवरस्त्रिपुरहाहरः ॥ दीयतांशैलकालीयंजामाताभिमतोहिनः ॥ ५४ ॥ मेनाथप्राहभर्तारंशृणुशैलेंद्रमेवचः ॥ पि-
तृभिस्तनयामह्यंदत्तानेनैवहेतुना ॥ ५५ ॥ यस्तस्यांभूतपतिनापुत्रोदत्तोभविष्यति ॥ सहानिष्यतिदैत्येंद्रंमहिषंतार-
कंतथा ॥ ५६ ॥ इत्येवंमेनयाप्रोक्तःशैलेशैलेश्वरःसुतां ॥ प्रोवाचपुत्रिदत्तासिशर्वायत्वंमयाधुना ॥ ५७ ॥ ऋषीनुवा-
चकालीयंममपुत्रीतपोधनाः ॥ प्रणामंशंकरवधूर्भक्तिनम्राकरोतिवः ॥ ५८ ॥ ततोप्यरुंधतीकालीमंकमारोप्यचाटुकैः ॥

विलज्जमानामाश्वास्यहरनामोचितैःशुभैः ॥ ५९ ॥ ततःसप्तर्षयःप्रोचुःशैलराजनिशामय ॥ जामित्रगुणसंयुक्तांतिथिं पुण्यांसुमंगलां ॥ ६० ॥ उत्तराफाल्गुनीयोगंतृतीयेन्हिहिमांशुमान् ॥ गमिष्यतिचतत्रोक्तोमुहूर्तोमैत्रनामकः ॥ ६१ ॥ तस्यांतिथौहरःपाणिंग्रहीष्यतिसमंत्रकं ॥ तवपुत्र्यावयंयामस्तदनुज्ञातुमर्हसि ॥ ६२ ॥ ततःसंपूज्यविधिनाफलमूलादि-भिःशुभैः ॥ विसर्जयामासशनैःशैलराडृषिपुंगवान् ॥ ६३ ॥ तेप्याजग्मुर्महावेगात्त्वाक्रम्यमहदालयं ॥ आसाद्य मंदरगिरिंभूयोऽपश्यंतशंकरं ॥ ६४ ॥ प्रणम्योचुर्महेशानंभवान्भर्ताद्रिजावधूः ॥ सब्रह्मकास्त्रयोलोकाद्रक्ष्यंतिघनवा-हनं ॥ ६५ ॥ ततोमहेश्वरःप्रीतऋषीन्सर्वाननुक्रमात् ॥ पूजयामासविधिनाअरुंधत्यासमंहरः ॥ ६६ ॥ ततःसंपू-जिताजग्मुःसुराणांमंत्रणायते ॥ तेऽथाजग्मुर्हरंद्रष्टुंब्रह्मविष्ण्वींद्रभास्कराः ॥ ६७ ॥ ततःसमभ्येत्यमहेश्वरस्यकृतप्रणा-माविविशुर्महर्षे ॥ सस्मारनंदिप्रमुखांश्चसर्वानभ्येत्यतेवंद्यहरंनिषण्णाः ॥ ६८ ॥ देवैर्गणैश्चापिवृतोगणेशःसंशोभते मुक्तजटाग्रभारः ॥ यथावनेसर्ज्जकदंबमध्येप्ररोहमूलोऽथवनस्पतिर्वा ॥ ६९ ॥ इतिश्रीवामनपुराणेउमासंभवेगौरीवि-वाहेद्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ ॥ ॥ ॥ ॥

पुलस्त्यउवाच ॥ समागतान्सुरान्दृष्ट्वानंदिराख्यातवान्विभो ॥ अथोत्थायहरिंभक्त्यापरिष्वज्यन्यपीडयत् ॥ १ ॥ ब्रह्माणंशिरसानत्वासमाभाष्यशतक्रतुं ॥ आलोक्यान्यान्सुरगणान्संभावयत्सशंकरः ॥ २ ॥ गणाश्चजयदेवेतिवीर-भद्रपुरोगमाः ॥ शैवाःपाशुपताद्याश्चविविशुर्मंदराचलं ॥ ३ ॥ ततस्तस्मान्महाशैलंकैलासंसहदैवतैः ॥ जगामभगवा-न्शर्वःकर्तुंवैवाहिकंविधिं ॥ ४ ॥ ततस्तस्मिन्महाशैलेदेवमातादितिःशुभा ॥ सुरभिःसुरमाचान्याश्चक्रुर्मंडनमाकुलाः ॥ ५ ॥ महास्थिशेखरीचारुरोचनातिलकोहरः ॥ सिंहाजिनीचातिनीलभुजंगकृतकुंडलः ॥ ६ ॥ महाहिरत्नवलयो

हारकेयूरनूपुरः ॥ समुन्नतजटाभारो वृषभस्थो विराजते ॥ ७ ॥ तस्याग्रतो गणाः स्वैः स्वैरारूढा यांति वाहनैः ॥ देवाश्च
पृष्ठतो जग्मुर्हुताशनपुरोगमाः ॥ ८ ॥ वैनतेयं समारूढः सह लक्ष्म्या जनार्दनः ॥ प्रयाति देवपार्श्वस्थो हंसेन च पितामहः
॥ ९ ॥ गजाधिरूढो देवेंद्रश्छत्रं शुक्लपटं विभो ॥ धारयामास विततं सहेंद्राण्या सहस्रधृक् ॥ १० ॥ यमुना सरितां श्रेष्ठा वा-
लव्यजनमुत्तमं ॥ श्वेतं प्रगृह्य हस्तेन कच्छपे संस्थिता ययौ ॥ ११ ॥ हंसकुंदेंदुसंकाशं वालव्यजनमुत्तमं ॥ सरस्वती स-
रिच्छ्रेष्ठा गजारूढा समादधे ॥ १२ ॥ ऋतवः षट् समादाय कुसुमं गंधसंयुतं ॥ पंचवर्णं महेशार्थं जग्मुस्ते कामचारिणः
॥ १३ ॥ मत्तमैरावणनिभं गजमारुह्य वेगवान् ॥ अनुलेपनमादाय ययौ तत्र पृथूदकः ॥ १४ ॥ गंधर्वास्तुंबरुमुखा गायं-
तो मधुरस्वरं ॥ अनुजग्मुर्महादेवं वादयंतश्च किंनराः ॥ १५ ॥ नृत्यंत्यप्सरसश्चैव स्तुवंतो मुनयश्च तं ॥ गंधर्वा यांति दे-
वेशं त्रिनेत्रं शूलपाणिनं ॥१६॥ एकादश तथा कोट्यो रुद्राणां तत्र वै ययुः ॥ द्वादशैवादितेयानामष्टौ कोट्यो वसूनपि ॥ १७॥
सप्तषष्टिस्तथा कोट्यो गणानामृषिसत्तमाः[1] ॥ चतुर्विंशत्तदा जग्मुर्गणानामूर्ध्वरेतसां ॥ १८ ॥ असंख्यातानि यूथानि यक्ष-
किन्नररक्षसां ॥ अनुजग्मुर्महेशानं विवाहाय समाकुलाः ॥ १९ ॥ ततः क्षणेन देवेशः क्ष्माधराधिपतेस्तलं ॥ संप्राप्तश्चा-
गमन् शैलाः कुंजरस्थाः समंततः ॥ २० ॥ ततोऽननाम भगवांस्त्रिनेत्रः स्थावराधिपं ॥ शैलाः प्रणेमुरीशानं ततोऽसौ मुदितोऽ
भवत् ॥ २१ ॥ समं सुरैः पार्षदैश्चाविवेश वृषकेतनः ॥ नंदिना दर्शिते मार्गे शैलराजपुरं महत् ॥ २२ ॥ जीमूतकेतुरायात
इत्येवं नगरस्त्रियः ॥ निजकर्म परित्यज्य दर्शनाया द्रुता भवन् ॥ २३ ॥ माल्यदाम समादाय करेणैकेन भामिनी ॥ केश-
पाशं द्वितीयेन शंकराभिमुखी गता ॥ २४ ॥ अन्यालक्तकरागाढ्यं पादं कृत्वाकुलेक्षणा ॥ अनलक्तकमेकं हि हरं द्रष्टुमुपागता

[1] ऋषीणामिति क्वचित् ।

॥ २५ ॥ एकेनाक्ष्णांजितेनैवश्रुत्वाभीममुपागतं ॥ सांजनांचप्रगृह्यान्याशलाकांसुष्ठुधावति ॥ २६ ॥ अन्यासरसनं
वासःपाणिनादायसुंदरी ॥ उन्मत्तेवागमन्नग्नाहरदर्शनलालसा ॥ २७ ॥ अन्यातिक्रांतमीशानंश्रुत्वास्तनभरालसा ॥
अनिंदतकुचौबालायौवनंस्वंकृशोदरी ॥ २८ ॥ इत्थंसनागरस्त्रीणांक्षोभंसंजनयन्हरः ॥ जगामवृषमारूढोदिव्यंश्वशु-
रमंदिरं ॥ २९ ॥ ततःप्रविष्टंप्रसमीक्ष्यशंभुंशैलेंद्रवेश्मन्यबलाब्रुवंति ॥ स्थानेतपोदुश्चरमंबिकायाश्चीर्णमहानेषसुर-
स्तुशंभुः ॥ ३० ॥ सएषयेनांगमनंगतांकृतंकंदर्पनाम्नःकुसुमायुधस्य ॥ क्रतोःक्षयीदक्षविनाशकर्त्ताभगाक्षिहाशूलधरः
पिनाकी ॥ ३१ ॥ नमोनमःशंकरशूलपाणेमृगारिचर्मांबरकालशत्रो ॥ महाहिहारांकितकुंडलायनमोनमःपार्वतिव-
ल्लभाय ॥ ३२ ॥ इत्थंसंस्तूयमानःसुरपतिविधृतेनातपत्रेणशंभुःसिद्धैर्वंद्यःसपक्षैरहिकृतवलयीचारुभस्मोपलिप्तः
॥ अग्रस्थेनाग्रजेनप्रमुदितमनसाविष्णुनाचानुगेनवैवाहींमंगलाढ्यांहुतवहसहितामारुरोहाथवेदीं ॥ ३३ ॥
आयातित्रिपुरांतकेसहचरैःसार्धंचसप्तर्षिभिर्व्यग्रोभूद्गिरिराजवेश्मनिजनःकन्यासमालंकृतौ ॥ व्याकुल्यंसमुपागताश्च
गिरयःपूजादिनादेवताःप्रायोव्याकुलिताभवंतिसुहृदःकन्याविवाहोत्सुकाः ॥ ३४ ॥ प्रसाध्यदेवींगिरिजांततःस्त्रियोदु-
कूलशुक्लाभिवृतांगयष्टिकां ॥ भ्रात्रासुनाभेनतदोत्सवेकृतेसाशंकराभ्यासमथोपपादिता ॥ ३५ ॥ ततःशुभेहर्म्यत-
लेहिरण्मयेस्थिताःसुराःशंकरकालिचेष्टितं ॥ पश्यंतिदेवापिसमंकृशांग्यालोकानुजुष्टंपदमाससाद ॥ ३६ ॥ यत्रक्री-
डाविचित्राःसकुसुमतरवोवारिणोबिंदुपातैर्गंधाढ्यैर्गंधचूर्णैःप्रविरलमवनौगुंडितौगुंडिकायां ॥ मुक्तादामैःप्रकामंहरगि-
रितनयाक्रीडनार्थंतदाघ्नन्पश्चात्सिंदूरपूंजैरविरतविततैश्चक्रतुःक्ष्मांसुरक्तां ॥ ३७ ॥ एवंक्रीडांहरःकृत्वासमंचगिरिक-
न्यया ॥ आगच्छद्दक्षिणांवेदिमृषिभिःसेवितांदृढां ॥ ३८ ॥ अध्याजगामहिमवान्शुक्लांबरधरःशुचिः ॥ पवित्रपाणि-

रादायमधुपर्कमथाकुलं ॥ ३९ ॥ उपविष्टस्त्रिनेत्रस्तुशाक्रींदिशमपश्यत ॥ सप्तर्षिकांश्चशैलेंद्रःसूपविष्टोविलोकयन्
॥ ४० ॥ सुखासीनस्यशर्वस्यकृतांजलिपुटोगिरिः ॥ प्रोवाचवचनंश्रीमान्धर्मसाधनमात्मनः ॥ ४१ ॥ हिमवानुवाच
॥ मत्पुत्रींभगवन्कालिंपौत्रींचपुलहाग्रजे ॥ पितृणामपिदौहित्रींप्रतीच्छेमांमयोदितां ॥ ४२ ॥ पुलस्त्यउवाच ॥ इ-
त्येवमुक्त्वाशैलेंद्रोहस्तंहस्तेनयोजयन् ॥ प्रादात्प्रतीच्छभगवन्इदमुच्चैरुदीरयन् ॥ ४३ ॥ हरउवाच ॥ नमेऽस्तिमा-
तानपितातथैवनज्ञातयोवापिचबांधवाद्याः ॥ निराश्रयोऽहंगिरिशृंगवासीसुतांप्रतीच्छामितवाद्रिराज ॥ ४४ ॥ इत्ये-
वमुक्त्वावरदोऽवपीडयत्करंकरेणाद्रिकुमारिकायाः ॥ साचापिसंस्पर्शमवाप्यशंभोःपरांमुदंलब्धवतीसुरर्षे ॥ ४५ ॥ त-
थाधिरूढोवरदोऽथवेदिंसहाद्रिपुत्र्यामधुपर्कमश्नन् ॥ दत्वाचलाजान्कलमस्यशुक्लांस्ततोविरंचोगिरिजामुवाचह ॥ ४६ ॥
कालिपश्येशवदनंरम्यंशशधरप्रभं ॥ समदृष्टिःस्थिराभूलाकुरुष्वाग्नेःप्रदक्षिणां ॥ ४७ ॥ ततोऽबिकाहरमुखेदृष्टेशैत्य-
मुपागता ॥ यथार्करश्मिसंतप्ताप्राप्यवृष्टिमिवावनिः ॥ ४८ ॥ भूयःप्राहविभोर्वक्त्रमीक्षस्वेतिपितामहः ॥ लज्जयासा-
पिदृष्टेतिशनैर्ब्रह्माणमब्रवीत् ॥ ४९ ॥ समंगिरिजयातेनहुताशस्त्रिःप्रदक्षिणं ॥ कृतोलाजाश्चहविषासमंक्षिप्ताहुताशने
॥ ५० ॥ ततोहरांघ्रिर्मालिन्यागृहीतोदायकारणात् ॥ किंयाचसिचदास्यामिमुंचस्वेतिहरोब्रवीत् ॥ ५१ ॥ मालि-
नीशंकरंप्राहमत्सख्यादेहिशंकर ॥ सौभाग्यंनिजगोत्रीयंततोमोक्षमवाप्स्यसि ॥ ५२ ॥ अथोवाचमहादेवोदत्तंमालि-
निमुंचमां ॥ सौभाग्यंनिजगोत्रीयंयोस्यास्तंशृणुवच्मिते ॥ ५३ ॥ योऽसौपीतांबरधरःशंखधृङ्मधुसुदनः ॥ एतदीयं
हिसौभाग्यंदत्तंमद्गोत्रमेवहि ॥ ५४ ॥ इत्येवमुक्तेवचनेप्रमुमोचवृषध्वजं ॥ मालिनीनिजगोत्रस्यशुभचारित्रमालिनी
॥ ५५ ॥ यदाहरोहिमालिन्यागृहीतश्चरणेशुभे ॥ तदाकालीमुखंब्रह्मादर्शशशिनोऽधिकं ॥ ५६ ॥ तंदृष्ट्वामोक्षमग-

मच्छुक्रच्युतिमवापच ॥ तच्छुक्रंवालुकायांचखिलीचक्रेससाध्वसः ॥ ५७ ॥ ततोब्रवीद्धरोब्रह्मन्नूनद्विजान्हंतुमर्हसि ॥ अमीमहर्षयोधन्यावालखिल्याःपितामह ॥ ५८ ॥ ततोमहेशवाक्यांतेसमुत्तस्थुस्तपस्विनः ॥ अष्टाशीतिसहस्राणि वालखिल्याइतिस्मृताः ॥ ५९ ॥ ततोविवाहेनिर्वृत्तेप्रविष्टःकौतुकंहरः ॥ रेमेसहोमयारात्रिंप्रभातेपुनरुत्थितः ॥ ६०॥ ततोद्रिपुत्रींसमवाप्यशंभुःसर्वैःसमंभूतगणैश्चपृष्ठः ॥ संपूजितःपर्वतपार्थिवेनस्वमंदिरंशीघ्रमुपाजगाम ॥ ६१ ॥ ततः सुरान्ब्रह्महरींद्रमुख्यान्प्रणम्यसंपूज्ययथाविभागं ॥ विसृज्यभूतैःसहितोमहीध्रमध्यावसन्मंदरमष्टमूर्त्तिः ॥ ६२ ॥ इतिश्रीवामनपुराणेउमासंभवेगौरीविवाहोनामत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ ॥ ॥

पुलस्त्यउवाच ॥ ततोगिरौवसन्रुद्रःस्वेच्छयाविचरन्मुने ॥ विश्वकर्माणमाहूयप्रोवाचकुरुमेगृहं ॥ १ ॥ ततश्चकार शर्वस्यगृहंस्वस्तिकलक्षणं ॥ योजनानिचतुषष्टिःप्रमाणेनहिरण्मयं ॥ २ ॥ दंततोरणनिर्व्यूहंमुक्ताजालांतरंशुभं ॥ शुद्धस्फटिकसोपानंवैडूर्यकृतरूपकं ॥ ३ ॥ सप्तकक्षंसुविस्तीर्णंसर्वैःसमुदितंगुणैः ॥ ततोदेवपतिश्चक्रेयज्ञंगार्हस्थ्यलक्षणं ॥ ४ ॥ तंपूर्वचरितंमार्गमनुयातिस्मशंकरः ॥ तथासतस्त्रिनेत्रस्यमहान्कालोभ्यगान्मुने ॥५॥ रमतःसहपार्वत्याधर्मा- पेक्षीजगत्पतिः ॥ ततःकदाचिद्ब्रह्मार्थंकालीत्युक्ताभवेनहि ॥ ६ ॥ पार्वतीमन्युनाविष्टाशंकरंवाक्यमब्रवीत् ॥ संरोहतीषुणाविद्धंवनंपरशुनाहतं ॥ वाचादुरुक्तंबीभत्संनप्ररोहतिवाक्क्षतं ॥ ७ ॥ वाक्सायकावदनान्निष्पतंतितैराहतःशोचतिरात्र्यहानि ॥ नतान्विमुंचेतहिपंडितोजनस्तदद्यधर्मंवितथंत्वयाकृतं ॥ ८ ॥ तस्माद्व्रजामिदेवेशतपस्तप्तुमनुत्तमं ॥ तथायतिष्येनयथाभवान्कालीतिवक्ष्यति ॥ ९ ॥ इत्येवमुक्त्वागिरिजाप्रणम्यचमहेश्वरं ॥ अनुज्ञातात्रिनेत्रेणदिवसे-

१ ब्रह्मार्थे इति पा० ।

वोत्पपातह ॥ १० ॥ समुत्पत्यचवेगेनाहिमाद्रेःशिखरंशिवं ॥ टंकच्छिन्नंप्रयत्नेनविधात्रानिर्मितंयथा ॥ ११ ॥ ततोऽ
वतीर्यसस्मारजयांचविजयांतथा ॥ जयंतींचमहापुण्यांचतुर्थीमपराजितां ॥ १२ ॥ ताःसंस्मृताःसमाजग्मुःकालींद्रष्टुंहि
देवताः ॥ अनुज्ञातास्तथादेव्याःशुश्रूषांचक्रिरेशुभाः ॥ १३ ॥ ततस्तपसिपार्वत्यांस्थितायांहिमवद्वनात् ॥ समाजगा-
मतंदेशंव्याघ्रोदंष्ट्रानखायुधः ॥ १४ ॥ एकपादस्थितायांवैदेव्यांव्याघ्रस्त्वचिंतयत् ॥ यदापतिष्यतेचेथंतदादास्यामिवै
अहं ॥ १५ ॥ इत्येवंचिंतयन्नेवदत्तदृष्टिर्मृगाधिपः ॥ पश्यमानस्तद्वदनमेकदृष्टिरजायत ॥ १६ ॥ ततोवर्षशतंदेवीगृणं-
तीब्रह्मणःपदं ॥ तपोऽतप्यत्ततोभ्यागाद्ब्रह्मात्रिभुवनेश्वरः ॥ १७ ॥ पितामहस्तथोवाचदेवींप्रीतोस्मिशाश्वते ॥ तप-
साधूतपापासिवरंवृणुयथेप्सितं ॥ १८ ॥ अथोवाचवचःकालीव्याघ्रस्यकमलोद्भव ॥ वरदोभवतेनाहंयास्येप्रीतिमनु-
त्तमां ॥ १९ ॥ ततःप्रादाद्वरंब्रह्माव्याघ्रस्याद्भुतकर्मणः ॥ गाणपत्यंविभोर्भक्तिमजेयत्वंचधर्मितां ॥ २० ॥ वरंव्याघ्राय
दत्वैवंशिवकांतामथाब्रवीत् ॥ वृणीष्ववरमव्यग्रावरंदास्येतवांबिके ॥ २१ ॥ ततोवरंगिरिसुताप्राहदेवीपितामहं ॥ वरः
प्रदीयतांब्रह्मन्वर्णंकनकसंनिभं ॥ २२ ॥ तथेयुक्त्वागतोब्रह्मापार्वतीचाभवत्ततः ॥ कोशंकृष्णंपरित्यज्यपद्मकिंजल्कसन्नि-
भा ॥ २३ ॥ तस्मात्कोशाच्चसाजाताभूयःकात्यायनीमुने ॥ तामभ्येत्यसहस्राक्षःप्रतिजग्राहदक्षिणां ॥ प्रोवाचगिरिजां
देवोवाक्यंस्वर्गायवासवः ॥ २४ ॥ इंद्रउवाच ॥ इयंप्रदीयतांमह्यंभगिनीमेस्तुकौशिकी ॥ त्वत्कोशसंभवाचेयंकौशिकी
कौशिकोप्ययं ॥ २५ ॥ तांप्रादादितिसंश्रुत्यकौशिकींरूपसंयुतां ॥ सहस्राक्षोऽपितांगृह्यविंध्यंवेगाज्जगामच ॥ २६ ॥
तत्रगत्वात्वथोवाचतिष्ठचात्रमहाचले ॥ पूज्यमानासुरैर्नाम्नाख्यातात्वंविंध्यवासिनी ॥ २७ ॥ तत्रस्थाप्यहरिर्देवींदत्वा
सिंहंचवाहनं ॥ भवामरारिहंत्रीचेत्युक्त्वास्वर्गमुपागमत् ॥ २८ ॥ उमापितंवरंलब्ध्वामंदिरंपुनरेत्यच ॥ प्रणम्यचंम-

हेशानंस्थितासविनयंमुने ॥ २९ ॥ ततोऽमरगुरुःश्रीमान्पार्वत्यासहितोऽव्ययः ॥ तस्थौवर्षसहस्रंहिमहामोहनकंमुने
॥ ३० ॥ महामोहास्थितेरुद्रेभुवनाश्चेलुरुद्धताः ॥ चुक्षुभुःसागराःसप्तदेवाश्चभयमागमन् ॥ ३१ ॥ ततःसुरामहेंद्रेणब्र-
ह्मणःसदनंगताः ॥ प्रणम्योचुर्महेशानंजगत्क्षुब्धंतुकिंत्विदं ॥ ३२ ॥ तानुवाचभवोनूनंमहामोहनकेस्थितः ॥ तेना-
क्रांतास्त्विमेलोकाजग्मुःक्षोभंदुरत्ययं ॥३३॥ इत्युक्त्वासोऽभवत्तूष्णींततोप्यूचुःसुराहरिं ॥ आगच्छशक्रगच्छामोयावत्त-
न्नसमाप्यते ॥ ३४ ॥ समाप्तेमोहनेबालोयःसमुत्पत्स्यतेऽव्ययः ॥ सनूनंदेवराजस्यपदमैंद्रंहरिष्यति ॥ ३५ ॥ ततोऽ
मराणांवचनाद्दिवौकोबलघातिनः ॥ भयाज्ज्ञानंततोनष्टंभाविकर्मप्रचोदनात् ॥ ३६ ॥ ततःशक्रःसुरैःसार्धंवन्हिनाच
सहस्रदृक् ॥ जगाममंदरागिरिंतच्छृंगेष्वपिसत्तम ॥ ३७ ॥ अशक्ताःसर्वएवैतेप्रवेष्टुंतद्भवाजिरं ॥ चिंतयित्वातुसुचिरं
पावकंतेव्यसर्जयन् ॥ ३८ ॥ सचाभ्येत्यसुरश्रेष्ठोदृष्ट्वाद्वारेचनंदिनं ॥ दुष्प्रवेशंचतंदृष्ट्वाचिंतांवन्हिःपरांगतः ॥ ३९ ॥
सतुचिंतार्णवेमग्नःप्रापश्यच्छंभुसद्मनः ॥ निष्क्रामंतींमहापंक्तिंहंसानांविमलांतथा ॥ ४० ॥ असावुपायइत्युक्त्वाहं
सरूपीहुताशनः ॥ वंचयित्वाप्रतीहारंप्रविवेशहराजिरं ॥ ४१ ॥ प्रविश्यसूक्ष्ममूर्त्तिश्चशिरोदेशेकपर्दिनः ॥ प्राहप्रहस्य
गंभीरंदेवाद्वारिस्थिताइति ॥ ४२ ॥ तच्छ्रुत्वासहसोत्थायपरित्यज्यगिरेःसुतां ॥ विनिष्क्रांतोजिराच्छर्वोवह्निनासह
नारद ॥ ४३ ॥ विनिष्क्रांतेसुरपतौदेवामुदितमानसाः ॥ शिरोभिरवनींजग्मुःसेंद्रार्कशशिपावकाः ॥४४॥ ततःप्रीत्या
सुरानाहवदध्वंकार्यमाशुमे ॥ प्रणामावनतावोहिदास्येहंवरमुत्तमं ॥४५॥ देवाऊचुः ॥ यदितुष्टोसिदेवानांवरंदातुमि-
हेच्छसि ॥ तदिहत्यज्यतांतावन्महामैथुनमीश्वर ॥ ४६ ॥ ईश्वरउवाच ॥ एवंभवतुसंत्यक्तोमयाभावोऽमरोत्तमाः ॥ म-
मेदंतेजउद्रिक्तंकश्चिद्देवप्रतीच्छतु ॥ ४७ ॥ पुलस्त्यउवाच ॥ इत्युक्ताःशंभुनादेवाःसेंद्रचंद्रदिवाकराः ॥ असीदंतयथा

मग्नाःपंकेवृंदारकाइव ॥ ४८ ॥ सोदत्सुदैवतष्वेवंहुताशोभ्येत्यशंकरं ॥ प्रोवाचमुंचतेजस्त्वंप्रतीच्छाम्येवशंकर ॥ ४९ ॥ ततोमुमोचभगवांस्तद्रेतःस्कन्नमेवतु ॥ जलंतृषार्तोवैयद्वत्तैलपानंपिपासतः ॥ ५० ॥ ततःपीतेरेतसिवैशार्वेदेवेनवन्हिना ॥ स्वस्थाःसुराःसमामन्त्र्यहरंजग्मुस्त्रिविष्टपं ॥ ५१ ॥ संप्रयातेषुदेवेषुहरोपिनिजमंदिरं ॥ समभ्येत्यमहादेवीमिदंवचनमब्रवीत् ॥ ५२ ॥ देवीदेवैरिहाभ्येत्ययत्नात्प्रेष्यहुताशनं ॥ ततःप्रोक्तोनिषिद्धस्तुपुत्रोत्पत्तिंतवोदरात् ॥ ५३ ॥ सापिभर्तुर्वचःश्रुत्वाक्रुद्धारक्तांतलोचना ॥ शशापदेवताःसर्वानष्टपुत्रोद्भवाशिवा ॥ ५४ ॥ यस्मान्नेच्छन्तितेदुष्टाममपुत्रंममौरसं ॥ तस्मात्तेनजनिष्यंतिस्वासुयोषित्सुपुत्रकान् ॥ ५५ ॥ एवंशप्त्वासुरान्गौरीशौचशालामुपागमत् ॥ आहूयमालिनींस्नातुंमतिंचक्रेतपोधन ॥ ५६ ॥ मालिनीसुरभिंगृह्यश्लक्ष्णमुद्वर्तनंशुभा ॥ देव्यंगमुद्वर्तयतेकराभ्यांकनकप्रभा ॥ ५७ ॥ तच्छौचंपार्वतीनैवंमेनेकीटगुणेनहि ॥ उद्वर्त्यपार्वतींतांतुशुभेनोद्वर्तनेनच ॥ ५८ ॥ मालिनींतूर्णमगमद्गृहंस्नानस्यकारणात् ॥ तस्यांगतायांशैलेयीमलाच्चक्रेगजाननं ॥ ५९ ॥ चतुर्भुजंपीनवक्षपुरुषंलक्षणान्वितं ॥ कृत्वोत्ससर्जतंभूम्यांस्थिताभद्रासनेपुनः ॥ ६० ॥ मालिनीतच्छिरःस्नानंददौविहसतीतदा ॥ ईषद्धासमुखींदृष्ट्वामालिनींप्राहनारद ॥ ६१ ॥ किमर्थंभीरुशनकैर्हसासिलमतीवच ॥ साथोवाचहसाम्येवंभवत्यास्तनयःकिल ॥ ६२ ॥ भविष्यतीतिदेवेनप्रोक्तोनंदिगणाधिपः ॥ तच्छ्रुत्वाममहासोऽयंसंजातोद्यकृशोदरि ॥ ६३ ॥ यस्माद्देविपुत्रकामात्वंच्छंकरोविनिवारितः ॥ एतच्छ्रुत्वावचोदेवीसस्नौतत्रविधानतः ॥ ६४ ॥ स्नात्वाचार्च्यशंकरंभक्त्यासमभ्यागाद्गृहंप्रति ॥ ततःशंभुःसमागत्यतस्मिन्भद्रासनेपिच ॥ ६५ ॥ स्नातस्तस्यततस्तस्मात्स्थितःसमलपूरुषः ॥ उमास्वेदभवस्वेदंजलभूमिसमन्वितं ॥ ६६ ॥ तत्संपर्कात्समुत्तस्थौफूत्कृत्यकरमुत्तमं ॥ अपत्यंहिविदित्वाचप्रीतिमान्भुवनेश्वरः ॥ ६७ ॥

तंचादायहरोनंदिमुवाचभगनेत्रहा ॥ रुद्रःस्नात्वार्च्यदेवादीन्वाद्भिरग्निंपीतृनपि ॥ ६८ ॥ जप्त्वासहस्रनामानमुमा-
पार्श्वमुपागतः ॥ समेत्यदेवींविहसन्शंकरःशूलधृग्वचः ॥ ६९ ॥ प्राहत्वंपश्यशैलेयित्वत्सुतंगुणसंयुतं ॥ इत्युक्ताप-
र्वतसुताह्युपेत्यापश्यदद्भुतं ॥ ७० ॥ यस्त्वदंगमलाद्दिव्यःकृतोगजमुखोनरः ॥ ततःप्रीतागिरिसुतातंपुत्रंपरिपस्वजे
॥ ७१ ॥ मूर्ध्निचैनमुपाघ्रायततःशर्वोब्रवीदुमां ॥ नायकेनविनादेवीमयाभूतोपिपुत्रकः ॥ ७२ ॥ यस्माज्जातस्ततोना-
म्नाभविष्यतिविनायकः ॥ एषविघ्नसहस्राणिदेवादीनांहनिष्यति ॥ ७३ ॥ पूजयिष्यंतिदेवाश्चदेविलोकाश्चराचराः ॥
इत्येवमुक्त्वादेव्यास्तुदत्तवांस्तनयंसहि ॥ ७४ ॥ सहायंतुगणश्रेष्ठंनाम्नाख्यातंघटोदरं ॥ तथामातृगणाघोराभूता
विघ्नकराश्चये ॥ ७५ ॥ तेसर्वेपरमेशेनदेव्याःप्रीत्योपपादिताः ॥ देवीचतंसुतंदृष्ट्वापरांमुदमवापच ॥ ७६ ॥ रेमेथशं-
भुनासार्द्धंमंदिरेचारुकंदरे ॥ एवंभूयोभवद्देवीइयंकात्यायनीविभो ॥ याजघानमहादैत्यौपुराशुंभनिशुंभकौ ॥ ७७ ॥
एतत्तवोक्तंवचनंसुभाष्यंयथोद्भवःपर्वततोमृडान्याः ॥ स्वर्ग्यंयशस्यंचतथाऽघहारिआख्यानमूर्जस्करमद्रिपुत्र्याः ॥७८॥
इतिश्रीवामनपुराणेउमासंभवेविनायकोत्पत्तिर्नामचतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ ॥
पुलस्त्यउवाच ॥ कश्यपस्यदनुर्नाम्नाभार्यासीद्द्विजसत्तम ॥ तस्याःपुत्रत्रयंचासीत्सहस्राक्षाद्बलाधिकं ॥ १ ॥ ज्येष्ठः
शुंभइतिख्यातोनिशुंभश्चापरोऽसुरः ॥ तृतीयोनमुचिर्नाममहाबलसमन्वितः ॥ २ ॥ योऽसौनमुचिरित्येवंख्यातोदनु-
सुतोऽसुरः ॥ तंहंतुमिच्छतिहरिःप्रगृह्यकुलिशंकरे ॥ ३ ॥ त्रिदिवेशंसमायांतंनमुचिस्तुभयादथ ॥ प्रविवेशरथंभानोस्त-
तोनाशकदच्युतः ॥ ४ ॥ शक्रस्तेनाथसमयंप्रचक्रेसमहामनाः ॥ अवध्यत्वंवरंप्रादाच्छस्त्रैरस्त्रैश्चनारद ॥ ५ ॥ ततोऽ

१ हरिष्यंतीति पा० ।

वपुरस्सरः ॥ २४ ॥ सचोभौप्राहदैत्योसौशुंभोनामसुरार्दनः ॥ कनीयानस्यचभ्राताद्वितीयोहिनिशुंभकः ॥ २५ ॥
एतावाश्रित्यतांदुष्टांमहिषघ्नींनसंशयः ॥ अहंविवाहयिष्यामिरत्नभूतांजगत्रये ॥ २६ ॥ चंडउवाच ॥ नसम्यगुक्तंभव-
तारत्नाहौसिनसांप्रतं ॥ यःप्रभुःस्यात्सरत्नार्हस्तस्माच्छुंभाययोज्यतां ॥ २७ ॥ तदाचचक्षेशुंभायनिशुंभायचकौशि-
कीं ॥ भूयोपितद्विधांजातांकौशिकींरूपशालिनीं ॥ २८ ॥ ततःशुंभोनिजंदूतंसुग्रीवंनामदानवं ॥ दैत्यंचप्रेषयामास
सकाशंविंध्यवासिनीं ॥ २९ ॥ सगत्वातद्वचःश्रुत्वादेव्यागत्यमहासुरः ॥ निशुंभशुंभावाहेदंमन्युनाभिपरिप्लुतः ॥ ३० ॥
सुग्रीवउवाच ॥ युवयोर्वचनाद्देवीप्रदिष्टादैत्यनायकौ ॥ गतवानहमद्यैवतामहंवाक्यमब्रुवं ॥ ३१ ॥ यथाशुंभोतिविख्या-
तःककुदंदानवेष्वपि ॥ सत्वांप्राहमहाभागेप्रभुरस्मिजगत्रये ॥ ३२ ॥ यानिस्वर्गेमहीपृष्ठेपातालेचापिसुंदरि ॥ र-
त्नानिसांतितावंतिममवेश्मनिनित्यशः ॥ ३३ ॥ त्वमुक्ताचंडमुंडाभ्यांरत्नभूताकृशोदरी ॥ तस्माद्भजस्वमांवात्वंनिशुंभं-
वाममानुजं ॥ ३४ ॥ साचाहमांविहसतीशृणुसुग्रीवमद्वचः ॥ सत्यमुक्तंत्रिलोकेशःशुंभोरत्नार्हएवच ॥ ३५ ॥ किंत्व-
स्तिदुर्विनीतायाहृदयेमेमनोरथः ॥ योमांविजयतेयुद्धेसभर्तास्यान्महासुरः ॥ ३६ ॥ मयाचोक्ताऽवलिप्तासियोजयेत्स-
सुरासुरान् ॥ सत्वांकथंनजयतेसात्वमुत्तिष्ठभामिनी ॥ ३७ ॥ साऽथमांप्राहकिंकुर्मोयदनालोचितःकृतः ॥ मनोरथस्तु-
तद्गच्छशुंभायत्वंनिवेदय ॥ ३८ ॥ तयैवमुक्तस्त्वभ्यागांत्वत्सकाशंमहासुर ॥ तांचाग्निकोटिसंकाशांमत्वैवंकुरुयत्क्षमं
॥ प्राहदूतंत्विदंशुंभोदानवंधूम्रलोचनं ॥ ३९ ॥ शुंभउवाच ॥ धूम्राक्षगच्छतांदुष्टांकेशाकर्षणविव्हलां ॥ सापराधांय-
थादासींकृत्वाशीघ्रमिहानय ॥ ४० ॥ यश्चास्याःपक्षकृत्कश्चिद्भविष्यतिमहाबलः ॥ सहंतव्योऽविचार्यैवयदिहिस्यात्पि-
तामहः ॥ ४१ ॥ सएवमुक्तःशुंभेनधूम्राक्षोऽक्षौहिणीशतैः ॥ वृतःषड्भिर्महातेजाविंध्यंगिरिमुपाद्रवत् ॥ ४२ ॥ तत्रह-

वध्यत्वमाज्ञायशस्त्रैरस्त्रैश्चनारद ॥ संत्यज्यभास्कररथंपातालमुपयादथ ॥ ६ ॥ सनिमज्जन्नपिजलेसामुद्रंफेनमुत्तमं ॥ ददर्शदानवपतिस्तंप्रगृह्येदमब्रवीत् ॥ ७ ॥ यदुक्तंदेवपतिनावासवेनवचोस्तुतत् ॥ अयंस्पृशतुमांफेनःकराभ्यांगृह्यदानवः ॥ ८ ॥ मुखनासादिकर्णादीन्समापूर्ययथेच्छया ॥ तस्मिन्शक्रोसृजद्वज्रमंतर्हितमपीश्वरः ॥ ९ ॥ तेनासौरुद्धनासास्यःपपातचममारच ॥ समयेनतथानष्टेब्रह्महत्यास्पृशद्धरिं ॥ १० ॥ सचैतत्तीर्थमासाद्यस्नातःपापादमुच्यत ॥ ततोऽस्यभ्रातरौवीरौक्रुद्धौशुंभनिशुंभकौ ॥ ११ ॥ उद्योगंसुमहत्कृत्वासुरान्बाधितुमागतौ ॥ सुरास्तेपिसहस्राक्षंपुरस्कृत्यविनिर्ययुः ॥ १२ ॥ जितास्त्वाक्रम्यदैत्याभ्यांसबलाःसपदानुगाः ॥ शक्रस्याहृत्यचगजोयाम्यश्चमहिषोबलात् ॥ १३ ॥ वरुणस्यमणिंछत्रंगदांवैमाधवस्यच ॥ निधयःशंखपद्माद्याहृतास्त्वाक्रम्यदानवैः ॥ १४ ॥ त्रिलोकीवशगाचास्तेऽनयोर्नारददैत्ययोः ॥ आजग्मतुर्महीपृष्ठंददर्शातेमहासुरं ॥ १५ ॥ रक्तबीजमथोचुस्तेकोभवानितिसोऽब्रवीत् ॥ सचाहंदैत्योस्मिविभोसचिवोमहिषस्यतु ॥ १६ ॥ रक्तबीजेतिविख्यातोमहावीर्योमहाभुजः ॥ अमात्यौरुचिरौवीरौचंडमुंडावितिश्रुतौ ॥ १७ ॥ तावास्तांसलिलेमग्नौभयाद्देव्यामहाभुजौ ॥ यस्त्वासीत्प्रभुरस्माकंमहिषोनामदानवः ॥ १८ ॥ निहतःसमहादेव्याविंध्यशैलेसुविस्तृते ॥ भवंतौकस्यतनयौकिंवानाम्नापरिश्रुतौ ॥ किंवीर्यौकिंप्रभावौचएतच्छंसितुमर्हथ ॥ १९ ॥ शुंभनिशुंभावूचतुः ॥ अहंशुंभइतिख्यातोदनोःपुत्रस्तथौरसः ॥ निशुंभोयंममभ्राताकनीयान्शक्रदर्पहा ॥ २० ॥ अनेनबहुशोदेवाःसेंद्ररुद्रदिवाकराः ॥ समेत्यनिर्जितावीरायेचान्येबलवत्तराः ॥ २१ ॥ तदुच्यतांकथंदैत्योनिहतोमहिषासुरः ॥ यावत्तान्घातयिष्यावःस्वसैन्यपरिवारितौ ॥ २२ ॥ इत्थंतयोस्तुवदतोर्नर्मदायास्तटेमुने ॥ जलवासाद्विनिष्क्रांतौचंडमुंडौचदानवौ ॥ २३ ॥ ततोभ्येत्यासुरश्रेष्ठौरक्तबीजंसमाश्रितौ ॥ ऊचतुर्वचनंश्लक्ष्णंकोयंत-

तंचादायहरोनंदिमुवाचभगनेत्रहा ॥ रुद्रःस्नात्वार्च्यदेवादीन्वाभ्दिरग्निपीतृनपि ॥ ६८ ॥ जप्त्वासहस्रनामानमुमा-
पार्श्वमुपागतः ॥ समेत्यदेवींविहसन्शंकरःशूलधृग्वचः ॥ ६९ ॥ प्राहत्वंपश्यशैलेयिस्वत्सुतंगुणसंयुतं ॥ इत्युक्तापर्-
वंतसुताह्युपेत्यापश्यदद्भुतं ॥ ७० ॥ यस्त्वदंगमलाद्दिव्यःकृतोगजमुखोनरः ॥ ततःप्रीतागिरिसुतातंपुत्रंपरिपस्वजे
॥ ७१ ॥ मूर्ध्निचैनमुपाघ्रायततःशर्वोब्रवीदुमां ॥ नायकेनविनादेवीमयाभूतोपिपुत्रकः ॥ ७२ ॥ यस्माज्जातस्ततोना-
म्नाभविष्यतिविनायकः ॥ एषविघ्नसहस्राणिदेवादीनांहनिष्यति[1] ॥ ७३ ॥ पूजयिष्यंतिदेवाश्चदेविलोकाश्चराचराः ॥
इत्येवमुक्त्वादेव्यास्तुदत्तवांस्तनयंसहि ॥ ७४ ॥ सहायंतुगणश्रेष्ठंनाम्नाख्यातंघटोदरं ॥ तथामातृगणाघोराभूता
विघ्नकराश्चये ॥ ७५ ॥ तेसर्वेपरमेशेनदेव्याःप्रीत्योपपादिताः ॥ देवीचतंसुतंदृष्ट्वापरांमुदमवापच ॥ ७६ ॥ रेमेथशं-
भुनासार्द्धंमंदिरेचारुकंदरे ॥ एवंभूयोभवद्देवीइयंकात्यायनीविभो ॥ याजघानमहादैत्यौपुराशुंभनिशुंभकौ ॥ ७७ ॥
एतत्तवोक्तंवचनंसुभाष्यंयथोद्भवःपर्वततोमृडान्याः ॥ स्वर्ग्यंयशस्यंचतथाऽघहारिआख्यानमूर्ज्जस्करमद्रिपुत्र्याः ॥७८॥
इतिश्रीवामनपुराणेउमासंभवेविनायकोत्पत्तिर्नामचतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ ॥
पुलस्त्यउवाच ॥ कश्यपस्यदनुर्नाम्नाभार्यासीद्द्विजसत्तम ॥ तस्याःपुत्रत्रयंचासीत्सहस्राक्षाद्बलाधिकं ॥ १ ॥ ज्येष्ठः
शुंभइतिख्यातोनिशुंभश्चापरोऽसुरः ॥ तृतीयोनमुचिर्नाममहाबलसमन्वितः ॥ २ ॥ योऽसौनमुचिरित्येवंख्यातोदनु-
सुतोऽसुरः ॥ तंहंतुमिच्छतिहरिःप्रगृह्यकुलिशंकरे ॥ ३ ॥ त्रिदिवेशंसमायांतंनमुचिस्तुभयादथ ॥ प्रविवेशरथंभानोस्त-
तोनाशकदच्युतः ॥ ४ ॥ शक्रस्तेनाथसमयंप्रचक्रेसमहामनाः ॥ अवध्यत्वंवरंप्रादाच्छस्त्रैरस्त्रैश्चनारद ॥ ५ ॥ ततोऽ

[1] हरिष्यतीति पा० ।

सिखट्वांगेनमहासुरं ॥ सपपातहतोभूम्यांछिन्नमूलइवद्रुमः ॥ ६१ ॥ ततस्तंपतितंदृष्ट्वापशोरिवविभावरी ॥ कोशमु-
त्कर्त्तयामासकरादिचरणांतिकं ॥ ६२ ॥ साचकोशंसमादायबबंधविमलाजटाः ॥ एकानबंधमगमत्तामुत्पाट्याक्षिप-
द्भुवि ॥ ६३ ॥ साजातासुतरांरौद्रीतैलाभ्यक्तशिरोरुहा ॥ कृष्णार्धमर्धशुक्लंचधारयंतीस्वकंवपुः ॥ ६४ ॥ साब्रवी-
द्वरमेकंतुमारयामिमहासुरं ॥ तस्यानामतदाचक्रेचंडमारीतिविश्रुतं ॥ ६५ ॥ प्राहगच्छस्वसुभगेचंडमुंडाविहानय ॥
स्वयंहिमारयिष्यामितावानेतुंत्वमर्हसि ॥ ६६ ॥ श्रुत्वैवंवचनंदेव्याःसाभ्यद्रवततावुभौ ॥ प्रदुद्रुवतुर्भयात्तौदिशमाश्रि-
त्यदक्षिणां ॥ ६७ ॥ ततस्तावपिवेगेनप्राधावत्त्यक्तवाससा ॥ साधिरुह्यमहावेगंरासभंगरुडोपमं ॥ ६८ ॥ यतोग-
तौहितौदैत्यौतत्रैवानुययौशिवा ॥ साददर्शतदापौंड्रंमहिषंवैयमस्यच ॥ ६९ ॥ सातस्योत्पाटयामासविषाणंभुजगाकृ-
तिं ॥ तंप्रगृह्यकरेणैवदानवानन्वगाज्जवात् ॥ ७० ॥ तौचापिभूमिंसंत्यज्यजग्मतुर्गगनंतदा ॥ वेगेनाभिसृतासाचरा-
सभेनमहेश्वरी ॥ ७१ ॥ ततोददर्शगरुडंपन्नगेंद्रंविषादिषु ॥ कर्कोटकंसदृष्ट्वैवऊर्ध्वरोमाव्यजायत ॥ ७२ ॥ भयार्त्तश्चैव
गरुडोमांसपिंडोपमोबभौ ॥ न्यपतंस्तस्यपत्राणिरौद्राणिहिपतत्रिणः ॥ ७३ ॥ खगेंद्रपत्राण्यादायनागंकर्कोटकंतथा ॥
वेगेनाथासरद्देवीचंडमुंडौभयातुरौ ॥ ७४ ॥ संप्राप्तौचतदादेव्याचंडमुंडौमहासुरौ ॥ बद्धौकर्कोटकेनैवबध्वाविंध्यमुपा-
गमत् ॥ ७५ ॥ निवेदयित्वाकौशिक्याःकोशमादायभैरवं ॥ शिरोभिर्दानवेंद्राणांतार्क्ष्यपत्रैश्चशोभनैः ॥ ७६ ॥
कृत्वास्त्रजमनौपम्यांचंडिकायैन्यवेदयत् ॥ घर्घरांचमृगेंद्रस्यचर्मणःसासमर्पयत् ॥ ७७ ॥ स्त्रजमन्यांखगेंद्रस्यपत्रैर्मूर्ध्नि-
निबध्यच ॥ आत्मनासापपौपानंरुधिरंदानवेष्वपि ॥ ७८ ॥ चंडंत्वादायमुंडंचमुंडंचासुरनायकौ ॥ चकारकुपितादु-
र्गाविशिरस्कौमहासुरौ ॥ ७९ ॥ तयोरेवतदादेव्याशेखरःशिरसाकृतः ॥ कृत्वाजगामकौशिक्याःसकाशंशर्वयासह

॥ ८० ॥ समेत्यसाऽब्रवीद्देविगृह्यतांशेखरोत्तमः ॥ ग्रथितोदैत्यशीर्षाभ्यांनागराजेनवेष्टितः ॥ ८१ ॥ तंशेखरंशिवागृह्यचामुंडामूर्ध्निविस्तृतं ॥ बबंधप्राहचैवैनांकृतंकर्मसुदारुणं ॥ ८२ ॥ शेखरंचंडमुंडाभ्यांयस्माद्धारयतेशुभं ॥ तस्माल्लोकेतवख्यातिश्चामुंडेतिभविष्यति ॥ ८३ ॥ इत्येवमुक्त्वावचनंत्रिनेत्रांतांचंडमुंडस्रजधारिणींवै ॥ दिग्वाससंचाभ्यवदत् प्रतीतानिषूदयस्वारिबलान्यमूनि ॥ ८४ ॥ सात्वेवमुक्ताऽथविषाणकोट्यासवेगयुक्तेनशरासनेन ॥ निषूदयंतीरिपुसैन्यमुग्रंचचारचान्यानसुरांश्चखाद ॥ ८५ ॥ ततोंबिकायास्त्वथचंडमुंडौमार्याचसिंहेनचभूतसंघैः ॥ निपात्यमानादनुपुंगवास्तेककुद्मिनंसिंहमुपाश्रयंतं ॥ ८६ ॥ इतिश्रीवामनपुराणेदेवीमाहात्म्येचंडमुंडवधोनामपञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुलस्त्यउवाच ॥ चंडमुंडौचनिहतौदृष्ट्वासैन्यंचविद्रुतं ॥ समादिदेशातिबलंरक्तबीजंमहासुरं ॥ १ ॥ अक्षौहिणीनांत्रिंशद्भिःकोटिभिःपरिवारितं ॥ तमापतंतंदैत्यानांबलंदृष्ट्वैवचंडिका ॥ २ ॥ मुमोचसिंहनादंवैकाल्यासहमहेश्वरी ॥ निनदंत्यास्ततोदेव्याब्रह्माणीमुखतोऽभवत् ॥ ३ ॥ हंसयुक्तविमानस्थासाक्षसूत्रकमंडलुः ॥ माहेश्वरीत्रिनेत्राचवृषारूढात्रिशूलिनी ॥ ४ ॥ महाहिवलयारौद्राजाताकुंडलिनीक्षणात् ॥ ततोऽथजाताकौमारीबर्हिपत्राचशक्तिनी ॥ ५ ॥ समुद्भूताचदेवर्षेमयूरवरवाहना ॥ बाहुभ्यांगरुडारूढाशंखचक्रगदासिनी ॥ ६ ॥ शार्ङ्गबाणधराजातावैष्णवीरूपशालिनी ॥ महोग्रमुशलारौद्रादंष्ट्रोल्लिखितभूतला ॥ ७ ॥ वाराहीपृष्ठतोजाताशेषनागोपरिस्थिता ॥ विक्षिपंतेसटाक्षेपैर्ग्रहनक्षत्रतारकाः ॥ ८ ॥ नखिनीहृदयाज्जातानारसिंहीसुदारुणा ॥ ताभिर्निपत्यमानंतुनिरीक्ष्यबलमासुरः ॥ ९ ॥ ननादभूयोनादान्वैचंडिकानिर्भयारिपून् ॥ तन्निनादंमहच्छ्रुत्वात्रैलोक्यप्रतिपूरकं ॥ १० ॥ समाजगामदेवेशःशूलपाणि-

स्त्रिलोचनः ॥ अभ्येत्यवंद्यचैवैनांप्राहवाक्यंवदांबिके ॥ ११ ॥ समायातोस्मिवैदुर्गेदेह्याज्ञांकिंकरोस्मिते ॥ तद्वाक्यस-
मकालंचदेव्यादेहोद्भवाशिवा ॥ १२ ॥ जातासाचाहदेवेशंगच्छदौत्येनशंकर ॥ ब्रूहिशुंभंनिशुंभंचयदिजीवितुमिच्छथ
॥ १३ ॥ तद्गच्छध्वंदुराचाराःसप्तमंहिरसातलं ॥ वासवोलभतांस्वर्गंदेवाःसंतुगतव्यथाः ॥ १४ ॥ यजंतुब्राह्मणाद्यामी
वर्णायज्ञांश्चसांप्रतं ॥ नोचेद्बलावलेपेनभवंतोयोद्धुमिच्छथ ॥ १५ ॥ तदागच्छध्वमव्यग्राएषाहंविनिषूदये ॥ यतस्तु
साशिवंदौत्येन्ययोजयतनारद ॥ १६ ॥ ततोनाममहादेव्याःशिवदूतीत्यजायत ॥ तेचापिशंकरवचःश्रुत्वागर्वसमन्वि-
तं ॥ हुंकृत्वाभ्यद्रवन्सर्वेयत्रकात्यायनीस्थिता ॥ १७ ॥ ततःशरैःशक्तिभिरंकुशैर्वरैःपरश्वधैःशूलभृशुंडिपट्टिशैः ॥ प्रासैः
सुतीक्ष्णैःपरिघैश्चविस्तृतैर्ववर्षतुर्दैत्यवरौसरस्वतीं ॥ १८ ॥ साचापिबाणैर्वरकार्मुकच्युतैश्चिच्छेदशस्त्राण्यथबाहुभिःसह ॥
जघानचान्यान्रणचंडविक्रमामहासुरान्बाणशतैर्महेश्वरी ॥ १९ ॥ मारीत्रिशूलेनजघानचान्यान्खट्वांगपातैरपरांश्च
कौशिकी ॥ महाजलक्षेपहतप्रभावान्ब्राह्मीतथान्यानसुरांश्चकार ॥ २० ॥ माहेश्वरीशूलविदारितोरसश्चकारदग्धां-
श्चपरांश्चवैष्णवी ॥ शक्त्याकुमारीकुलिशेनचंडीतुंडेनचक्रेणवराहरूपिणी ॥ २१ ॥ नखैर्विभिन्नानपिनारसिंहीअट्टा-
ट्टहासैरपिरुद्रदूती ॥ रुद्रस्त्रिशूलेनतथैवचान्यान्विनायकश्चापिपरश्वधेन ॥ २२ ॥ एवंहिदेव्याविविधैस्तुरूपैर्निपा-
त्यमानादनुपुंगवास्ते ॥ पेतुःपृथिव्यांभुविचापिभूतैस्तेभक्ष्यमाणाःप्रलयंप्रजग्मुः ॥ २३ ॥ तेवध्यमानास्त्वथदेवता-
भिर्महासुरामातृभिराकुलाश्च ॥ विमुक्तकेशास्तरलेक्षणाभयात्तेरक्तबीजंशरणंहिजग्मुः ॥ २४ ॥ सरक्तबीजःसहसाभ्यु-
पेत्यवरास्त्रमादायचमातृमंडलं ॥ विद्रावयन्भूतगणान्समंताद्विवेशकोपात्स्फुरिताधरश्च ॥ २५ ॥ तमापतंतंप्रस-

१ ब्राह्मणाद्या अमीतिच्छेदः संधिरार्षः । २ सुरेश्वरी मिति पा० ।

मीक्ष्यमातरःशस्त्रैःशिताग्रैर्दितिजंववर्षुः ॥ योरक्तबिंदुर्न्यपतत्पृथिव्यांसतत्प्रमाणस्त्वपरोऽपिजज्ञे ॥ २६ ॥ ततश्चमा-
रीस्वयमंबिकाऽथप्रहन्यतांसांप्रतमित्युवाच ॥ पिबस्वचंडेरुधिरंत्वरातेर्वितन्यवक्त्रंवडवानलाभं ॥ २७ ॥ सात्वेवमुक्ता
वरदांबिकाहिवितत्यवक्त्रंविकरालमुग्रं ॥ तुष्टंनभःस्पृक्पृथिवींस्पृगास्यंकृत्वाचिरंतिष्ठतिचर्ममुंडा ॥ २८ ॥ ततोऽबिका
केशविकर्षणाकुलंकृत्वारिपुंप्राक्षिपत्स्ववक्त्रे ॥ बिभेदशूलेनतथाप्युरस्तःक्षतोद्भवोवान्यपतंश्चवक्त्रे ॥ २९ ॥ ततस्तुशोपं
प्रजगामरक्तंरक्तक्षयेहीनबलोबभूव ॥ तंहीनवीर्यंशतधाचकारचक्रेणचामीकरभूषितेन ॥ ३० ॥ तस्मिन्हतेवैदनुसै-
न्यनाथेतेदानवादीनतरंविनेदुः ॥ हाताहाभ्रातरितिब्रुवंतःक्वयासितिष्ठस्वमुहूर्तमेहि ॥ ३१ ॥ तथापरेविलुलितकेश-
पाशाविशीर्णचर्माभरणादिगंबराः ॥ निपातिताधरणितलेमृडान्याप्रदुद्रुवुर्गिरिवरमुह्यदैत्याः ॥ ३२ ॥ विशीर्णचर्मा-
युधभूषणंतद्बलंनिरीक्ष्यैवहिदानवेंद्रः ॥ विकीर्णचक्राक्षरथोनिशुंभःक्रोधान्मृडानींसमुपाजगाम ॥ ३३ ॥ खड्गंसमादाय
चचर्मभास्वरंधुन्वन्शिरःप्रेक्ष्यचरूपमस्याः ॥ संस्तभ्यमोहंज्वरपीडितोथचित्रेयथामौलिर्लिखितोबभूव ॥ ३४ ॥ तंस्तं-
भितंवीक्ष्यसुरारिमग्रेप्रोवाचदेवीवचनंविहस्य ॥ अनेनवीर्येणसुरास्त्वयाजिताअनेनमांप्रार्थयसेबलेन ॥ ३५ ॥ श्रुत्वातु
वाक्यंकौशिक्यादानवःसुचिरादिव ॥ प्रोवाचचिंतयित्वाथवचनंवदतांवरः ॥ ३६ ॥ सुकुमारशरीरोहंमच्छस्त्रपतनाद-
पि ॥ शतधायास्यतेभीरुआमपात्रमिवांभसि ॥ ३७ ॥ एवंसंचिंतयन्नर्थंत्वांप्रहर्तुंनसुंदरि ॥ करोमिबुद्धिंतस्मात्त्वंमांभ-
जस्वायतेक्षणे ॥ ३८ ॥ ममखड्गनिपातंहिनेंद्रोधारयितुंक्षमः ॥ निवर्तयमतिंयुद्धाद्भार्यामेभवसांप्रतं ॥ ३९ ॥ इत्थंनि-
शुंभवचनंश्रुत्वायोगेश्वरीमुने ॥ विहस्यभावगंभीरंनिशुंभंवाक्यमब्रवीत् ॥ ४० ॥ नाजिताऽहंरणेवीरभवेभार्याहिकस्य
चित् ॥ भवान्यदीहभार्यार्थीततोमांजयसंयुगे ॥ ४१ ॥ इत्येवमुक्तेवचनेखड्गमुद्भ्राम्यदानवः ॥ प्रचिक्षेपतदावेगात्कौ-

शिकींप्रतिनारद ॥ ४२ ॥ तमापतंतंनिस्त्रिंशंषड्भिर्बर्हणवाजिभिः ॥ चिच्छेदचर्मणासार्द्धंतदद्भुतमिवाभवत् ॥ ४३ ॥ खड्गेसचर्मणिच्छिन्नेगदांगृह्यमहासुरः ॥ समाद्रवत्कोशभवांवायुवेगसमोजवे ॥ ४४ ॥ तस्यापततएवाशुकरौश्लिष्टौस-मौदृढौ ॥ गदयासहचिच्छेदक्षुरप्रेणरणेंबिका ॥ ४५ ॥ तस्मिन्निपतितेरौद्रेसुरशत्रौभयंकरे ॥ चंड्याद्यामातरोहृष्टा-श्चक्रुःकिलकिलाध्वनिं ॥ ४६ ॥ गगनस्थास्ततोदेवाःशतक्रतुपुरोगमाः ॥ जयस्वविजयेत्यूचुर्हृष्टाःशत्रौनिपातिते ॥ ४७ ॥ ततस्तूर्याण्यवाद्यंतभूतसंघैःसमंततः ॥ पुष्पवृष्टिंचमुमुचुःसुराःकात्यायनींप्रति ॥ ४८ ॥ निशुंभंपतितंदृष्ट्वा शुंभःक्रोधान्महामुने ॥ वृंदारकंसमारुह्यप्रासपाणिःसमभ्यगात् ॥ ४९ ॥ तमापतंतंदृष्ट्वाथसगजंदानवेश्वरं ॥ जग्राह चतुरोबाणान्चंद्रार्धाकारवर्चसः ॥ ५० ॥ क्षुरप्राभ्यांसमंपादौद्वौचिच्छेदद्विपस्यसा ॥ द्वाभ्यांकुंभेजघानाथहसंतीलीलयां-बिका ॥ ५१ ॥ निकृत्ताभ्यांगजःपद्भ्यांनिपपातयथेच्छया ॥ शक्रवज्रसमाक्रांतंशैलराजशिरोयथा ॥ ५२ ॥ तस्या-वर्जितनागस्यशुंभस्याप्युत्पतिष्यतः ॥ शिरश्चिच्छेदबाणेनकुंडलालंकृतंशिवा ॥ ५३ ॥ छिन्नेशिरसिदैत्येंद्रोनिपपातस कुंजरः ॥ ययासमहिषःक्रौंचोमहासेनेनसंहतः ॥ ५४ ॥ श्रुत्वासुरासुररिपूनिहतौमृडान्यासेंद्राःससूर्यमरुदश्विवसुप्र-धानाः ॥ आगत्यतंगिरिवरंविनयावनम्रादेव्यास्तदाश्रुतिसुखांस्विदमीरयंतः ॥ ५५ ॥ देवाऊचुः ॥ ॐ ॥ नमोस्तुते भगवतिपापनाशिनिनमोस्तुतेसुररिपुदर्पशातनि ॥ नमोस्तुतेहरिहरराज्यदायिनिनमोस्तुतेमखभुजकार्यकारिणि ॥ ॥ ५६ ॥ नमोस्तुतेत्रिदशरिपुक्षयंकरिनमोस्तुतेशतमखपादपूजिते ॥ नमोस्तुतेमहिषविनाशकारिणिनमोस्तुतेहरिहय भास्करस्तुते ॥ ५७ ॥ नमोस्तुतेऽष्टादशबाहुशालिनिनमोस्तुतेशुंभनिशुंभघातिनि ॥ नमोस्तुतेचार्तिहरेत्रिशूलिनि नमोस्तुनारायणिचक्रधारिणि ॥ ५८ ॥ नमोस्तुवाराहिसदाधराधरेत्वांनारसिंहिप्रणतानमोस्तुते ॥ नमोस्तुतेवज्रध-

रेगजध्वजेनमोस्तुकौमारिमयूरवाहिनि ॥ ५९ ॥ नमोस्तुपैतामहिहंसवाहनेनमोस्तुमालाविकटेसुकेशिनि ॥ नमोस्तुते
रासभपृष्ठवाहनिनमोस्तुसर्वार्त्तिहरेजगन्मये ॥ ६० ॥ नमोस्तुविश्वेश्वरिपाहिविश्वंनिषूदयारिंद्विजदेवतानां ॥ नमो
स्तुतेसर्वमयित्रिनेत्रेनमोनमस्तेवरदेप्रसीद ॥ ६१ ॥ ब्रह्माणीत्वंमृडानीवरशिखिगमनाशक्तिहस्ताकुमारीवाराहीत्वं
सुवक्त्राखगपतिगमनावैष्णवीत्वंसशार्ङ्गी ॥ दुर्दर्शानारसिंहीघुरुघुरितरवात्वंतथैंद्रीसवज्रात्वंमारीचर्ममुंडाशवगमनरता
योगिनीयोगसिद्धा ॥६२॥ ॐ॥ नमस्तेत्रिनेत्रेभगवतितवचरणानुच्छ्रितायैअहरहर्विनतशिरोधरांसनस्याः ॥ नहिनहि
परमस्त्यशुभंसततंस्तुतिबलिकुसुमकराःसततंये ॥६३॥ ॐ॥एवंस्तुतासुरवरैःसुरशत्रुनाशिनीप्राहप्रहस्यसुरसिद्धमहर्षि-
वर्यान् ॥ प्राप्तोमयाद्भुततमोभवतांप्रसादात्संग्राममूर्ध्निसुरशत्रुजयःप्रमर्दात् ॥ ६४ ॥ इमांस्तुतिंभक्तिपरानरोत्तमाभव-
द्भिरुक्तामनुकीर्त्तयंति ॥ दुःस्वप्ननाशोभवितानसंशयोवरस्तथान्योव्रियतामभीप्सितः ॥ ६५ ॥ देवाऊचुः ॥ यदिवर-
दाभवतीत्रिदशानांद्विजशिशुगोषुयतस्वंहिताय ॥ पुनरपिदेवरिपूनपरांस्त्वंप्रदहहुताशनतुल्यशरीरे ॥ ६६ ॥ देव्यु-
वाच ॥ भूयोवधिष्यामिसुरारिमुत्तमंसंभूयनंदस्यगृहेयशोदया ॥ तत्रावतीर्णालवणंतथापरौशुंभंनिशुंभंदशनप्रहारिणौ
॥ ६७ ॥ भूयःसुरास्तिष्ययुगेनिराशनान्निरीक्ष्यमारीचगृहेशतक्रतोः ॥ संभूयदेव्याइतिसप्तधामयासुरान्भरिष्यामि
चशाकसंकरैः ॥ ६८ ॥ भूयोविपक्षक्षपणायदेवाविंध्येभविष्याम्यृषिरक्षणार्थं ॥ दुर्वृत्तचेष्टान्विनिहत्यदैत्यान्भूयःसमे-
ष्यामिसुराजयंहि ॥ ६९ ॥ यदारुणाक्षोभवितामहासुरस्तदाभविष्यामिहितायदेवताः ॥ महालिरूपेणविनष्टजीवि-
तंकृत्वासमेष्यामिपुनस्त्रिविष्टपं ॥ ७० ॥ पुलस्त्यउवाच ॥ इत्येवमुक्त्वावरदासुराणांकृत्वाप्रणामंद्विजपुंगवानां ॥ वि-
सृज्यभूतानिजगामदेवीखंसिद्धसंघैरनुगम्यमाना ॥ ७१ ॥ इदंपुराणंपरमंपवित्रंदेव्याजयंमंगलदायिपुंसां ॥ श्रोतव्य-

मेतन्नियतैःसदैवरक्षोघ्नमेतद्भगवानुवाच ॥ ७२ ॥ इतिश्रीवामनपुराणेदेवीमाहात्म्येशुंभनिशुंभवधोनामषट्पंचाशत्त-
मोऽध्यायः ॥ ५६ ॥ ॥ ॥ ॥ ॥ ॥ ॥
नारदउवाच ॥ कथंसमहिषःक्रौंचोभिन्नःस्कंदेनसुव्रतः ॥ एतन्मेविस्तराद्ब्रह्मन्कथयस्वामितद्युते ॥ १ ॥ पुलस्त्यउ-
वाच ॥ शृणुष्वकथयिष्यामिकथांपुण्यांपुरातनीं ॥ यशोवृद्धिंकुमारस्यकार्तिकेयस्यनारद ॥ २ ॥ यत्तत्पीतंहुताशेन
स्कन्नंशुक्रंपिनाकिनः ॥ तेनाक्रांतोभवद्ब्रह्मन्मंदतेजाहुताशनः ॥ ३ ॥ ततोजगामदेवानांसकाशममितद्युतिः ॥ तैश्चा-
पिप्रहितस्तूर्णंब्रह्मलोकंजगामह ॥ ४ ॥ सगच्छन्कुटिलांदेवींददर्शपथिपावकः ॥ तांदृष्ट्वाप्राहकुटिलेतेजएतत्सुदुर्द्धरं
॥ ५ ॥ महेश्वरेणसंत्यक्तंनिर्दहेद्भुवनान्यपि ॥ तस्मात्प्रतीच्छपुत्रोयंतवधन्योभविष्यति ॥ ६ ॥ इत्यग्निनासाकुटिला
स्मृत्वास्वमतमुत्तमं ॥ प्रक्षिपस्वांभसिममप्राहवन्हिंमहापगा ॥ ७ ॥ ततस्त्वधारयद्देवीशार्वंतेजस्त्वपूपुषत् ॥ हुताश-
नोपिभगवान्कामचारीपरिभ्रमन् ॥ ८ ॥ पंचवर्षसहस्राणिधृतवान्हव्यभुक्ततः ॥ मांसमस्थीनिरुधिरंमेदोमज्जाथ
तस्यहि ॥ ९ ॥ रोमश्मश्र्वक्षिकेशाद्याःसर्वेजाताहिरण्मयाः ॥ हिरण्यरेतालोकेषुतेनगीतश्चपावकः ॥ १० ॥ पंचवर्ष-
सहस्राणिकुटिलाज्वलनोपमं ॥ धारयंतीतदागर्भंब्रह्मणःस्थानमागता ॥११॥ तांदृष्टवान्पद्मजन्मासंतप्यंतींमहापगां ॥
दृष्ट्वापप्रच्छकेनायंतवगर्भःसमाहितः ॥ १२ ॥ साचाहशंकरंयत्तच्छुक्रंपीतंहिवह्निना ॥ तदशक्तेनतेनाद्यनिक्षिप्तंमयि
सत्तम ॥ १३ ॥ पंचवर्षसहस्राणिधारयंत्यापितामह ॥ गर्भस्यवर्त्ततेकालोनायंपततिकर्हिचित् ॥ १४ ॥ तच्छ्रुत्वाभग-
वानाहगच्छत्वमुदयंगिरिं ॥ तत्रास्तियोजनशतंरौद्रंशरवणंमहत् ॥ १५ ॥ तत्रैनंक्षिपसुश्रोणिविस्तीर्णेगिरिसानुनि ॥

१ मेदोत्ररेतसीत्वचम् इति पा० । २ नचचालापिकर्हिचित्—नचबालोविकर्षवान्—इति च पुस्तकान्तरयोः ।

दशवर्षसहस्त्रांतेततोबालोभविष्यति ॥ १६ ॥ साश्रुत्वाब्रह्मणोवाक्यंरूपिणीगिरिमागता ॥ आगत्यगर्भंतत्याजमुखेनै-
वाद्रिनंदिनी ॥ १७ ॥ सातुसंत्यज्यतंबालंब्रह्माणंसहसागमत् ॥ आपोमयीमंत्रवशात्संजाताकुटिलासती ॥ १८ ॥
तेजसाचापिशार्वेणरौक्मंशरवणंमहत् ॥ तन्निवासरताश्चान्येपादपामृगपक्षिणः ॥ १९ ॥ ततोदशसुपूर्णेषुशरदांहिश-
तेष्वथ ॥ बालार्कदीप्तिःसंजातोबालःकमललोचनः ॥ २० ॥ उत्तानशायीभगवान्दिव्येशरवणेस्थितः ॥ मुखेऽगुष्ठंस-
माक्षिप्यरुरोदघनराडिव ॥ २१॥ एतस्मिन्नंतरेदिव्याःकृतिकाःषट्सुतेजसः ॥ ददृशुःस्वेच्छयायान्त्योबालंशरवणेस्थि-
तं ॥ २२ ॥ कृपायुक्ताःसमाजग्मुर्यत्रस्कंदःस्थितोऽभवत् ॥ अहंपूर्वमहंपूर्वंतस्मैस्तन्यंविचुक्रुशुः ॥ २३ ॥ विवदंतीः
सताद्दृष्ट्वाषण्मुखःसमजायत ॥ अबीभरंश्चताःसर्वाःशिशुंस्नेहाच्चकृत्तिकाः ॥ २४ ॥ ध्रियमाणःसताभिस्तुबालोवृद्धिम-
गान्मुने ॥ कार्त्तिकेयइतिख्यातोजातःसबलिनांवरः ॥ २५ ॥ एतस्मिन्नंतरेब्रह्मन्पावकंप्राहपद्मभूः ॥ कियत्प्रमाणः
पुत्रस्तेवर्त्ततेसांप्रतंगुहः ॥ २६ ॥ सतद्वचनमाकर्ण्यजानन्नपिहिचात्मजं ॥ प्रोवाचवह्निर्देवेशंनवेद्मिकतमोगुहः ॥ २७ ॥
तंप्राहभगवान्प्रीतस्तेजःपीतंपुरात्वया ॥ त्रैयंबकंत्रिलोकेशोजातःशरवणेशिशुः ॥ २८ ॥ श्रुत्वापितामहवचःपावक-
स्त्वरितोऽभ्यगात् ॥ वेगिनंमेषमारुह्यकुटिलातंददर्शह ॥ २९ ॥ ततःपप्रच्छकुटिलाशीघ्रंकव्रजसेकवे ॥ सोऽब्रवीत्पुत्र-
दृष्ट्यर्थंजातःशरवणेशिशुः ॥ ३० ॥ साब्रवीत्तनयोमह्यंममेत्याहचपावकः ॥ विवदंतौददर्शाथस्वेच्छाचारीजनार्दनः
॥ १३ ॥ तौपप्रच्छाकिमर्थंवाविवादमिहचक्रतुः ॥ तावूचतुःपुत्रहेतोरुद्रशुक्रोद्भवोयदि ॥ ३२ ॥ तावुवाचहरिर्देवोग-
च्छतंत्रिपुरांतकं ॥ सयद्वक्ष्यतिदेवेशस्तत्कुरुध्वमसंशयं ॥ ३३ ॥ इत्युक्तौवसुदेवेनकुटिलाग्नीहरांतिके ॥ समभ्येत्योच-
तुस्तथ्यंकस्यपुत्रेतिनारद ॥ ३४ ॥ रुद्रस्तद्वाक्यमाकर्ण्यहर्षनिर्भरमानसः ॥ दिष्ट्यादिष्ट्येतिगिरिजांप्रोद्भूतपुलकोब्र-

वीत् ॥ ३५ ॥ ततोंबिकाप्राहहरंदेवगच्छावतंशिशुं ॥ प्रष्टुंसमाश्रयेद्यंसतस्यपुत्रोभविष्यति ॥ ३६ ॥ बाढमित्येवभ-
गवान्समुत्तस्थौवृषध्वजः ॥ सहोमयाकुटिलयापावकेनचधीमता ॥ ३७ ॥ संप्राप्तास्तेशरवणंहरोमाकुटिलाग्नयः ॥
ददृशुःशिशुकंतंचकृत्तिकोत्संगशायिनं ॥ ३८ ॥ ततःसबालकस्तेषांमत्वाचिंतितमादरात् ॥ योगाच्चतुर्मूर्तिरभूच्छिशुत्वेपि
चषण्मुखः ॥ ३९ ॥ कुमारःशंकरमगाद्विशाखोगिरिजामगात् ॥ कुटिलामभ्यगाच्छाखोनैगमेयोग्निमभ्यगात् ॥ ४० ॥
ततःप्रीतियुतोरुद्रउमाचकुटिलातथा ॥ पावकश्चापिदेवेशःपरांमुदमवापह ॥ ४१ ॥ ततोब्रुवन्कृत्तिकास्ताःषण्मुखः
किंहरात्मजः ॥ ततोऽब्रवीद्धरःप्रीत्याविशेषवचनंमुने ॥ ४२ ॥ नाम्नातुकार्त्तिकेयोतियुष्माकंचाभवत्त्वसौ ॥ कुटिलायाः
कुमारेतिपुत्रोयंभविताव्ययः ॥ ४३ ॥ स्कंदइत्येवविख्यातोगौरीपुत्रोभवत्वसौ ॥ गुहइत्येवनाम्नाचममासौतनयःस्मृ-
तः ॥ ४४ ॥ महासेनइतिख्यातोहुताशस्यास्तुपुत्रकः ॥ सारस्वतइतिख्यातःपुत्रःशरवणस्यच ॥ ४५ ॥ एवमेषमहा-
योगीपृथिव्यांख्यातिमेष्यति ॥ षडंशत्वान्महाबाहुःषण्मुखोनामगीयते ॥ ४६ ॥ इत्येवमुक्त्वाभगवान्शूलपाणिःपि-
तामहं ॥ सस्मारदैवतैःसार्द्धंतेप्याजग्मुस्त्वरान्विताः ॥ ४७ ॥ प्रणिपत्यचकामारिमुमांचगिरिनंदिनीं ॥ दृष्ट्वाहुताशनं
प्रीत्याकुटिलांकृत्तिकास्तथा ॥ ४८ ॥ ददृशुर्बालमत्युग्रंषण्मुखंसूर्यसन्निभं ॥ मुष्णंतमिवचक्षूंपितेजसास्वेनदेवताः
॥ ४९ ॥ कौतुकाभिहृताःसर्वेएवमूचुःसुरोत्तमाः ॥ देवकार्यंत्वयादेवकृतंदिव्याग्निनातदा ॥ ५० ॥ तदुत्तिष्ठव्रजामोद्य
तीर्थमोजसमव्ययं ॥ कुरुक्षेत्रंसरस्वत्यामभिषिंचामषण्मुखं ॥ ५१ ॥ सेनायाःपतिरस्त्वेषदेवगंधर्वकिंनराः ॥ महिषं
घातयत्वेपतारकंचसुदारुणं ॥ ५२ ॥ बाढमित्यब्रवीच्छर्वःसमुत्तस्थुःसुरास्ततः ॥ कुमारसहिताजग्मुःकुरुक्षेत्रंमहाफलं
॥ ५३ ॥ तत्रैवदेवताःसेंद्रारुद्रब्रह्मजनार्द्दनाः ॥ यत्नमस्याभिषेकार्थंचक्रुर्मुनिगणैःसह ॥ ५४ ॥ ततोंबुनासप्तसमुद्र-

वाहिनानदीजलेनापिमहाफलेन ॥ वनौषधिष्वेवसहस्रमूर्त्तिभिस्तमभ्यपिंचंतहराच्युताद्याः ॥ ५५ ॥ अभिषिक्तेतुसेना-न्यांकुमारेदिव्यरूपिणि ॥ जगुर्गंधर्वऋषयोननृतुश्चाप्सरोगणाः ॥ ५६ ॥ अभिषिक्तंकुमारंहिगिरिपुत्रीनिरीक्ष्यहि ॥ स्नेहादुत्संगगंस्कंधंमूर्ध्न्येजिघ्रन्मुहुर्मुहुः ॥ ५७ ॥ जिघ्रतीकार्त्तिकेयस्यअभिषेकार्द्रमाननं ॥ भात्यद्रिजायथेंद्र-स्यदेवमाताादितिःपुरा ॥ ५८ ॥ तदाभिषिक्तंतनयंदृष्ट्वाशर्वोमुदंययौ ॥ पावकःकृत्तिकाश्चैवकुटिलाचयशस्विनी ॥ ५९ ॥ ततोभिषिक्तश्चहरःसेनापत्येगुहस्यच ॥ प्रमथांश्चतुरःप्रादाच्छक्रतुल्यपराक्रमान् ॥ ६० ॥ घंटाकर्णंलोहि-ताक्षंनंदिषेणंचदारुणं ॥ चतुर्थंबलिनांमुख्यंख्यातंकुमुदमालिनं ॥ ६१ ॥ हरदत्तान्गणान्दृष्ट्वादेवाःस्कंदस्यनारद ॥ प्रददुःप्रमथान्स्वांश्चसर्वेब्रह्मपुरोगमाः ॥ ६२ ॥ स्थाणुंब्रह्मागणंप्रादाद्विष्णुःप्रादाद्गणत्रयं ॥ संक्रमंविक्रमंचैवतृतीयंच पराक्रमं ॥ ६३ ॥ उत्क्रोशपंकजौशक्रोरविर्दंडकपिंजलौ ॥ चंद्रोमणिंवसुमणिमश्विनौवत्सनंदिनौ ॥ ६४ ॥ ज्यो-तिर्हुताशनःप्रादाज्ज्वलज्जिह्वंतथापुरं ॥ कुंदंमुकुंदंकुसुमंत्रीन्धातानुचरान्ददौ ॥ ६५ ॥ चक्रानुचक्रौत्वष्टाचवेधानि-स्थिरसुस्थिरौ ॥ पाणित्यजंकालिकंचप्रादात्पूषामहाबलौ ॥ ६६ ॥ स्वर्णमालंघनाह्वंचहिमवान्प्रमथोत्तमौ ॥ प्रादा-देवोच्छ्रितोविंध्यस्त्वतिकृष्णंचपार्षदं ॥ ६७ ॥ सुवर्चसंचवरुणःप्रददौचातिवर्चसं ॥ संग्रहंविग्रहंचापिनागाजयपरा-जयौ ॥ ६८ ॥ उन्मादंशंकुकर्णंचपुष्पदंतंतथांबिका ॥ घसंचातिघसंवायुःप्रादादनुचरावुभौ ॥ ६९ ॥ परिघंवटकंभी-मंदाहातिदहनौतथा ॥ प्रददावंशुमान्पंचप्रमथान्षण्मुखायहि ॥ ७० ॥ यमःप्रमथमुन्माथंकालसेनंमहामुखं ॥ ताल-पत्रंकालजंघंषडेवानुचरान्ददौ ॥ ७१ ॥ सुप्रभंशुभकर्माणंददौधातागणेश्वरौ ॥ सुव्रतंसत्यसंधंचामित्रःप्रादाद्द्विजो-त्तम ॥ ७२ ॥ अनंतःशंकुपीठश्चनिकुंभःकुमुदोंबुजः ॥ एकाक्षःकुनटीचक्षुःकिरीटीकलशोदरः ॥ ७३ ॥ सूचीवक्त्रःकोक-

नदःप्रहासःप्रियकोऽच्युतः ॥ गणाःपंचदशैतेहियक्षैर्दत्तागुहस्यतु ॥ ७४ ॥ कालिंद्याकलकंदश्चनर्मदायारणोत्कटः ॥ गोदावर्यासिद्धयात्रतमसासाद्रिकंपकौ ॥ ७५ ॥ सहस्रबाहुःशीतायाःवंजुलायाःस्मितोदरः ॥ मंदाकिन्यास्तदागंधो विपाशायाःप्रियंकरः ॥ ७६ ॥ ऐरावत्याश्चतुर्दंष्ट्रःषोडशाख्योवितस्तया ॥ मार्जारिंकौशिकीप्रादात्क्रथक्रौंचौचगौतमी ॥ ७७ ॥ बाहुदाशतशीर्षंचवाहागोनंदनंदिकौ ॥ भीमंभीमरथीप्रादाद्वेगारिंसरयूर्ददौ ॥ ७८ ॥ अष्टबाहुंददौकाली सुबाहुमपिगंडकी ॥ महानदीचित्रदेवंशिप्राचित्ररथंददौ ॥ ७९ ॥ कुहूःकुवलयंप्रादान्मधुवर्णंमधूदका ॥ जंबूकंधूत-पापाचवेत्राश्वेताननंददौ ॥ ८० ॥ स्तुतंचप्रथमंवर्णा[1]रिवासागरवेगिनं ॥ प्रभावार्थसहंप्रादात्कांचनाकनकेक्षणं ॥ ८१ ॥ गृध्रवक्रं[2]चविमलाचारुपत्रंमनोहरा ॥ धूतपापामहारावं[3]कर्णाविद्रुमसन्निभं ॥ ८२ ॥ सुप्रसादंसुवेणुंचजिं-ष्णुमोघवतीददौ ॥ यज्ञबाहुंविशालाचसरस्वत्योददुर्गणान् ॥ ८३ ॥ कुटिलातनयान्प्रादात्रिंशच्छक्रबलान्गणान् ॥ करालंसितकेशंचकृष्णकेशंजटाधरा ॥ ८४ ॥ मेघनादंचतुर्दंष्ट्रंविद्युज्जिह्वंदशाननं ॥ सोमाप्यायनमेवाग्रंदेवयाजिनमेव च ॥ ८५ ॥ हंसास्यंकुंडजठरंमुद्गग्रीवंहयाननं ॥ कूर्मग्रीवंचपंचैतान्ददुःपुत्रायकृत्तिकाः ॥ ८६ ॥ स्थाणुजंघंकुंभवक्रं लोहजंघंमहाननं ॥ पिंडाकारंचपंचैतान्ददुःस्कंदायचर्षयः ॥ ८७ ॥ नागजिह्वंचंद्रभासंपाणिकूर्मंमशिक्षकं ॥ चापव-क्रंचजंबूकंददौतीर्थंपृथूदकं ॥ ८८ ॥ चक्रतीर्थंसुचक्राख्यंमकराख्यंगयाशिरः ॥ गणपंचाशिवंनामददौकनखलंस्वकं ॥ ८९ ॥ बंधुदत्तंचाजिशिराबाहुशालंचपुष्करं ॥ सर्वौजसंमाहिषकंमानसःपिंगलंतथा ॥ ९० ॥ रुद्रमौशनसःप्रादा-त्ततोन्यान्मातरोददुः ॥ वसुदामंसोमतीर्थःप्रभासोनांदिनीमपि ॥ ९१ ॥ इंद्रतीर्थंविशोकांचउदपानोघनस्वनां ॥ सप्त-

१ (श्रुतवर्णंचपर्णासा) इति पा० । २ पत्रमिति पा० । ३ वेणोति पु० । ४ जिष्णु मघवती ददौ । इति पा०

सारस्वतःप्रादान्मातरश्चानुरोद्धृताः ॥ ९२ ॥ गीतप्रियांमाधवींचतीर्थनेमिंस्मितानन्नं ॥ एकचूडांनागतीर्थःकुरुक्षेत्रंफ-
लास्पदं ॥ ९३ ॥ ब्रह्मयोनिश्चंडाशितांभद्रकालींत्रिविष्टपं ॥ रौंडींसेंडीपोषभेंडींप्रादाद्द्विरदपावनः ॥ ९४ ॥ मोपली-
यांमहाप्रादाच्छालिकांमानसोद्रुदः ॥ शतघंटांशतानंदांतथोलूखलमेखलां ॥ ९५ ॥ पद्मावतींमाधवींचददौबदरिका-
श्रमः ॥ सुषमामेकचूडांचदेवींधमधमांतथा ॥ ९६ ॥ उन्माथनींवेदमंत्रांकेदारोमातरोददौ ॥ सुनक्षत्रंकलूलांचसुप्र-
भातंसुमंगलं ॥ ९७ ॥ देवमित्रांचित्रसेनांददौरौद्रमहालयः ॥ कोटरामूर्द्ध्ववेणांचश्रीमतींबाहुपुत्रिकां ॥ ९८ ॥ पलि-
तांकमलाक्षींचप्रयागोमातरोददौ ॥ सुयमांमधुपिंगांचक्षांतिंदहदहांपरां ॥ ९९ ॥ प्रादात्खेटकरांचान्यांसर्वपापवि-
मोचनः ॥ संतानिकांचविकलांक्रमुकांबरवासिनीं ॥ १०० ॥ जलेश्वरींककुटिकांसुदामालोहमेखलां ॥ वपुष्मत्युल्मु-
काक्षीचकोकनामामहासनी ॥ १०१ ॥ रौद्राकर्कटिकातुंडाश्वेततीर्थोददौत्विमां ॥ एतानिभूतानिगणांश्चमातरोदृष्ट्वा
महात्माविनतातनूजः ॥ १०२ ॥ ददौमयूरंस्वसुतंमहाजवंतथारुणस्ताम्रचूडंचपुत्रकं ॥ शक्तिंहुताशोऽद्रिसुताचवस्त्रं
दंडंगुरुःसाकुटिलाकमंडलुं ॥ १०३ ॥ मालांहरिःशूलधरःपताकंकंठेचहारंमघवानुरस्तः ॥ गणैर्वृतोमातृभिरध्वयातो
मयूरसंस्थोवरशक्तिपाणिः ॥ सेनाधिपत्येसकृतोभवेनरराजसूर्योवमहावपुष्मान् ॥ १०४ ॥ इतिश्रीवामनपुराणेकार्ति-
केयोत्पत्तौसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ ॥ ॥ ॥ ॥
पुलस्त्यउवाच ॥ सेनापत्येभिषिक्तस्तुकुमारोदैवतैरथ ॥ प्रणिपत्यभवंभक्त्यागिरिजांपावकंशुचिं ॥ १ ॥ षट्कृत्तिका-
श्चसरसाप्रणम्यकुटिलामपि ॥ ब्रह्माणंचनमस्कृत्यइदंवचनमब्रवीत् ॥ २ ॥ कुमारउवाच ॥ नमोभगवतींदेवींमोंन-

१ सूर्यः व इतिच्छेदः वेतीवार्थे ववायथातथैवैवमिति कोशात् ।

मोऽस्तुतपोधनाः ॥ युष्मत्प्रसादाज्जेष्यामिशत्रून्महिषतारकौ ॥ ३ ॥ शिशुरस्मिनजानामिवक्तुंकिंचनदेवताः ॥ दीय-
तांब्रह्मणासार्धमनुज्ञांममसांप्रतं ॥ ४ ॥ इत्येवमुक्तेवचनेकुमारेणमहात्मना ॥ मुखंनिरीक्ष्यंतसर्वाःसर्वेविगतसाध्वसाः
॥ ५ ॥ शंकरोपिसुतस्नेहात्समुत्थायप्रजापतिं ॥ आदायदक्षिणेपाणौस्कंदांतिकमुपाययौ ॥ ६ ॥ अथोमाप्राहतनयं
पुत्रएह्येहिशत्रुहन् ॥ वंदस्वचरणौदिव्यौविष्णोर्लोकनमस्कृतौ ॥ ७ ॥ ततोविहस्याहगुहःकोयंमातर्वदस्वमां ॥ य-
स्यादरात्प्रणामोयंक्रियतेमद्विधैर्जनैः ॥ ८ ॥ तंमाताप्राहवचनंकृतेकर्मणिपद्मभूः ॥ वक्ष्यतेतवयोयंहिमहात्मागरुडध्व-
जः ॥ ९ ॥ केवलंत्विहमांदेवस्त्वपिताप्राहशंकरः ॥ नान्यःपरतरोस्माद्धिवयमन्येचदेहिनः ॥ १० ॥ पार्वत्यागदितेस्कं-
दःप्रणिपत्यजनार्दनं ॥ तस्थौकृतांजलिपुटस्त्वाज्ञांप्रार्थयतेऽच्युतात् ॥ ११ ॥ कृतांजलिपुटंस्कंदंभगवान्भूतभावनः ॥
कृत्वास्वस्त्ययनंदेवोह्यनुज्ञांप्रददौततः ॥ १२ ॥ नारदउवाच ॥ यत्तत्स्वस्त्ययनंपुण्यंकृतवान्गरुडध्वजः ॥ शिखिध्व-
जायविप्रर्षेतन्मेव्याख्यातुमर्हसि ॥ १३ ॥ पुलस्त्यउवाच ॥ शृणुस्वस्त्ययनंपुण्यंयत्प्राहभगवान्हरिः ॥ स्कंदस्यवि-
जयार्थायवधायमहिषस्यच ॥ १४ ॥ ॐस्वस्तिकुरुतांब्रह्मापद्मयोनीरजोगुणः ॥ स्वस्तिचक्रांकितकरोविष्णुस्तेविद-
धात्वजः ॥ १५ ॥ स्वस्तितेशंकरोभक्त्यासपत्नीकोवृषध्वजः ॥ पावकःस्वस्तितुभ्यंचकरोतुशिखिवाहनः ॥ १६ ॥
दिवाकरःस्वस्तिकरोस्तुतेसदासोमःसभौमःसबुधोगुरुश्च ॥ काव्यःसदास्वस्तिकरोस्तुतुभ्यंशनैश्चरःस्वस्त्ययनंकरोतु
॥ १७ ॥ मरीचिरत्रिःपुलहःपुलस्त्यःक्रतुर्वसिष्ठोभृगुरंगिराश्च ॥ मृगांकजस्तेकुरुतांहिमंगलंमहर्षयःसप्तदिविस्थि-
ताश्चये ॥ १८ ॥ विश्वेश्विनौसाध्यमरुद्गणाग्नयोदिवाकराःशूलधरामहेश्वराः ॥ यक्षाःपिशाचावसवोऽथकिन्नरास्ते
स्वस्तिकुर्वंतुसदोद्यतास्त्वमी ॥ १९ ॥ नागाःसुपर्णाःसरितःसरांसितीर्थानिपुण्यानिह्रदाःसमुद्राः ॥ महाबलाभूतगणा

गणेंद्रास्तेस्वस्तिकुर्वंतुसदोद्यतास्त्वमी ॥ २० ॥ स्वस्तिद्विपादिकेभ्यश्चचतुष्पादेभ्यएवच ॥ स्वस्तितेबहुपादेभ्यस्त्व-
पादेभ्योस्त्वनामयं ॥ २१ ॥ प्राग्दिशंरक्षतांवज्रीदक्षिणांदंडनायकः ॥ पाशीप्रतीचीमवतुयक्षेशःपातुचोत्तरां ॥ २२ ॥
वन्हिर्दक्षिणपूर्वांतुकुबेरोदक्षिणापरां ॥ प्रतीचीमुत्तरांवायुःशिवःपूर्वोत्तरामपि ॥ २३ ॥ उपरिष्टाद्ध्रुवःपातुह्यधस्ताच्चधरा-
धरः ॥ मुशलीलांगलीवज्रीधनुष्मानंतरेषुच ॥ २४ ॥ वाराहोंबुनिधौपातुदुर्गेपातुनृकेसरी ॥ सामवेदध्वनिःश्रीमान्
सर्वतःपातुमाधवः ॥ २५ ॥ पुलस्त्यउवाच ॥ एवंकृतस्वस्त्ययनोगुहःशक्तिधरोऽग्रणीः ॥ प्रणिपत्यसुरान्सर्वान्स्व-
मुत्पपातभूतलात् ॥ २६ ॥ तमन्येचगणाःसर्वेदेवाश्चमुनिदैवतैः ॥ अनुजग्मुःकुमारंतेकामरूपाविहंगमाः ॥ २७ ॥
मातरश्चतथासर्वाःसमुत्पेतुर्नभस्तलं ॥ समंस्कंदेनबलिनाहंतुकामामहासुरान् ॥२८॥ ततःसुदीर्घमध्वानंगत्वास्कंदोऽ-
ब्रवीद्गणान् ॥ भूम्यांतूर्णंमहावीर्याःकुरुध्वमवतारणं ॥ २९ ॥ गणागुहवचःश्रुत्वाअवतीर्यमहीतलं ॥ आरात्पर्वतमभ्ये-
त्यनादंचक्रुर्भयंकरं ॥ ३० ॥ तन्निनादोमहींसर्वामापूर्यचनभस्तलं ॥ विवेशार्णवरंध्रेणपातालंदानवालयं ॥ ३१ ॥
श्रुतःसमहिषेणाथतारकेणचधीमता ॥ विरोचनेनकुंभेननिकुंभेनासुरेणच ॥ ३२ ॥ श्रुत्वाचसहसानादंवज्रपातोपमंदृढं
॥ किमेतदितिसंचिंत्यतूर्णंजग्मुस्तदांधकं ॥ ३३ ॥ तेसमेत्यांधकेनैवसमंदानवपुंगवाः ॥ मंत्रयामासुरुद्विग्नास्तच्छब्दं
प्रतिनारद ॥ ३४ ॥ मंत्रयत्सुचदैत्येषुपातालात्सूकराननः ॥ पातालकेतुर्दैत्येंद्रःसंप्राप्तोऽथरसातलं ॥ ३५ ॥ सबा-
णविद्धोव्यथितःकंपमानोमुहुर्मुहुः ॥ अब्रवीद्वचनंदीनंसमभ्येत्यांधकासुरं ॥ ३६ ॥ पातालकेतुरुवाच ॥ गतोऽहमासं
दैत्येंद्रगालवस्याश्रमंप्रति ॥ तद्विध्वंसयितुंयत्नःसमारब्धोबलान्मया ॥ ३७ ॥ यावच्छूकररूपेणप्रविशामितदाश्रमम्
॥ नजानेहंनरंराजन्येनमेप्रहितःशरः ॥ ३८ ॥ शरसंभिन्नजत्रुश्चभयार्तश्चमहाजवः ॥ प्रपलाय्याश्रमात्तस्मात्सच

मांपृष्ठतोन्वगात् ॥ ३९ ॥ तुरंगखुरनिर्घोषःश्रूयतेपरमोऽसुर ॥ तिष्ठतिष्ठेतिवदतःशूकरस्यचपृष्ठतः ॥ तद्भयादस्मिजलधिंसंप्राप्तोदक्षिणार्णवम् ॥ ४० ॥ यावत्पश्यामितत्रस्थान्नानावेषाकृतीन्नरान् ॥ केचिद्गर्जंतिघनवत्प्रत्यगर्जंस्तथापरे ॥ ४१ ॥ अन्येचोचुर्वयंनूनंनिहन्मोमहिषासुरं ॥ तारकंघातयामोद्यवदंत्यन्येसुतेजसः ॥ ४२ ॥ तच्छ्रुत्वासुतरांत्रासोममजातोऽसुरेश्वर ॥ महार्णवंपरित्यज्यपतितोस्मिभयातुरः ॥ ४३ ॥ धरण्यांविवृतंगर्तंसमामन्वपतद्बली ॥ तद्भयात्संपरित्यज्यहिरण्यपुरमात्मनः ॥ ४४ ॥ तवांतिकमनुप्राप्तःप्रसादंकर्तुमर्हसि ॥ तच्छ्रुत्वाचांधकोवाक्यंप्राहमेघस्वनंवचः ॥ ४५ ॥ नभेतव्यंत्वयातस्मात्सत्यंगोप्तास्मिदानव ॥ महिषस्तारकश्चोग्रोबाणश्चैवबलिनंदनः ॥ ४६ ॥ अनाख्यायैवतेवीरास्त्वंधकंमहिषादयः ॥ स्वपरिग्रहसंयुक्ताभूमियुद्धायनिर्ययुः ॥ ४७ ॥ यत्रतेदारुणाकारागणाश्चक्रुर्महास्वनं ॥ तत्रदैत्याःसमाजग्मुःसायुधाःसबलामुने ॥ ४८ ॥ दैत्यानांपतयोदृष्ट्वाकार्त्तिकेयगणास्ततः ॥ अभ्यद्रवंतसहसासचोग्रोमातृमंडलः ॥ ४९ ॥ तेषांपुरस्सरःस्थाणुःप्रगृह्यपरिघंबली ॥ न्यषूदयत्परबलंक्रुधोरुद्रःपशूनिव ॥ ५० ॥ तंनिघ्नंतंमहादेवंनिरीक्ष्यकलशोदरः ॥ कुठारंपाणिनादायहंतिसर्वान्महासुरान् ॥ ५१ ॥ ज्वालामुखोभयकरःकरेणादायचासुरं ॥ सरथंसगजंसाश्वंविस्तृतेवदनेऽक्षिपत् ॥ ५२ ॥ दंडकश्चापिसंक्रुद्धःप्रासपाणिंमहासुरं ॥ सवाहनंप्रक्षिपतिसमुत्पाट्यमहार्णवे ॥ ५३ ॥ शंकुकर्णश्चमुशलीहलेनाहत्यदानवान् ॥ संचूर्णयतिमंत्रीवराजानंहीनपौरुषं ॥ ५४ ॥ खड्गचर्मधरोवीरःपुष्पदंतोगणेश्वरः ॥ द्विधात्रिधाचबहुधाचक्रेदैतेयदानवान् ॥ ५५ ॥ पिंगलोदंडमुंडैश्चयत्रयत्रप्रधावति ॥ तत्रतत्रप्रदृश्यंतेराशयःसर्वदानवैः ॥ ५६ ॥ सहस्रनयनःशूलंभ्रामयन्वैगणाग्रणीः ॥ निजघानासुरान्वीरःसवाजिरथकुंजरान् ॥ ५७ ॥ भीमोभीमशिलावर्षैःसपुरःसरिणोऽसुरान् ॥ निजघानयथैवेंद्रोवज्रवृ-

ष्ट्यानगोत्तमान् ॥ ५८ ॥ रौद्रःशकटचक्राख्योगणःपंचशिखोबली ॥ भ्रामयन्मुद्गरंवेगान्निजघानबलाद्रिपून् ॥ ५९॥
गिरिभेदीतलेनैवसारोहंकुंजरंरणे ॥ भस्मचक्रेमहावेगोरथंचरथिनासह ॥ ६० ॥ नाडीजंघोनिपातैश्चमुष्टिभिर्जानुना-
सुरान् ॥ कीलाभिर्वज्रतुल्याभिर्जघानबलवान्मुने ॥ ६१ ॥ कूर्मग्रीवोहयग्रीवःशिरसाचरणेनच ॥ लुंठननतदादैत्यान्
निजघानसवाहनान् ॥ ६२ ॥ पिंडाकरस्तुतुंडेनशृंगाभ्यांचकलिप्रियः ॥ विदारयतिसंग्रामेदानवान्समरोद्धतान्
॥ ६३ ॥ ततस्तस्यैवमतुलंवध्यमानंगणेश्वरैः ॥ प्रदुद्रावाथमहिषस्तारकश्चगणाग्रणीः ॥ ६४ ॥ तेहन्यमानाःप्रमथा
दानवानांवरायुधैः ॥ परिवार्यसमंतात्तेयुयुधुःकुपितास्तदा ॥ ६५ ॥ हंसास्यःपट्टिशेनाथजघानमहिषासुरं ॥ षोडशा-
ख्यस्त्रिशूलेनशतशीर्षोवरासिना ॥ ६६ ॥ श्रुतायुधस्तुगदयाविशोकोमुशलेनच ॥ बंधुदत्तस्तुशूलेनमूर्ध्निदैत्यमताडयत्
॥ ६७ ॥ तथान्यैःपार्षदैर्युद्धेशूलशक्त्यृष्टिपट्टिशैः ॥ नाकंपत्तुद्यमानोपिमैनाकइवपर्वतः ॥ ६८ ॥ तारकोभद्रकाल्या
सतथोलखलयारणे ॥ बध्यतेनैकचूडायादार्यतेपरमायुधैः ॥ ६९ ॥ तौताड्यमानौप्रमथौमातृभिश्चमहासुरैः ॥ नक्षोभं
जग्मतुर्वीरौक्षोभयंतौगणानपि ॥ ७० ॥ महिषोगदयातूर्णंप्रहारैःप्रमथानपि ॥ पराजित्यप्रयात्येवकुमारंप्रतिसायुधः
॥ ७१ ॥ तमापतंतंमहिषंसुचक्राक्षोनिरीक्ष्यहि ॥ चक्रमुद्यम्यसंक्रुद्धोरुरोधदनुनंदनं ॥ ७२ ॥ गदाचक्रांकितकरौग-
णासुरमहारथौ ॥ अयुध्येतांतदाब्रह्मन्लघुचित्रंचसुष्ठुच ॥ ७३ ॥ गदांमुमोचमहिषःसमाविध्यगणायतु ॥ सुचक्राक्षो
निजंचक्रमुत्ससर्जरथंप्रति ॥ ७४ ॥ गदांछित्त्वासुतीक्ष्णारंचक्रंमहिषमाद्रवत् ॥ ततउच्चुक्रुशुर्दैत्याहाहतोमहिषस्त्विति
॥ ७५ ॥ तच्छ्रुत्वाभ्यद्रवद्बाणःपाशमाविध्यवेगवान् ॥ जघानचक्रंरक्ताक्षंपंचमुष्टिशतेनहि ॥ ७६ ॥ पंचबाहुशतेनापि
सुचक्राक्षंबबंधसः ॥ बलवानपिबाणेननिष्प्रयत्नगतिःकृतः ॥ ७७ ॥ सुचक्राक्षंसुचक्रंहिबद्धंबाणासुरेणहि ॥ दृष्ट्वाद्र-

वद्गदापाणिर्मकराक्षोमहाबलः ॥ ७८ ॥ गदयामूर्ध्निपातेननिजघानमहाबलः ॥ सचापितेनसंयुक्तोव्रीडायुक्तोमहाम-
नाः ॥ ७९ ॥ ससंग्रामंपरित्यज्यशालिग्राममुपाययौ ॥ बाणोपिमकराक्षेणताडितोभूत्पराङ्मुखः ॥ ८० ॥ बभंज
तद्बलंसर्वंदैत्यानांसुरतापस ॥ प्रभज्यतद्बलंसर्वंदैत्यानांतेगणेश्वराः ॥ ८१ ॥ अतिष्ठंतभृशंक्रुद्धादैत्यान्विद्रावयन्रणे
॥ ततःस्वबलमीक्ष्यैवप्रभग्नंतारकोबली ॥ खड्गोद्यतकरोदैत्यःप्रदुद्रावगणेश्वरान् ॥ ८२ ॥ ततस्तुतेनाप्रतिमेनसासि-
नातेहंसवक्त्रप्रमुखागणेश्वराः ॥ तामातरश्चापिपराजितारणेस्कंदंभयार्त्ताःशरणंप्रपेदिरे ॥ ८३ ॥ भग्नान्गणान्वी-
क्ष्यमहेश्वरात्मजस्तंतारकंसासिनमापतंतं ॥ दृष्ट्वैवशक्त्याहृदयेबिभेदसभिन्नमर्मान्यपतत्पृथिव्यां ॥ ८४ ॥ तस्मिन्हृ-
तेभ्रातरिभग्नदर्पेभयातुरोभून्महिषोमहर्षे ॥ संत्यज्यसंग्रामशिरोदुरात्माजगामशैलंसहिमाचलंच ॥ ८५॥ बाणोऽथवीरे
निहतेऽथतारकेगतेहिमाद्रौमहिषेभयार्त्ते ॥ भयाद्विवेशोग्रमपांनिधानंगणैर्बलैर्विध्यतिसापराधे ॥ ८६ ॥ हत्वाकुमारो
रणमूर्ध्नितारकंप्रगृह्यशक्तिंमहताजवेन ॥ मयूरमारुह्यशिखंडमंडितंययौनिहंतुंमहिषासुरस्य ॥ ८७॥ सप्टष्ठतःप्रे-
क्ष्यशिखंडिकेतनंसमापतंतंवरशक्तिपाणिनं ॥ कैलासमुत्सृज्यहिमाचलंतथाक्रौंचंसमभ्येत्यगुहांविवेश ॥ ८८ ॥ दैत्यं
प्रविष्टंसपिनाकिसूनुर्जुगोपयत्नाद्भगवान्गुहोपि ॥ स्वबंधुहंताभविताकथंत्वहंविचिंतयन्नेवततःस्थितोभूत् ॥ ८९॥ ततो
भ्यगात्पुष्करसंभवश्चहरोमुरारिस्त्रिदशेश्वरश्च ॥ अभ्येत्यचोचुर्महिषंसशैलंभिंदस्वशक्त्याकुरुदेवकार्यं ॥ ९० ॥ तत
कार्त्तिकेयःप्रियमेवतथ्यंश्रुत्वावचःप्राहसुरान्विहस्य ॥ कथंहिमातामहनप्तृकंचस्वभ्रातरंभ्रातृसुतंचमातुः ॥ ९१ ॥ ए-
षाश्रुतिश्चापिपुरातनीकिलगायंतियांवेदविदोमहर्षयः ॥ कृत्वाचयस्यांमतमुत्तमायांस्वर्गंव्रजंतित्वतिपापिनोपि ॥ ९२ ॥

१ कृत्वायशस्यं मत मुत्तमानां इति पा० ।

गांब्राह्मणंवृद्धमथापिचाढ्यंबालंस्वबंधुंललनांसुदुष्टां ॥ कृतापराधामपिनैववध्यादाचार्यमुख्यागुरवस्तथैव ॥ ९३ ॥
एवंजानन्धर्ममथ्यंसुरेंद्रानाहंवध्यांभ्रातरंमातुलेयं ॥ यथादैत्योभिगर्मिष्यद्द्रुहातस्तथाशक्त्याघातयिष्यामिशत्रुं ॥ ९४ ॥
श्रुत्वाकुमारवचनंभगवान्महर्षेकृत्वामतंस्वहृदयेगुहमाहशक्रः ॥ मत्तोभवान्नमतिमान्वदसेकिमित्थंवाक्यंशृणुष्वहरि-
णागदितंहिपूर्वं ॥ ९५ ॥ नैकस्यार्थेबहून्हन्यादितिशास्त्रेषुनिश्चयः ॥ एकंहन्याद्बहूनांहिनपापीतेनजायते ॥ ९६ ॥
एतच्छ्रुत्वामयापूर्वंसमयस्तेनचाग्निज ॥ निहतोनमुचिःपूर्वंसोदरोपिसहानुजः ॥ ९७ ॥ तस्माद्बहूनामर्थायसक्रौंचंम-
हिषासुरं ॥ घातयस्वपदाक्रम्यशक्त्यापावकदत्तया ॥ ९८ ॥ पुरंदरवचःश्रुत्वाक्रोधादारक्तलोचनः ॥ कुमारःप्राहवच-
नंकंपमानःशतक्रतुं ॥ ९९ ॥ मूढकिंतेबलंबाह्वोःशारीरंवापिवृत्रहन् ॥ येनाधिक्षिपसेमांत्वंभुवनेमतिमानसि ॥ १००॥
तमुवाचसहस्राक्षःस्वत्तोहंबलवान्गुह ॥ तंगुहःप्राहएह्येहियुध्यस्वबलवान्यदि ॥ १०१ ॥ शक्रःप्राहाथबलवान्जा-
यतेकृत्तिकासुत ॥ प्रदक्षिणंशीघ्रतरंयःकुर्यात्क्रौंचमेवहि ॥ १०२ ॥ श्रुत्वातद्वचनंस्कंदोमयूरंप्रोज्झ्यतत्क्षणात् ॥ प्रद-
क्षिणंपादचारीकर्त्तुंतूर्णतरोभ्यगात् ॥ १०३ ॥ शक्रोवतीर्यनागेंद्रात्पादेनाथप्रदक्षिणां ॥ कृत्वातस्थौगुहोभ्येत्यमूढ
किंस्वित्स्थितोभवान् ॥ १०४ ॥ तमिंद्रःप्राहकौटिल्यान्मयापूर्वंप्रदक्षिणा ॥ कृताऽस्यतत्त्वयापूर्वंकुमारःशक्रमब्रवीत्
॥ १०५ ॥ मयापूर्वंमयापूर्वंविवदंतौपरस्परं ॥ आगम्योचुर्महेशायब्रह्मणेमाधवायच ॥ १०६ ॥ अथोवाचहरिःस्कंदं
प्रष्टुमर्हसिपर्वतं ॥ योऽयंवक्ष्यतिपूर्वंसभविष्यतिमहाबलः ॥ १०७ ॥ तन्माधववचःश्रुत्वाक्रौंचमभ्येत्यपावकिः ॥ पप्र-
च्छाद्रिमिदंकेनकृतंपूर्वंप्रदक्षिणं ॥ १०८ ॥ इत्येवमुक्तःक्रौंचस्तुप्राहपूर्वंमहामतिः ॥ चकारगोत्रभित्पूर्वंत्वयाकृतमथोगु-
ह ॥ १०९ ॥ एवंब्रुवंतंक्रौंचंसक्रोधात्प्रस्फुरिताधरः ॥ बिभेदशक्त्याकौटिल्यान्महिषेणसमंतदा ॥ ११० ॥ तस्मिन्

हतेऽथतनयेबलवान्सुनाभोवेगेनभूमिधरपार्थिवजस्तथागात् ॥ ब्रह्मेंद्ररुद्रमरुदश्विवसुप्रधानाजग्मुर्दिवंमहिषमीक्ष्यहतं
गुहेन ॥ १११ ॥ स्वमातुलंवीक्ष्यबलीकुमारःशक्तिंसमुत्पाट्यनिहंतुकामः ॥ निवारितश्चक्रधरेणवेगादालिंग्यदोर्भ्यां
गुरुरित्युदीर्य ॥ ११२ ॥ सुनाभमभ्येत्यहिमाचलस्तुप्रगृह्यहस्तेननिनायतंच ॥ हरिःकुमारंसशिखंडिनंनयद्वेगाद्दिवंप-
न्नगशत्रुपुत्रः ॥ ११३ ॥ ततोगुरुःप्राहहरिंसुरेशंमोहेननष्टोभगवन्विवेकः ॥ भ्रातामयामातुलेयोनिरस्तस्तस्मात्करि-
ष्येस्वशरीरशोषं ॥ ११४ ॥ तमाहविष्णुर्व्रजतीर्थवर्यंपृथूदकंपापहरंकुमार ॥ स्नात्वौघवत्यांहरमीक्ष्यभक्त्याभविष्यसे
सूर्यसमप्रभावः ॥ ११५ ॥ इत्येवमुक्तोहरिणाकुमारस्त्वभ्येत्यतीर्थंप्रसमीक्ष्यशंभुं ॥ स्नात्वार्च्यदेवान्सरविप्रकाशोज-
गामशैलंसदनंहरस्य ॥ ११६ ॥ सुचक्रनेत्रोपिमहाश्रमेतपश्चचारशैलेपवनाशनस्तु ॥ आराधयामासवृषध्वजंतथाह-
रोऽपितुष्टोवरदोबभूव ॥ ११७ ॥ देवात्सवव्रेवरमायुधार्थेक्रौंचांतकारीरिपुबाहुखंडं ॥ छिंद्यांयथात्वत्प्रतिमंकरेणबाण-
स्यतन्मेभगवान्ददातु ॥ ११८ ॥ तमाहशंभुर्व्रजदत्तमेतद्वरंहिचक्रस्यतवायुधस्य ॥ बाणस्यतद्बाहुवनंप्रवृद्धंसंछेत्स्यसे
नात्रविचार्यमस्ति ॥ ११९ ॥ वरेप्रदत्तेत्रिपुरांतकेनगणेश्वरःस्कंदमुपाजगाम ॥ निपत्यपादौप्रतिवंद्यहृष्टोनिवेदयामा-
सहरप्रसादं ॥ १२० ॥ एवंतवोक्तंमहिषासुरस्यवधस्त्रिनेत्रात्मजशक्तिभेदात् ॥ क्रौंचस्यमृत्युःशरणागतानांपापाप-
हंपुण्यविवर्धनंच ॥१२१॥ इतिश्रीवामनपुराणेमहिषासुरतारकोपाख्यानेक्रौंचभेदनंनामाष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥
नारदउवाच ॥ योसौमंत्रयतांप्राप्तोदैत्यानांशरताडितः ॥ सकेनवदनिर्भिन्नःशरेणदितिजेश्वरः ॥ १ ॥ पुलस्त्यउवाच
। आसीन्नृपोरघुकुलेरिपुजिन्महर्षेतस्यात्मजोगुणगणैकनिधिर्महात्मा ॥ शूरोरिसैन्यदमनोबलवान्सुहृष्टोविप्रांधदीन-
कृपणार्तिशमःपृथिव्यां ॥ २ ॥ ऋतध्वजोनाममहामहीशःसगालवार्थेतुरगाधिरूढः ॥ पातालकेतुंनिजघानपृष्ठेबाणेन-

चंद्रार्धनिभेनवेगशः ॥३॥ नारदउवाच ॥ किमर्थंगालवस्यासौसाधयामाससत्तम ॥ येनासौपत्त्रिणातूर्णंनिजघानन्नृपा-
त्मजः ॥ ४ ॥ पुलस्त्यउवाच ॥ पुरातपस्तप्यतिगालवर्षौमहाश्रमेस्वेसततंनिविष्टे ॥ पातालकेतुस्तपसोस्यविघ्नंकरोति
मौढ्यात्ससमाधिभंगं ॥ ५ ॥ नचेष्यतेसौतपसोव्ययांहिशक्तोतिकर्तुंत्वथभस्मसात्तं ॥ आकाशमीक्ष्याथसदीर्घमुष्णंमु-
मोचनिश्वासमनुत्तमंहि ॥ ६ ॥ ततोऽबराद्वाजिवरःपपातबभूववाणीत्वशरीरिणीच ॥ असौतुरंगोबलवान्क्रमेतत्वह्नास-
हस्राणितुयोजनानां ॥ ७ ॥ सतंप्रगृह्याश्ववरंतुरंगमृतध्वजंयोज्यतदात्तशस्त्रं ॥ स्थितस्तपस्येवततोमहर्षिर्दैत्यंसम-
भ्येत्यंनृपोबिभेद ॥ ८ ॥ नारदउवाच ॥ केनांबरतलाद्वाजीनिःसृष्टोवदसुव्रत ॥ वाक्यस्यादेहिनीजातापरंकौतूहलंमम
॥ ९ ॥ पुलस्त्यउवाच ॥ विश्वावसुर्नाममहेंद्रगायनोगंधर्वराजोबलवान्यशस्वी ॥ निसृष्टवान्भूवलयेतुरंगमृतध्वजस्यैव
सुतार्थमाशु ॥ १० ॥ नारदउवाच ॥ कोर्थोगंधर्वराजस्ययेनाप्रैषीन्महाजवं ॥ राज्ञःकुवलयाश्वस्यकोर्थोन्नृपसुतस्यच
॥ ११ ॥ पुलस्त्यउवाच ॥ विश्वावसोःशीलगुणोपपन्नाआसीत्पुरंध्रीसुभगात्रिलोके ॥ लावण्यराशिःशशिकांतितुल्या
मदालसानाममदालसेव ॥ १२ ॥ तांनंदनेदेवरिपुस्तरस्वीसंक्रीडन्तींरूपवतींददर्श ॥ पातालकेतुस्तुजहारतन्वींतस्या-
र्थतःसोश्ववरःप्रदत्तः ॥ १३ ॥ हत्वारिंदैत्यंनृपतेस्तनूजोलब्ध्वावरोरूमपिसंस्थितोऽभूत् ॥ दृष्टोयथादेवपतिर्महेंद्रःश-
च्यातथाराजसुतोमृगाक्ष्या ॥ १४ ॥ नारदउवाच ॥ एवंनिरस्तेमहिषेतारकेचमहासुरे ॥ हिरण्याक्षसुतोधीमान्किमाचे
ष्टतवैपुनः ॥ १५ ॥ पुलस्त्यउवाच ॥ तारकंनिहतंदृष्ट्वामहिषंचरणेन्धकः ॥ कोपंचक्रेसुदुर्बुद्धिर्दैत्यानांदेवसैन्यहा
॥ १६ ॥ ततःस्वल्पपरीवारःप्रगृह्यपरिघंकरे ॥ निर्जगामाथपातालाद्विचचारचमेदिनीम् ॥ १७ ॥ ततोविचरतातेनमं-
दरेचारुकंदरे ॥ दृष्टागौरीचगिरिजासखीमध्यस्थिताशुभा ॥ १८ ॥ ततोभूत्कामबाणार्त्तःसहसैवान्धकासुरः ॥ तांदृष्ट्वा

चारुसर्वांगींगिरिराजसुतांवने ॥ १९ ॥ अथोवाचासुरोमूढोवचनंमन्मथांधकः ॥ कस्येयंचारुसर्वांगीवनेचरतिसुंदरी
॥ २० ॥ इयंयदिभवेन्नैवममांतःपुरवासिनी ॥ तन्मदीयेनजीवेनक्रियतेनिष्फलेनकिं ॥ २१ ॥ यदस्यास्तनुमध्याया
नपरिष्वंगवानहं ॥ अतोधिङ्ममरूपेणकिंस्थिरेणप्रयोजनं ॥ २२ ॥ समेबंधुःससचिवःसभ्रातासांपरायिकः ॥ योमा-
मसितकेशींतांयोजयेन्मृगलोचनां ॥२३॥ इत्थंवदतिदैत्येंद्रेप्रह्लादोबुद्धिसागरः ॥ पिधायकर्णौहस्ताभ्यांशिरःकंपंवचोऽ-
ब्रवीत् ॥ २४ ॥ मामैवंवददैत्येंद्रजगतोजननीत्वियं ॥ लोकनाथस्यभार्येयंशंकरस्यात्रिशूलिनः ॥ २५ ॥ माकुरुष्व
सुदुर्बुद्धिंसद्यःकुलविनाशनीं ॥ भवतःपरदारेयंमानिमज्जरसातले ॥ २६ ॥ सत्सुकुत्सितमेवंहिअसत्स्वपिहिकुत्सितं ॥
शत्रवस्तेप्रकुर्वंतुपरदारावगाहनं ॥ २७ ॥ किंनश्रुतोदैत्यनाथेहकिंनुगीतःश्लोकोगाधिनापार्थिवेन ॥ दृष्ट्वासैन्यंवि-
प्रयातंप्रसक्तंपथ्यंतथ्यंसर्वलोकेहितंच ॥ २८ ॥ वरंप्राणास्त्याज्यानबतपरहिंसात्वभिमतावरंमौनंकार्यंनचवचन
मुक्तंयदनृतं ॥ वरंक्लीबैर्भाव्यंनचपरकलत्राभिगमनंवरंभिक्षार्थित्वंनचपरधनानांहिहरणं ॥ २९ ॥ सप्रह्ला-
दवचःश्रुत्वाक्रोधांधोमदनातुरः ॥ इयंसाशत्रुजननीत्येवमुक्त्वाप्रदुद्रुवे ॥ ३० ॥ ततोऽन्वधावन्दैतेयायंत्रमुक्ताइवोपलाः
॥ तानब्रवीद्बलान्नंदीचक्रोद्यतकरोऽव्ययः ॥ ३१ ॥ मयतारपुरोगास्तेवारिताद्राविताखथा ॥ कुलिशेनाहतास्तूर्णंजग्मु-
र्भीतादिशोदश ॥ ३२ ॥ तानर्दितान्रणेदृष्ट्वानंदिनांधकदानवः ॥ परिघेणसमाहत्यपातयामासनंदिनं ॥ ३३ ॥ शै-
लेयंपतितंदृष्ट्वाधावमानंतथांधकं ॥ शतरूपाभवद्गौरीभयात्तस्यदुरात्मनः ॥ ३४ ॥ ततःसदेवीगणमध्यसंस्थितःपरिभ्र-
मन्भातिमहासुरेंद्रः ॥ यथावनेमत्तकरीपरिभ्रमन्करेणुमध्येमदलोलदृष्टिः ॥ ३५ ॥ नपरिज्ञातवांस्तत्रकातुसागिरिक-
न्यका ॥ नात्राश्चर्यंनपश्यंतिचत्वारोऽमीसदैवहि ॥ ३६ ॥ नपश्यतीहजात्यन्धोरागांधोऽपिनपश्यति ॥ नपश्यतिमदो-

न्मत्तोलोभाक्रांतोनपश्यति ॥ सोऽपश्यमानोगिरिजांपश्यन्नपितदान्धकः ॥ ३७ ॥ प्रदास्यन्नाददत्तासांयुवत्यइतिचिन्त-
यन् ॥ ततोदेव्यासदुष्टात्माशतावर्यानिराकृतः ॥ ३८ ॥ कुट्टितःप्रवरैःशस्त्रैर्निपपातमहीतले ॥ वीक्ष्यान्धकंनिपतितं
शतरूपाविभावरी ॥ ३९ ॥ तस्मात्स्थानादपाक्रम्यगतान्तर्धानमंबिका ॥ पतितंचान्धकंदृष्ट्वादैत्यदानवयूथपाः
॥ ४० ॥ कुर्वन्तःसुमहाशब्दंप्राद्रवंतरणार्थिनः ॥ तेषामापततांशब्दंश्रुत्वातस्थौगणेश्वरः ॥ ४१ ॥ आदायवज्रंबल-
वान्मघवानिवकोपितः ॥ दानवान्समयान्वीक्ष्यपराजित्यगणेश्वरः ॥ ४२ ॥ समभ्येत्याम्बिकांदृष्ट्वाववंदेचरणौशुभौ ॥
देवीवतानिजामूर्तीस्त्वाहगच्छध्वमिच्छया ॥ ४३ ॥ विहरध्वंमहीपृष्ठेपूज्यमानानरैरिह ॥ वसतिर्भवतीनांचउद्यानेषु
वनेषुच ॥ ४४ ॥ वनस्पतिषुवृक्षेषुगच्छध्वंविगतज्वराः ॥ तास्त्वेवमुक्ताःशैलेय्याप्रणिपत्यांबिकांक्रमात् ॥ ४५ ॥
दिक्षुसर्वासुजग्मुस्तास्तूयमानाश्चकिंनरैः ॥ अन्धकोपिस्मृतिंलब्ध्वाअपश्यन्नद्रिनंदिनीम् ॥ ४६ ॥ स्वबलंनिर्जितंदृष्ट्वा
ततःपातालमाद्रवत् ॥ ततोदुरात्मासतदांधकोमुनेपातालमभ्येत्यदिवानभुंक्ते ॥ रात्रौनशेतेमदनेषुताडितोगौरींस्मर-
त्कामबलाभिपन्नः ॥ ४७ ॥ इतिश्रीवामनपुराणेभैरवप्रादुर्भावेनवपंचाशत्तमोऽध्यायः ॥ ५९ ॥ ॥ ॥
नारदउवाच ॥ क्वगतःशंकरोह्यासीद्येनांबानंदिनासह ॥ अन्धकंयोधयामासएतन्मेवक्तुमर्हसि ॥ १ ॥ पुलस्त्यउवाच ॥
यदावर्षसहस्रंतुमहामोहेस्थितोभवः ॥ तदाप्रभृतिनिस्तेजाहीनवीर्यःप्रदृश्यते ॥ २ ॥ स्वमात्मानंनिरीक्ष्याथनिस्तेजोऽ-
शंमहेश्वरः ॥ तपोर्थायतदाचक्रेमतिंमतिमतांवरः ॥ ३ ॥ समहाव्रतमुत्पाद्यसमाश्वस्यांबिकांविभुः ॥ शैलादिंस्थाप्य
गोप्तारंविचचारमहीतले ॥ ४ ॥ महामुद्रार्पितग्रीवोमहाहिकृतकुंडलः ॥ धारयंश्चकटीदेशेमहाशंखस्यमेखलां ॥ ५ ॥
कपालंदक्षिणेहस्तेसव्येगृह्यकमंडलुं ॥ एकाहवासीवृक्षाद्रिशैलसानुनदीषुच ॥६॥ स्थानंत्रैलोक्यमास्थायमूलाहारोम्ब-

भोजनः ॥ वाय्वाहारस्तथातस्थौनववर्षशतंक्रमात् ॥ ७ ॥ ततोवीटांमुखेक्षिप्यनिरुच्छ्वासोभवेद्यदि ॥ विस्तृतेहिमवत्पृष्ठेरम्येसमशिलातले ॥ ८ ॥ ततोवीटांविदार्यैवकपालंपरमेष्ठिनः ॥ सार्चिष्मतीजटामध्यान्निक्षिप्ताधरणीतले ॥ ९ ॥ वीटयानुपतत्याद्रिर्दारितःक्ष्मासमोभवत् ॥ यावत्तीर्थवरःपुण्यःकेदारइतिविश्रुतः ॥ १० ॥ ततोहरोवरंप्रादात् केदारेवृषभध्वजः ॥ पुण्यवृद्धिकरंब्रह्मन्पापघ्नंमोक्षसाधनं ॥ ११ ॥ येजलंतावकेतीर्थेपीत्वासंयमिनोनराः ॥ मधुमांसनिवृत्तास्तुब्रह्मचारिव्रतेस्थिताः ॥ १२ ॥ षण्मासाद्धारयिष्यंतिनिवृत्ताःपरपाकतः ॥ तेषांहृत्पंकजेष्वेवतल्लिंगंभविताध्रुवं ॥ १३ ॥ नचास्यपापेषुरतिर्भविष्यतिकदाचन ॥ पितॄणामक्षयंश्राद्धंभविष्यतिनसंशयः ॥ १४ ॥ स्नानदानतपांसीहहोमजप्यादिकाःक्रियाः ॥ भविष्यंत्यक्षयानॄणांमृतानामपुनर्भवः ॥ १५ ॥ एतद्वरंहरात्तीर्थंप्राप्यमृष्णांतिदेवताः ॥ पुनातिपुंसांकेदारस्त्रिनेत्रवचनंयथा ॥ १६ ॥ केदारायवरंदत्वाजगामत्वरितोहरः ॥ स्नातुंभानुसुतांदेवींकालिंदींपापनाशिनीं ॥ १७ ॥ अवतीर्यततःस्नातुंनिमग्नश्चमहांभसि ॥ द्रुपदांनामगायत्रींजजापांतर्जलेहरः ॥ १८ ॥ निमग्नेशंकरेदेव्यांसरस्वत्यांकलिप्रिय ॥ सार्धःसंवत्सरोयातोनचोन्मज्जत्तदेश्वरः ॥ १९ ॥ एतस्मिन्नंतरेब्रह्माभुवनान्यर्णवास्तथा ॥ चेलुःपेतुर्धरण्यांचनक्षत्रंतारकैःसह ॥ २० ॥ आसनेभ्यःप्रचलितादेवाःशक्रपुरोगमाः ॥ स्वस्त्यस्तुलोकेभ्यइतिजपंतःपरमर्षयः ॥ २१ ॥ क्षुब्धाश्चदेवालोकेषुब्रह्माणंप्रष्टुमागताः ॥ दृष्ट्वोचुःकिमिदंलोकाःक्षुब्धाःसंशयमागताः ॥ २२ ॥ तानाहपद्मसंभूतोनतद्वेद्मिचकारणं ॥ तदागच्छतवोयुक्तंद्रष्टुंचक्रगदाधरं ॥ २३ ॥ पितामहेनैवमुक्तादेवाःशक्रपुरोगमाः ॥ पितामहंपुरस्कृत्यमुरारिसदनंगताः ॥ २४ ॥ नारदउवाच ॥ कोसौमुरारिर्देवर्षेदेवोयक्षोनुकिंनरः ॥ दैत्योवाराक्षसोवापिपार्थिवोवातदुच्यतां ॥ २५ ॥ पुलस्त्यउवाच ॥ योसौरजःसत्त्वमयोगुणवांश्चतमोमयः ॥ निर्गुणः

सर्वगोव्यापीमुरारिर्मधुसूदनः ॥ २६ ॥ योऽसौमुरइतिख्यातःकस्यपुत्रःसगीयते ॥ कथंचनिहतःसंख्येविष्णुनातद्वद
स्वमे ॥ २७ ॥ पुलस्त्यउवाच ॥ श्रूयतांकथयिष्यामिसुरासुरनिबर्हणं ॥ विचित्रमिदमाख्यानंपुण्यदंपापनाशनं
॥ २८ ॥ कश्यपस्यौरसःपुत्रोमुरोनामदनूद्भवः ॥ सददर्शरणेभग्नान्दितिपुत्रान्सुरोत्तमैः ॥ २९ ॥ ततःसमरणाद्भीत
स्तप्त्वावर्षगणान्बहून् ॥ आराधयामासविभुंब्रह्माणमपराजितं ॥ ३० ॥ ततोऽस्यतुष्टोवरदःप्राहवत्सवरंवृणु ॥ सचव-
व्रेवरंदैत्योवरमेवंपितामहात् ॥ ३१ ॥ यंयंकरतलेनाहंस्पृशेयंसमरेविभो ॥ ससमद्धस्तसंस्पृष्टस्त्वमरोपिम्रियेदज
॥ ३२ ॥ बाढमित्याहभगवान्ब्रह्मालोकपितामहः ॥ ततोऽभ्यागान्महातेजामुरुःसुरगिरिंबली ॥ ३३ ॥ समेत्याह्वयते
देवयक्षंकिन्नरमेववा ॥ नकश्चिद्युयुधेतेनसमंदैत्येननारद ॥ ३४ ॥ ततोऽमरावतींक्रुद्धःसगत्वाशक्रमाह्वयत् ॥ नानेनस-
हयोद्धुंवैमतिंचक्रेपुरंदरः ॥ ३५ ॥ ततःसकरमुद्यम्यप्रविवेशामरावतीं ॥ प्रविशंतंनतंकश्चिन्निवारयितुमुत्सहे ॥ ३६ ॥
सगत्वाशक्रसदनंप्रोवाचेंद्रंमुरस्तदा ॥ देहियुद्धंसहस्राक्षनोचेत्स्वर्गंपरित्यज ॥ ३७ ॥ इत्येवमुक्तोमुरुणाब्रह्मन्
हरिहयस्तदा ॥ स्वर्गराज्यंपरित्यज्यभूचरःसमजायत ॥ ३८ ॥ ततोगजेंद्रंकुलिशौहृतौशक्रस्यशत्रुणा ॥ सकलत्रोम-
हातेजादेवैःसहसुतेनच ॥ ३९ ॥ कालिंद्यादक्षिणेकूलेनिविवेशपुरंहरिः ॥ मुरुश्चापिमहाभोगान्बुभुजेस्वर्गसंस्थि-
तः ॥ ४० ॥ दानवाश्चापरेरौद्रामयतारपुरोगमाः ॥ मुरुमासाद्यमाद्यंतेस्वर्गेसुकृतिनोयथा ॥ ४१ ॥ सकदाचिन्महीं-
पृष्ठंसमायातोमहासुरः ॥ एकाकीकुंजरारूढःसरयूंनिम्नगांप्रति ॥ ४२ ॥ ससरय्वास्तटेवीरंराजानंसूर्यवंशजं ॥ द-
दृशेरघुनामानंदीक्षितंयज्ञकर्मणि ॥ ४३ ॥ तमुपेत्याब्रवीद्दैत्योयुद्धंमेदीयतामिति ॥ नोचेन्निवर्ततांयज्ञोनेष्टव्यादेवता-
स्त्वया ॥ ४४ ॥ तमुपेत्यमहातेजामित्रावरुणसंभवः ॥ प्रोवाचबुद्धिमान्ब्रह्मन्वसिष्ठस्तपतांवरः ॥ ४५ ॥ किंतेजि-

तैर्नरैर्दैत्यअजिताननुशासय ॥ प्रहर्तुमिच्छसियदितंनिवारयचांतकं ॥ ४६ ॥ सबलीशासनंतेवैनकरोतिमहासुर ॥ त-
स्मिन्जितेहिविजितंसर्वमन्यच्चभूतलं ॥ ४७ ॥ सतद्वसिष्ठवचनंनिशम्यदनुपुंगवः ॥ जगामधर्मराजानंविजेतुंदंडपा-
णिनं ॥ ४८ ॥ तमायांतंयमःश्रुत्वामत्वावध्यंचसंयुगे ॥ ससमारुह्यमहिषंकेशवांतिकमागमत् ॥ ४९ ॥ समेत्यचाभिवा-
द्यैनंप्रोवाचमुरचेष्टितं ॥ सचाहगच्छमामद्यप्रेषयस्वमहासुरं ॥ ५० ॥ सवासुदेववचनंश्रुत्वाचत्वरयान्वितः ॥ एतस्मि-
न्नंतरेदैत्यःसंप्राप्तोनगरींमुरुः ॥ ५१ ॥ तमागतंयमःप्राहकिंमुरोकर्त्तुमिच्छसि ॥ वदस्ववचनंकर्त्तात्वदीयंदानवेश्वर ॥५२॥
मुरुरुवाच ॥ यमप्रजासंयमनान्निवृत्तिंकर्त्तुमर्हसि ॥ नोचेत्तवाद्यछित्वाहंमूर्धानंपातयेभुवि ॥ ५३ ॥ तमाहधर्मराड्वा-
क्यंयदिसंयमसेभवान् ॥ गोपितासिमुरोनित्यंकरिष्येवचनंतव ॥ ५४ ॥ मुरुस्तमाहभवतःकोऽधिकस्तंवदस्वमे ॥ अ-
हमेवपराजित्यवारयामिनसंशयः ॥ ५५ ॥ यमस्तंप्राहमेविष्णुर्देवश्चक्रगदाधरः ॥ श्वेतद्वीपनिवासीयःसमांसंयमते
ऽव्ययः ॥ ५६ ॥ तमाहदैत्यशार्दूलःक्वासौवसतिकीर्त्तय ॥ स्वयंतत्रगमिष्यामितस्यसंयमनोद्यतः ॥ ५७ ॥ तमुवा-
चयमोगच्छक्षीरोदंनामसागरं ॥ तत्रास्तेभगवान्विष्णुर्लोकनाथोजगन्मयः ॥ ५८ ॥ मुरुस्तद्वाक्यमाकर्ण्यप्राहग-
च्छामिकेशवं ॥ किंतुत्वयानतावद्धिसंयम्याधर्ममानवाः ॥ ५९ ॥ सप्राहगच्छत्वत्तोवाप्रवर्त्तिष्येजयंप्रति ॥ संयंतुवाय-
थावापिततोयुक्तंसमाचरे ॥ ६० ॥ इत्येवमुक्त्वावचनंदुग्धाब्धिमगमन्मुरुः ॥ यत्रास्तेशेषपर्यंकेचतुर्मूर्त्तिर्जनार्दनः ॥ ६१॥
नारदउवाच ॥ चतुर्मूर्त्तिःकथंविष्णुरेकएवनिगद्यते ॥ सर्वगत्वात्कथमपिअव्यक्तत्वाच्चतद्वद ॥ ६२ ॥ पुलस्त्यउवाच ॥
अव्यक्तःसर्वगोऽपीहएकएवमहामुने ॥ चतुर्मूर्त्तिर्जगन्नाथोयथाब्रह्मंस्तथाशृणु ॥ ६३ ॥ अप्रतर्क्यमनिर्देश्यंशुक्लंशांतं
परंपदं ॥ वासुदेवाख्यमव्यक्तंस्मृतंद्वादशपत्रकं ॥ ६४ ॥ नारदउवाच ॥ कथंशुक्लंकथंशांतमप्रतर्क्यमनिंदितं ॥ का-

न्यस्यद्वादशोक्तानिपत्रकाणिमहामुने ॥ ६५ ॥ पुलस्त्यउवाच ॥ शृणुष्ववचनंगुह्यंपरमेष्ठिप्रभाषितं ॥ श्रुतंसनत्कुमा-
रेणतेनाख्यातंचयन्मम ॥ ६६ ॥ नारदउवाच ॥ कोऽयंसनत्कुमारेतियथोक्तंब्रह्मणःस्वयं ॥ तवापितेनगदितंवदमामनु
पूर्वशः ॥ ६७ ॥ पुलस्त्यउवाच ॥ धर्मस्यभार्याहिंसाख्यातस्यांपुत्रचतुष्टयं ॥ संजातंमुनिशार्दूलयोगशास्त्रविचारकं
॥ ६८ ॥ ज्येष्ठःसनत्कुमारोभूद्द्वितीयश्चसनातनः ॥ तृतीयःसनकोनामचतुर्थश्चसनंदनः ॥ ६९ ॥ सांख्यवेत्तारमपरं-
कपिलंवोढुमासुरं ॥ दृष्ट्वापंचशिखंश्रेष्ठंयोगयुक्तंतपोनिधिं ॥ ७० ॥ ततस्तस्यासनंदद्याज्ज्यायानपिकनीयसे ॥ मौन
गुह्यंमहायोगंकपिलादीनुवाचसः ॥ ७१ ॥ सनत्कुमारश्चाभ्येत्यब्रह्माणंकमलोद्भवं ॥ अपृच्छद्योगविज्ञानंतमुवाचप्र-
जापतिः ॥ ७२ ॥ ब्रह्मोवाच ॥ कथयिष्यामितेसाध्ययदिपुत्रेतिमेवचः ॥ शृणोषिकुरुषेतच्चज्ञानंसांख्ययुतोभवान्
॥ ७३ ॥ सनत्कुमारउवाच ॥ पुत्रएवास्मिदेवेशयतःशिष्योस्म्यहंविभो ॥ नविशेषोऽस्तिपुत्रस्यशिष्यस्यचपितामह
॥ ७४ ॥ ब्रह्मोवाच ॥ विशेषःशिष्यपुत्राभ्यांविद्यतेधर्मनंदन ॥ धर्मकर्मसमायोगेतथापिगदतःशृणु ॥ ७५ ॥ पुन्ना-
म्नोनरकात्त्रातिपुत्रस्तेनेहगीयते ॥ शेषःपापहरःशिष्यइतीयंवैदिकीश्रुतिः ॥ ७६ ॥ सनत्कुमारउवाच ॥ कोऽयंपुन्ना-
मकोदेवयस्मात्त्रातिचपुत्रकः ॥ तस्माच्छेषंतथापापंहरेच्छिष्यश्चतद्वद ॥ ७७ ॥ ब्रह्मोवाच ॥ एतत्पुराणंपरमंमहर्षे
योगांगयुक्तंचतथासदैव ॥ तथैवचोग्रंभयहारिपुण्यंवदामितेशाम्यतियेनपापम् ॥ ७८ ॥ इतिश्रीवामनपुराणेभैरवप्रादु-
र्भावेषष्टितमोऽध्यायः ॥ ६० ॥ ॥ ॥ ॥ ॥ ॥
१०० ब्रह्मोवाच ॥ परदाराभिगमनंपापिनामुपसेवनं ॥ पारुष्यंसर्वभूतानांप्रथमंनरकंमतं ॥ १ ॥ फलस्तेयंमहापापंफल
हीनंतथाटनं ॥ छेदनंवृक्षजातीनांद्वितीयंनरकंस्मृतं ॥ २ ॥ वर्ज्यादानंतथादुष्टमवध्यवधबंधनं ॥ विवादोबांधवैःसार्धं

तृतीयंनरकंमतं ॥ ३ ॥ भयदंसर्वसत्वानांभवभूतिविनाशनं ॥ भ्रंशनंनिजधर्माणांचतुर्थंनरकंस्मृतं ॥ ४ ॥ मारणंमित्रकौटिल्यंमिथ्याभिशंसनंचयत् ॥ मिष्टैकाशनमित्युक्तंपंचमंतुनृयातनं ॥ ५ ॥ यत्रफलादिहरणंयमनंयोगनाशनं ॥ यानयुग्मस्यहरणंषष्ठमुक्तंनृयातनं ॥ ६ ॥ राजभागहरंमूढंराजजायानिषेवणं ॥ राज्ञामहितकर्तृत्वंसप्तमंनरकंस्मृतं ॥ ७ ॥ लुब्धत्वंलोलुपत्वंचलब्धधर्मार्थनाशनं ॥ लालासंकीर्णमेवोक्तमष्टमंनरकंस्मृतं ॥ ८ ॥ विप्रोक्तंब्रह्महरणंब्राह्मणानांविनिंदिनं ॥ विरोधंबंधुभिश्चोक्तंनवमंनरयातनं ॥ ९ ॥ शिष्टाचारविनाशंचशिष्टद्वेषंशिशोर्वधं ॥ शास्त्रस्तेयंधर्मस्तेयंदशमंपरिकीर्तितं ॥ १० ॥ षडंगनिधनंघोरंषाड्गुण्यप्रतिषेधनं ॥ एकादशंतथैवोक्तंनरकंसद्भिरुत्तमं ॥ ११ ॥ सत्सुनिंदासदाचौरमनाचारमसत्क्रिया ॥ संस्कारपरिहीनत्वमिदंद्वादशमुच्यते ॥ १२ ॥ हानिर्धर्मार्थकामानामपवर्गस्यहारणं ॥ संवेदःसंविदामेतत्त्रयोदशममुच्यते ॥ १३ ॥ क्षपणंधर्महीनंचयद्वर्ज्यंयच्चवह्निदं ॥ चतुर्दशंतथैवोक्तंनरकंतद्विगर्हितं ॥ १४ ॥ अज्ञानंचाप्यसूयत्वमशौचमशुभावहं ॥ स्मृतंतत्पंचदशकमसत्यवचनानिच ॥ १५ ॥ आलस्यंवैषोडशकंसक्रोधंचविशेषतः ॥ सर्वस्यचाततायित्वमावासेष्वग्निदापनं ॥ १६ ॥ इच्छाचपरदारेषुनरकायनिगद्यते ॥ ईर्ष्याभावश्चशास्त्रेषुउद्धृतत्वंविगर्हितं ॥ १७ ॥ एतैस्तुपापैःपुरुषःपुन्नामाद्यैर्नसंशयः ॥ संयुक्तःप्रीणयेद्देवंसंतत्याजगतःपतिं ॥ १८ ॥ प्रीतःसृष्ट्यातुशुभयासमभ्यास्तेतमच्युतं ॥ पुंनामनरकंघोरंविनाशयतिसर्वतः ॥ १९ ॥ एतस्मात्कारणात्साध्यततःपुत्रेतिगद्यते ॥ अतःपरंप्रवक्ष्यामिशेषपापस्यलक्षणं ॥ २० ॥ देयंदेवर्षिभूतानामनुजानांपितॄनथ ॥ लिप्सापरधनेष्वेवसर्ववर्णेषुचैकता ॥ २१ ॥ ओंकारादपिनिर्वृत्तिःपापकारिस्मृतिश्चसः ॥ कुरोर्वादोमहापापमगम्यागमनंतथा ॥ २२ ॥ घृतादिविक्रयोघोरश्चंडालादिपरिग्रहः ॥ स्वदोषच्छादनंपापंपरदोषप्रकाशनं ॥ २३ ॥

मत्सरित्वंवाग्दुष्टत्वंनिष्ठुरत्वंतथापरे ॥ टाकित्वंतालवादित्वंनाम्नावाचाप्यधर्मजं ॥ २४ ॥ दारुणत्वमधार्मित्वंनरकावह-
मुच्यते ॥ एतैश्चपापैःसंयुक्तःप्रीणयेद्यदिशंकरं ॥ २५ ॥ ज्ञानाधिकमशेषेणशेषंपापंजयेत्ततः ॥ शारीरंवाचिकंयच्चमा-
नसंसाधिकंचयत् ॥ २६ ॥ पितृमातृकृतंयच्चकृतंयच्चाश्रितैर्नरैः ॥ भ्रातृभिर्बांधवैश्चापितस्मिञ्जन्मनिधर्मज ॥ २७ ॥
तत्सर्वंविलयंयातिसधर्मःसुतशिष्ययोः ॥ विपरीतेभवेत्साध्यविपरीतःपदक्रमः ॥ २८ ॥ तस्माच्चपुत्रशिष्यौहिविधात
व्यौविपश्चिता ॥ एतदर्थमभिध्यायशिष्याच्छ्रेष्ठतरःसुतः ॥ शेषांस्तारयतेशिष्यःसर्वतोपिहिपुत्रकः ॥ २९ ॥ पुलस्त्य-
उवाच ॥ पितामहवचःश्रुत्वासाध्यःप्राहतपोधनः ॥ त्रिसत्यंतवपुत्रोहंदेवयोगंवदस्वमे ॥ ३० ॥ तमुवाचमहायोगीत-
न्मातापितरौयदि ॥ दास्यतेचततोयोगंदायादोह्यसिपुत्रक ॥ ३१ ॥ सनत्कुमारःप्रोवाचदायादपरिकल्पना ॥ येयं-
हिभगवताप्रोक्तातांमेत्वंख्यातुमर्हसि ॥ ३२ ॥ तदुक्तंसाध्यमुख्येनवाक्यंश्रुत्वापितामहः ॥ प्राहप्रहस्यभगवान्शृणु
वत्सेतिनारद ॥ ३३ ॥ औरसःक्षेत्रजश्चैवदत्तःकृत्रिमएवच ॥ गूढोत्पन्नोपविद्धश्चदायादाबांधवास्तुषट् ॥ ३४ ॥ अ-
मीषुषट्सुपुत्रेषुऋणपिंडधनक्रियाः ॥ गोत्रसाम्यंकुलेवृत्तिःप्रतिष्ठाशाश्वतीतथा ॥ ३५ ॥ कानीनश्चसहोढश्चक्रीतःपौ-
नर्भवस्तथा ॥ स्वयंदत्तःपारसवःषट्पुत्रास्तुप्रकीर्तिताः ॥ ३६ ॥ अमीषामृणपिंडादिकथानैवेहविद्यते ॥ नामधारक-
एवेहगोत्रेचकुलसंमतः ॥ ३७ ॥ ततस्यवचनंश्रुत्वाब्रह्मणःसनकाग्रजः ॥ उवाचैनंविशेषांहिब्रह्मन्मेख्यातुमर्हसि ॥३८॥
ततोब्रवीत्सुरपतिर्विशेषंशृणुपुत्रक ॥ औरसोयःस्वयंजातःप्रतिबिंबमिवात्मनः ॥ ३९ ॥ क्लीबोन्मत्तेव्यसनिनिपत्यौत-
स्याज्ञयातुयः ॥ भार्याह्यनातुरापुत्रंजनयेत्क्षेत्रजस्तुसः ॥४०॥ मातापितृभ्यांयोदत्तःसदत्तःपरिगीयते ॥ मित्रपुत्रंमित्र-
दत्तंकृत्रिमंप्राहुरुत्तमाः ॥ ४१ ॥ नज्ञायतेगृहेकेनजातस्त्वितिसगूढकः ॥ बाह्यतःस्वयमानीतःसोपविद्धःप्रकीर्तितः ॥४२॥

कन्याजातस्तुकानीनःसगर्भोढःसहोढजः ॥ मूल्यैर्गृहीतःक्रीतःस्याद्द्विविधःस्यात्पुनर्भवः ॥ ४३ ॥ दत्ताप्यकस्ययाक-
न्याभूयोऽन्यस्यप्रदीयते ॥ तज्जातस्तनयोज्ञेयोलोकेपौनर्भवःस्मृतः ॥ ४४ ॥ दुर्भिक्षेव्यसनेचापियेनात्माविनिवेदितः ॥
सस्वयंदत्तइत्युक्तस्तथान्यःकारणांतरैः ॥ ४५ ॥ ब्राह्मणस्यसुतःशूद्र्यांजायतेयस्तुसुव्रत ॥ ऊढायांचाप्यनूढायांसपार-
सवउच्यते ॥ ४६ ॥ एतस्मात्कारणात्पुत्रनस्वयंदातुमर्हसि ॥ स्वमात्मानंगच्छशीघ्रंपितरौसमुपाह्वय ॥ ४७ ॥ ततः
समातापितरौसस्मारवचनाद्विभोः ॥ तावाजग्मतुरीशानंद्रष्टुंवैदंपतीमुने॥४८॥ प्रणिपत्यतुब्रह्माणमादेशोदेवदीयताम्
॥ उपविष्टौसुखासीनौसाध्योवचनमब्रवीत् ॥ ४९ ॥ सनत्कुमारउवाच ॥ योगंजिगमिषुस्तातब्रह्माणंसमचूचुदं ॥ मा-
मुक्तवांस्तुपुत्रार्थेतस्मात्त्वंदातुमर्हसि ॥ ५० ॥ तावेवमुक्तौपुत्रेणयोगाचार्यंपितामहं ॥ उक्तवंतौप्रभोयंहिआवयोस्तन-
योऽस्तिच ॥५१ ॥ अद्यप्रभृत्ययंपुत्रस्तवब्रह्मन्भविष्यति ॥ इत्युक्त्वाजग्मतुःस्वर्गंयेनैवाभ्यागतौयथा ॥ ५२ ॥ पिता-
महोपितंपुत्रंसाध्यंचाविनयान्वितम् ॥ सनत्कुमारंप्रोवाचयोगंद्वादशपत्रकं ॥ ५३ ॥ शिखासंस्थस्तुओंकारोमेषोस्यशि-
रसिस्थितः ॥ पत्रंवैशाखमासोहिप्रथमंपरिकीर्तितं ॥ ५४ ॥ नकारोमुखसंस्थोपिवृषस्तत्रप्रकीर्तितः ॥ ज्येष्ठमासश्च
तत्पत्रंद्वीतीयंपरिकीर्तितं ॥ ५५ ॥ मोंकारोभुजयोर्युग्मंमिथुनस्तत्रसंस्थितः ॥ आषाढइतिविख्यातस्तृतीयंपत्रकंस्मृतं
॥ ५६ ॥ भकारंनेत्रयुगलंतत्रकर्कटकःस्थितः ॥ मासःश्रावणइत्युक्तश्चतुर्थंपत्रकंस्मृतं ॥ ५७ ॥ गकारंहृदयंप्रोक्तंसिं-
होवसतितत्रच ॥ मासोभाद्रपदःप्रोक्तःपंचमंपरिगीयते ॥ ५८ ॥ वकारंकवचंविद्यात्कन्यातत्रप्रतिष्ठिता ॥ मासश्चाश्व-
युजिप्रोक्तोषष्ठंतत्पत्रकंस्मृतं ॥ ५९ ॥ तेकारंमनसिप्रोक्तंतुलातत्रचसंस्थिता ॥ मासश्चकार्तिकोनामसप्तमंपत्रकंस्मृतं
॥ ६० ॥ वाकारंनाभिसंयुक्तंस्थितस्तत्रतुवृश्चिकः ॥ मासोमार्गशिरानामत्वष्टकंपत्रकंमुने ॥ ६१ ॥ सुकारंजघनंप्रो-

कंतत्रस्थश्चधनुर्धरः ॥ पौषोनिगदितोमासोनवमंपरिकीर्तितं ॥ ६२ ॥ देकारश्चांघ्रियुगलेतत्रस्थस्तिमिरउच्यते ॥
मासोमाघेतिविख्यातोदशमंपत्रकंस्मृतं ॥ ६३ ॥ वाकारोजानुयुग्मंचकुंभस्तत्रादिसंस्थितः ॥ पत्रकंफाल्गुनःप्रोक्तंतदे-
कादशमुत्तमं ॥ ६४ ॥ पादौयकारौमीनोऽपिसचैत्रेवसतेमुने ॥ इदंतुद्वादशंप्रोक्तंपत्रंवैकेशवस्यहि ॥ ६५ ॥ द्वादशारं
तथाचक्रंषण्णाभिद्वियुतंतथा ॥ त्रिव्यूहमेकमूर्तिश्चतथोक्तःपरमेश्वरः ॥ ६६ ॥ तत्रचोक्तंतुदेवस्यरूपंद्वादशपत्रकं ॥
यस्मिन्ज्ञातेमुनिश्रेष्ठनभूयोमरणंलभेत् ॥ ६७ ॥ द्वितीयमुक्तंसत्त्वाद्यंचतुर्वर्णंचतुर्मुखं ॥ चतुर्बाहुमुदारांगंश्रीवत्सधर-
मव्ययं ॥ ६८ ॥ तृतीयस्तामसोनामशेषमूर्तिःसहस्रधा ॥ सहस्रवदनःश्रीमान्प्रजाप्रलयकारकः ॥ ६९ ॥ चतुर्थो
राजसोनामरक्तवर्णश्चतुर्मुखः ॥ द्विभुजोधारयन्मालांसृष्टिकृत्त्वादिपूरुषः ॥ ७० ॥ अव्यक्तात्संभवंत्येतेत्रयोऽव्यक्ताम-
हामुने ॥ अतोमरीचिप्रमुखास्तथान्येपिसहस्रशः ॥ ७१ ॥ एतत्तवोक्तंमुनिवर्यरूपंविष्णोःपुराणंमतिपुष्टिवर्धनं ॥ च-
तुर्भुजंचापिमुरुर्दुरात्माकृतांतवाक्यात्पुनरासससाद ॥ ७२ ॥ तमागतंप्राहमुनेमधुघ्नप्राप्तोऽसिकेनासुरकारणेन ॥ सप्रा-
हयोद्धुंसहवैत्वयाद्यतंप्राहभूयोऽसुरपूगहंता ॥ ७३ ॥ यदीहमांयोद्धुमुपागतोसितत्कंपतेतेहृदयंकिमर्थम् ॥ ज्वरातुरस्येव
मुहुर्मुहुर्वैतन्नैवयोत्स्येसहकातरेण ॥ ७४ ॥ इत्येवमुक्तोमधुसूदनेनमुरुस्तदास्यहृदयेस्वहस्तं ॥ कथंककस्येतिमुरुस्तदो-
क्त्वानिपातयामासविपन्नबुद्धिः ॥ ७५ ॥ हरिश्चचक्रंमृदुलाघवेनमुमोचतद्धृत्कमलंचशत्रोः ॥ चिच्छेददेवास्तुगतव्यथा-
भवन्देवंप्रशंसंतिचपद्मनाभं ॥ ७६ ॥ एतत्तवोक्तंमुरदैत्यनाशनंकृतंहियुक्त्याशितचक्रपाणिना ॥ अतःप्रसिद्धंसमुपा-
जगाममुरारिरित्येवविभुर्नृसिंहः ॥ ७७ ॥ इतिश्रीवामनपुराणेभैरवप्रादुर्भावेमुरुवधोनामैकषष्टितमोऽध्यायः ॥ ६१ ॥ १०२
पुलस्त्यउवाच ॥ ततोमुरारिभुवनंसमभ्येत्यसुरास्ततः ॥ ऊचुर्देवंनमस्कृत्यजगत्संक्षोभकारणम् ॥ १ ॥ तच्छ्रुत्वाभगवान्

प्राहगच्छामोहरमंदिरं ॥ सर्वेत्स्यतिमहाज्ञानीजगत्क्षुब्धंचराचरं ॥ २ ॥ तथोक्तावासुदेवेनदेवाःशक्रपुरोगमाः ॥ ज-
नार्दनंपुरस्कृत्यजग्मुर्मंदरभूधरं ॥ नतत्रदेवंवृषभंनदेवींचननंदिनं ॥ ३ ॥ शून्यंगिरिमपश्यंतह्यज्ञानतिमिरावृताः ॥
तान्मूढदृष्टीन्संप्रेक्ष्यदेवोविष्णुर्महाद्युतिः ॥ ४ ॥ प्रोवाचकिंनपश्यध्वंमहेशंपुरतःस्थितं ॥ तमूचुर्नैवदेवेशंपश्यामोगि-
रिजापतिं ॥ ५ ॥ नविद्मःकारणंतच्चयेनदृष्टिर्हताहिनः ॥ तानुवाचजगन्मूर्तिर्यूयंदेवस्यसागसः ॥ ६ ॥ पापिष्ठागर्भ-
हंतारोमृडान्याःस्वार्थतत्पराः ॥ तेनज्ञानंविवेकोवाहृतोदेवेनशूलिना ॥ ७ ॥ येनाग्रतःस्थितमपिपश्यंतोपिनपश्यथ ॥
तस्मात्कायविशुद्ध्यर्थंदेवदृष्ट्यर्थमादरात् ॥ ८ ॥ तप्तकृच्छ्रेणसंशुद्धाःकुरुध्वंज्ञानमीश्वरे ॥ क्षीरस्नानंप्रयुंजीतसाग्रकुंभश-
तंपुरा ॥ ९ ॥ दधिस्नानेचतुःषष्टिर्द्वात्रिंशद्धविषोऽर्हणे ॥ पंचगव्यस्यशुद्धस्यकुंभाःषोडशकीर्तिताः ॥ १० ॥ मधुनोऽ-
ष्टौजलस्योक्ताःसर्वेतेद्विगुणाःसुराः ॥ ततोरोचनयादेवमष्टोत्तरशतेनहि ॥ ११ ॥ अनुलिंपेत्कुंकुमेनचंदनेनचभक्तितः
॥ बिल्वपत्रैःसकमलैःकर्पूरागरुचंदनैः ॥ १२ ॥ मंदारैःपारिजातैश्चअतिमुक्तैस्तथार्चयेत् ॥ अगरुंसहकालेयंचंदनेना-
पिधूपयेत् ॥ १३ ॥ जप्तव्यंशतरुद्रीयमृग्वेदोक्तंपदक्रमैः ॥ एवंकृतेतुदेवेशंपश्यध्वंनेतरेणहि ॥ १४ ॥ इत्युक्त्वावासुदे-
वेनदेवाःकेशवमब्रुवन् ॥ विधानंतप्तकृच्छ्रस्यकथ्यतांमधुसूदन ॥ यस्मिंश्चीर्णेकायशुद्धिर्भवतेसार्वकालिकी ॥ १५ ॥
वासुदेवउवाच ॥ त्र्यहमुष्णाःपिबेदापस्त्र्यहमुष्णंपयःपिबेत् ॥ त्र्यहमुष्णंपिबेत्सर्पिर्वायुभक्षोदिनत्रयं ॥ १६ ॥ पलाद्वा-
दशतोयस्यपलाष्टौपयसःसुराः ॥ षट्पलाःसर्पिषःप्रोक्तादिवसेदिवसेपिबेत् ॥ १७ ॥ पुलस्त्यउवाच ॥ इत्येवमुक्ते
वचनेसुराःकायविशुद्धये ॥ तप्तकृच्छ्ररहस्यंवैचक्रुःशक्रपुरोगमाः ॥ १८ ॥ ततोव्रतेसुराश्चीर्णेविमुक्ताःपापतोऽभवन् ॥

१ शतरुद्रीय नमस्तेरुद्रमन्यवइत्यादि । एकादशगुणान्वापि रुद्रानावर्त्यधर्मवित् । महापापैरपि स्पृष्टो मुच्यते नात्र संशय इत्यादिस्मृतेः । २ चीर्णे आचरिते ।

विमुक्तपापादेवेशंवासुदेवमथाब्रुवन् ॥ १९ ॥ क्वासौवदजगन्नाथशंभुस्तिष्ठतिकेशव ॥ यंक्षीराद्यभिषेकेणस्नापयामो
विधानतः ॥ २० ॥ अथोवाचसुरान्विष्णुरेषतिष्ठतिशंकरः ॥ मद्देहेकिंनपश्यध्वंयोगंप्राप्यप्रतिष्ठितं ॥ २१ ॥ तमूचुर्नै-
वपश्यामःस्वतोवैत्रिपुरांतकं ॥ सत्यंवदसुरेशानमहेशानःक्वतिष्ठति ॥ २२ ॥ ततोऽव्ययात्मासहरिःस्वहृत्पंकजशा-
यिनं ॥ दर्शयामासदेवानांमुरारिर्लिंगमैश्वरं ॥२३॥ ततोऽमराःक्रमेणैवक्षीरादिभिरनुत्तमैः ॥ स्नापयांचक्रिरेलिंगंशाश्व-
तंध्रुवमव्ययं ॥ २४ ॥ गोरोचनयात्वालिप्यचंदनेनसुगंधिना ॥ बिल्वपत्रांबुजैर्देवंपूजयामासुरंजसा ॥ २५ ॥ धूपयि-
त्वागुरुंभक्त्यानिवेद्यपरमौषधीः ॥ जप्त्वाष्टशतनामानिप्रणाममंचक्रिरेततः ॥ २६ ॥ इत्येवंचिंतयंतस्तेदेवदेवौहराच्युतौ ॥
कथंयोगत्वमापन्नौसत्त्वेनतमसावृतौ ॥ २७ ॥ सुराणांचिंतितंज्ञात्वाविश्वमूर्तिरभूद्विभुः ॥ सर्वलक्षणसंयुक्तःसर्वायुध-
धरोऽव्ययः ॥२८॥ सार्द्धद्विनेत्रंकमलाहिकुंडलंजटागुडाकेशखगर्षभध्वजं ॥ समाधवंहारभुजंगभूषणंपीताजिनाच्छिन्न-
कटिप्रदेशं ॥ २९ ॥ चक्रासिहस्तंहलशार्ङ्गपाणिंपिनाकशूलाजगवान्वितंच ॥ कपर्दखट्वांगकपालघंटंसशंखटंकाररवं
महर्षे ॥ ३० ॥ दृष्ट्वैवदेवाहरिशंकरंतंनमोऽस्तुतेसर्वगताव्ययेति ॥ प्रोक्तप्रणामाःकमलासनाद्याश्चक्रुर्मतिंचैकतरांनियु-
ज्य ॥ ३१ ॥ तानेकचित्तान्विज्ञायदेवान्देवपतिर्हरिः ॥ प्रगृह्याभ्यद्रवत्तूर्णंकुरुक्षेत्रंस्वमाश्रमं ॥ ३२ ॥ ततःपश्यंति
देवेशंस्थाणुभूतंजलेस्थितं ॥ दृष्ट्वानमःस्थाणवेतुप्रोक्त्वासर्वेप्युपाविशन् ॥ ३३ ॥ ततोऽब्रवीत्सुरपतिरेहिनोदीयतां
वरः ॥ क्षुब्धंजगज्जगन्नाथउन्मज्जस्वप्रियातिथे ॥ ३४ ॥ ततस्तांमधुरांवाणींशुश्रावऋषभध्वजः ॥ श्रुत्वात्तस्थौचवेगेन
सर्वव्यापीनिरंजनः ॥ ३५ ॥ नमोस्तुदेवदेवेभ्यःप्रोवाचप्रहसन्हरः ॥ सचागतःसुरैःसेंद्रैःप्रणतोविनयान्वितः ॥३६॥

१ तंभुजगकेशंगरुडध्वजंच इति पुस्तकान्तरे ॥

तमूचुर्देवताःसर्वास्त्यज्यतांशंकरद्रुतं ॥ महाव्रतंत्रयोलोकाःक्षुब्धास्तेतेजसार्दिताः ॥ ३७ ॥ अथोवाचमहादेवोमया
त्यक्तोमहाव्रतः ॥ ततःसुरादिवंजग्मुर्हृष्टाःप्रयतमानसाः ॥ ३८ ॥ ततोविकंपतेपृथ्वीसाब्धिद्वीपामहामुने ॥ ततोह्यचिंत-
यद्रुद्रःकिमर्थंक्षुभितामही ॥ ३९ ॥ ततःपर्यचरच्छूलीकुरुक्षेत्रंसमंततः ॥ ददर्शौघवतीतीरेउशनसंतपोनिधिं ॥ ४० ॥
ततोब्रवीत्सुरपतिःकिमर्थंतप्यतेतपः ॥ जगत्क्षोभकरंविप्रतच्छीघ्रंकथ्यतांमम ॥ ४१ ॥ उशनाउवाच ॥ तवाराधनकामा-
र्थंतप्यतेहिमहत्तपः ॥ तस्मात्संजीविनींविद्यांज्ञातुमिच्छेत्रिलोचन ॥ ४२ ॥ हरउवाच ॥ तपसापरितुष्टोस्मिसुतप्तेन
तपोधन ॥ तस्मात्संजीविनींविद्यांभवान्ज्ञास्यतितत्त्वतः ॥ ४३ ॥ वरंलब्ध्वाततःशुक्रस्तपसःसंन्यवर्त्तत ॥ तथापिचल-
तेपृथ्वीसाब्धिभूभृन्नगावृता ॥ ४४ ॥ ततोगमन्महादेवःसप्तसारस्वतंशुचि ॥ ददर्शनृत्यमानंचऋषिंमंकणसंज्ञितं
॥ ४५ ॥ भावेनपोप्लूयतिबालवत्सभुजौप्रसार्यैवननर्त्तवेगात् ॥ तस्यैववेगेनसमाहतातुचचालभूर्भूमिधरैःसहैव ॥ ४६ ॥
तंशंकरोऽभ्येत्यकरेनिगृह्यप्रोवाचवाक्यंप्रहसन्महर्षे ॥ किंभावितोनृत्यसिकेनहेतुनावदस्वमामद्यकिमत्रतुष्टिः ॥४७॥
सब्राह्मणःप्राहममाद्यतुष्टिर्येनेहजाताशृणुतद्द्विजेंद्र ॥ तपस्यतोमेबहवोगताहिसंवत्सराःकायविशोधनार्थं ॥ ४८ ॥
ततोऽनुपश्यामिकरात्क्षतोत्थंनिर्गच्छतेशाकरसंममेह॥तेनातितुष्टोस्मिभृशंद्विजेंद्रयेनास्मिन्नृत्यामिसुभावितात्मा ॥४९॥
तंप्राहशंभुर्द्विजपश्यमह्यंभस्मप्रवृत्तंकरतोतिशुक्लं ॥ संताडनादेवनचप्रहर्षोममास्तिनूनंहिभवान्प्रमत्तः ॥५०॥ श्रुत्वाथ
वाक्यंवृषभध्वजंतंनत्वामुनिर्मंकणकोमहर्षे ॥ नृत्यंपरित्यज्यसुविस्मितोऽथववंदपादौविनयानवस्थः ॥ ५१ ॥ तमाह
शंभुर्द्विजगच्छलोकंतंब्रह्मणादुर्गमएवयश्च ॥ इदंचतीर्थंप्रवरंपृथिव्यांपृथूदकंस्यात्सुमहत्फलंहि ॥ ५२ ॥ सान्निध्य-
मत्रैवसुरासुराणांगंधर्वविद्याधरकिंनराणां ॥ सदास्तुधर्मस्यनिधानमग्र्यंसारस्वतंपापमलापहारि ॥ ५३ ॥ सुप्रभा-

कांचनाक्षीचसुवेणुर्विमलोदका ॥ महोदराचौघवतीविशालाचसरस्वती ॥ ५४ ॥ एताःसप्तसरस्वत्योनिवसिष्यंतिनि-
त्यशः ॥ सोमपानफलंसर्वाःप्रयच्छंतिसुपुण्यदाः ॥ ५५ ॥ भवानपिकुरुक्षेत्रेमूर्त्तिंस्थाप्यगरीयसीं॥ गमिष्यतिमहापुण्यं
ब्रह्मलोकंसुदुर्गमं ॥ ५६ ॥ इत्येवमुक्तोदेवेनशंकरेणतपोधन ॥ मूर्त्तिंस्थाप्यकुरुक्षेत्रेब्रह्मलोकमगाद्वशी ॥ ५७ ॥ ग-
तेमंकणकेपृथ्वीनिश्चलासमजायत ॥ अथागान्मंदरंशंभुर्निजेनावसथंशुचि ॥ ५८ ॥ एवंतवोक्तंद्विजशंकरस्तुगतस्त-
दासीत्तपसस्तुशैले ॥ शून्येऽभ्ययाद्द्रष्टुमतिर्हिदेव्यासयोजितोयेनहिकारणेन ॥ ५९ ॥ इतिश्रीवामनपुराणेभैरवप्रादु-
र्भावेद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नारदउवाच ॥ गतोंधकस्तुपातालेकिमचेष्टतदानवः ॥ शंकरोमंदरस्थोपियच्चकारतदुच्यतां ॥१॥ पुलस्त्यउवाच ॥ पा-
तालस्थोंधकोब्रह्मन्बाध्यतेमदनाग्निना ॥ संतप्तविग्रहःसर्वान्दानवानिदमब्रवीत् ॥२॥ समेसुहृत्समेबंधुःसभ्रातासपिता
मम ॥ यस्तामद्रिसुतांशीघ्रंममांतिकमुपानयेत् ॥३॥ एवंब्रुवतिदैत्येंद्रेअंधकेमदनातुरे ॥ मेघगंभीरनिर्घोषंप्रह्लादोवाक्य-
मब्रवीत् ॥४॥ येयंगिरिसुतावीरसामाताधर्मतस्तव ॥ पितात्रिनयनोदेवःश्रूयतामत्रकारणं ॥५॥ तवपित्रात्वपुत्रेणधर्मनि-
त्येनदानव ॥ आराधितोहरोदेवःपुत्रार्थायपुराकिल ॥६॥ तस्मैत्रिलोचनेनासीद्दत्तोधोप्येवदानवः॥ पुत्रकःपुत्रकामस्यप्रो-
क्त्वेत्थंवचनंविभो ॥७॥ नेत्रत्रयंहिरण्याक्षसनर्मसुतयामम ॥ पिहितंयागसंस्थस्यततोध्वंमभवत्तमः ॥८॥ तस्माच्चतमसो
जातोभूतोनालिघनस्वनः ॥ तदिदंगृह्यतांदैत्यतवौपयिकमात्मजं ॥ ९ ॥ यदातुलोकविद्विष्टंकर्मचायंकरिष्यति ॥ त्रैलो-
क्यजननींचापित्वभिवांछिष्यतेऽधमः॥१०॥ घातयिष्यतिवाविप्रंयदाप्रक्षिप्यचासुर ॥ तदास्यस्वयमेवाहंकरिष्येकायशो-
षणं ॥११॥ एवमुक्त्वागतःशंभुःस्वस्थानंमंदराचलं॥त्वत्पितापिसमभ्यागात्त्वामादायरसातलं॥१२॥ एतेनकारणेनांबाशै-

ल्जातवदानव ॥ सर्वस्यापीहजगतोगुरुःशंभुःपिताध्रुवं ॥ १३ ॥ भवानपितथायुक्तःशास्त्रवेत्तागुणाद्भुतः ॥ नेदृशेपाप-
संकल्पेमतिंकुर्याद्भवद्विधः ॥१४॥ त्रैलोक्यप्रभुरव्यक्तोभवःसर्वैर्नमस्कृतः ॥ अजेयस्तस्यभार्येयंनत्वमर्होऽमरार्दन ॥१५॥
नचापिशक्तःसंप्राप्तुंशैलराजात्मजांशुभां ॥ अजित्वासगणंरुद्रंसचकामोऽथदुर्लभः ॥ १६ ॥ यस्तरेत्सागरंदोर्भ्यांपात-
येद्भुविभास्करं ॥ मेरुमुत्पाटयेद्वापिसजयेच्छूलपाणिनं ॥१७॥ उताहोस्विदिमांशक्तःक्रियांकर्तुंमहाबलः ॥ नचशक्यो
हरंज्ञातुंसत्यंसत्यंमयोदितं ॥ १८ ॥ किंत्वयानश्रुतंदैत्ययथादंडोमहीपतिः ॥ परस्त्रीकामनामूढःसराष्ट्रोनाशमाप्तवान्
॥ १९ ॥ आसीद्दंडोनामनृपःप्रभूतबलवाहनः ॥ सचवव्रेमहातेजाःपौरोहित्यायभार्गवं ॥ २० ॥ ईजेचविविधैर्यज्ञैर्नृप-
तिःशुक्रपालितः ॥ शुक्रस्यासीच्चदुहिताअरजानाममनामतः ॥ २१ ॥ शुक्रःकदाचिदगमद्वृषपर्वाणमासुरं ॥ तेनार्चित-
श्चिरंतत्रतस्थौभार्गवसत्तमः ॥ २२ ॥ अरजाःस्वगृहंवह्निंशुश्रूषंतीमहासुर॥अतिष्ठतसुचार्वंगीततोभ्यागान्नराधिपः ॥२३॥
सपप्रच्छक्वशुक्रेतितमूचुःपरिचारिकाः ॥ ततःसभगवान्शुक्रोयाजनायदनोःसुतं ॥२४ ॥ पप्रच्छनृपतिःकातुतिष्ठतेभार्ग-
वाश्रमे ॥ तास्तमूचुर्गुरोःपुत्रीसंतिष्ठत्यरजानृप ॥ २५ ॥ तामाश्रमेशुक्रसुतांदृष्ट्वामिक्ष्वाकुनंदनः ॥ प्रविवेशमहाबाहुर्द-
दर्शारजसंततः ॥ २६ ॥ तांदृष्ट्वाकामसंतप्तस्तत्क्षणादेवपार्थिवः ॥ संजातोंधकदंडश्चकृतांतबलचोदितः ॥ २७ ॥ वि-
सर्जयामासतदाभृत्यान्भ्रातॄन्सुहृत्तमान् ॥ शुक्रशिष्यानपिबलीएकाकीपृष्ठआव्रजत् ॥ २८ ॥ तमागतंशुक्रसुताप्रत्यु-
त्थाययशस्विनी ॥ पूजयामाससंहृष्टाभ्रातृभावेनदानव ॥ २९ ॥ ततस्तामाहनृपतिर्बालेकामाग्नितापितं ॥ मांसमा-
ह्लादयस्वाद्यस्वपरिष्वंगवारिणा ॥ ३० ॥ सापिप्राहनरश्रेष्ठंसविनीतातमासुरं ॥ पितामममहाक्रोधीत्रिदशानपिनि-
र्दहेत् ॥ ३१ ॥ मूढबुद्धेभवान्भ्राताममापिस्वयमागतः ॥ भगिनीधर्मतस्तेहंभवान्शिष्यःपितुर्मम ॥ ३२ ॥ सोब्रवीद्धी-

रुमांशुक्रःकालेनपरिवक्ष्यति ॥ कामाग्निर्निर्दहतिमामद्यैवतनुमध्यमे ॥ ३३ ॥ साप्राहदंडंनृपतिंमुहूर्तंपरिपालय ॥
तमेवयाचस्वगुरुंसतेदास्यत्यसंशयं ॥ ३४ ॥ दंडोब्रवीत्सुतन्वंगिकालक्षेपोनमेक्षमः ॥ हुतावसरकर्तृत्वेविघ्नमायातिसुं-
दरि ॥ ३५ ॥ ततोब्रवीत्त्रविरजानाहंत्वांपार्थिवात्मज ॥ दातुंशक्तातथात्मानमस्वतंत्राहियोपितः ॥३६॥ किंवातेबहु-
नोक्तेनमात्वंनाशंनराधिप ॥ गच्छस्वशुक्रशापेनसभृत्यज्ञातिबांधवः ॥ ३७ ॥ ततोऽब्रवीन्नरपतिःसुतनुशृणुचेष्टितं ॥चि-
त्रांगदायायद्वृत्तंपुरादेवयुगेशुभे ॥ ३८ ॥ विश्वकर्मसुतासाध्वीनाम्नाचित्रांगदाभवत् ॥ रूपयौवनसंपन्नापद्महीनातु
पद्मिनी ॥ ३९ ॥ साकदाचिन्महारण्यंसखीभिःपरिवारिता ॥ जगामनिमिषंनामस्नातुंकमललोचना ॥ ४० ॥ सा-
स्नातुमवतीर्णाचअथाभ्यागान्नरेश्वरः ॥ सुदेवतनयोधीमान्सुरथोनामनामतः ॥४१॥ संवृतासासखीःप्राहवचनंसत्वसं-
युतं ॥ असौनराधिपसुतोमदनेनकदर्थ्यते ॥ ४२ ॥ यदर्थंचक्षमंमेस्यस्वप्रदानंसुरूपिणः ॥ सख्यस्तामब्रुवन्बाला
अप्रगल्भासिसुंदरि ॥ ४३ ॥ अस्वातंत्र्यंतवास्तीहप्रदानेस्वात्मनोनघे ॥ पितातवास्तिधर्मिष्ठःसर्वशास्त्रविशारदः
॥ ४४ ॥ नतेयुक्तमिहात्मानंदातुंनरपतेःस्वयं ॥ एतस्मिन्नंतरेराजासुरथःसत्यकःशुचिः ॥ ४५ ॥ समभ्येत्याब्रवीदेनां-
कंदर्पशरपीडितः ॥ त्वंमुग्धेमोहयसिमांदृष्ट्यैवमदिरेक्षणे ॥ ४६ ॥ त्वद्दृष्टिशरबाणेनस्मरेणाभ्येत्यताडितः ॥ त-
न्मांकुचतलेतल्पेअभिशायितुमर्हसि ॥ ४७ ॥ नोचेत्प्रवक्ष्यतेकामोभूयोभूयोतिदर्शनात् ॥ ततःसाचारुसर्वांगीराज्ञो-
राजीवलोचना ॥ ४८ ॥ वार्यमाणासखीभिस्तुप्रादादात्मानमात्मना ॥ एवंपुरातयातन्व्यापरित्रातःसभूपतिः ॥ ४९ ॥
तस्मात्त्वमपिसुश्रोणिमांपरित्रातुमर्हसि ॥ अरजस्काब्रवीद्दंडंतस्यायद्वृत्तमुत्तमं ॥ ५० ॥ किंत्वयानपरिज्ञातंतस्मात्तत्क-
थयाम्यहं ॥ तदातयातुतन्वंग्यासुरथस्यमहीपतेः ॥ ५१ ॥ आत्माप्रदत्तःस्वातंत्र्यंततस्तमशपत्पिता ॥ यस्माद्धर्मप-

रित्यज्यस्त्रीभावान्मंदचेतसे ॥ ५२ ॥ आत्माप्रदत्तस्तस्माद्विनविवाहोभविष्यति ॥ विवाहरहितानैवसुखंलप्स्यसिभ-
र्तृतः ॥ ५३ ॥ नचपुत्रफलंनैवपतिनायोगमेष्यसि ॥ उत्सृष्टमात्रेशापेतुह्यपोवाहसरस्वती ॥ ५४ ॥ अकृतार्थंनरप-
तिंयोजनानित्रयोदश ॥ अपकृष्टेनरपतौसापिमोहमुपागता ॥ ५५ ॥ ततस्ताःसिषिचुःसर्वाःसरस्वत्याजलेनहि ॥ सा
सिच्यमानासुतरांशिशिरेणाथवारिणा ॥ ५६ ॥ मृतकल्पामहोत्साहाविश्वकर्मसुताभवत् ॥ तांमृतामिवविज्ञायजग्मुः
सख्यस्त्वरान्विताः ॥ ५७ ॥ आहर्तुमपराःकाष्ठंवह्निमानेतुमाकुलाः ॥ साचतास्वपिसर्वासुगतासुवनमुत्तमं ॥ ५८ ॥
संज्ञांलेभेसुचार्वंगीदिशश्चेत्यवलोक्यच ॥ अपश्यंतीनरपतिंतथास्निग्धंसखीजनं ॥ ५९ ॥ निपपातसरस्वत्यावयोभि-
स्त्वरितेक्षणा ॥ तांवेगात्कांचनाक्षींतुमहानद्यांनरेश्वर ॥ ६० ॥ गोमत्यांचपरिक्षेपतरंगकुटिलेजले ॥ तथापितस्या-
स्तद्भाव्यंविदित्वाथविशांपते ॥ ६१ ॥ महावनेपरिक्षिप्तासिंहव्याघ्रसमाकुले ॥ एवंतस्यास्त्वयंतत्रयाअवस्थाश्रुताम-
या ॥ ६२ ॥ तस्मान्नदास्याम्यात्मानंरक्षंतीशीलमुत्तमं ॥ तस्यास्तद्वचनंश्रुत्वादंडःशक्रसमोबली ॥ विहस्यत्वरजांप्रा-
हस्वार्थमंगक्षयंकरं ॥ ६३ ॥ दंडउवाच ॥ तस्यायदुत्तरंवृत्तंतत्पितुश्चकृशोदरि ॥ सुरथस्यतथाराज्ञस्तच्छ्रोतुंमतिमा-
दधे ॥ ६४ ॥ यदाप्रकृष्टेनृपतौपतितासामहावनं ॥ तथागगनसंचारीदृष्टवान्गुह्यकोजनः ॥ ६५ ॥ ततःसोभ्येत्यतां
बालांपरिभाष्यप्रयत्नतः ॥ प्राहआगच्छसुभगेनयातिसुरथंप्रति ॥ ६६ ॥ ध्रुवमेष्यसितेनत्वंसंयोगमसितेक्षणे ॥
तस्माद्गच्छस्वशीघ्रंत्वंद्रष्टुंश्रीकंठमीश्वरं ॥ ६७ ॥ इत्येवमुक्तासातेनगुह्यकेनसुलोचना ॥ श्रीकंठमागतातूर्णंकालिंद्या
दक्षिणोत्तरं ॥ ६८ ॥ दृष्ट्वामहेशंश्रीकंठंस्नात्वारविसुताजले ॥ अतिष्ठतशिरोनम्रायावन्मध्येस्थितोरविः ॥ ६९ ॥ अ-
थाजगामदेवस्यस्नानंकर्तुंतपोधनः ॥ शुभःपाशुपताचार्यःसामवेदीऋतुध्वजः ॥ ७० ॥ रुदतीमिवस्थितांतामनंगपरि-

वर्जितां ॥ तांदृष्ट्वासमुनिर्ध्यानमगमत्केयमित्यथ ॥ ७१ ॥ अथसातमृषिंवंद्यकृतांजलिरुपस्थिता ॥ तांप्राहपुत्रिकस्या-
सिसुतासुरसुतोपमा ॥ ७२ ॥ किमर्थमागतासीहनिर्मनुष्यमृगेवने ॥ ततःसाप्राहतमृषिंयथातथ्यंकृशोदरी ॥ ७३ ॥
श्रुत्वर्षिःकोपमगमदशपच्छिल्पिनांवरं ॥ यस्मात्स्वतनुजातेयंपरदेयापिपापिना ॥ ७४ ॥ योजितानैवपतिनातस्मा-
च्छाखामृगोऽस्तुसः ॥ इत्युक्त्वासमहाभागोभूयःस्नात्वाविधानतः ॥ ७५ ॥ उपास्यपश्चिमांसंध्यांपूजयामासशंकरं ॥
संपूज्यदेवदेवेशंयथोक्तविधिनाहरं ॥ ७६ ॥ उवाचागम्यतांसुभ्रूंरुदंतींपतिलालसां ॥ गच्छस्वसुभगेदेशंसप्तगोदावरं
शुभं ॥ ७७ ॥ तत्रोपास्यमहादेवंमहांतंहाटकेश्वरं ॥ तत्रस्थितायारंभोरुख्यातादेववतीशुभा ॥ ७८ ॥ आगमिष्य-
तिदैत्यस्यपुत्रीकंदरमालिनः ॥ तथान्यागुह्यकसुतादमयंतीतिविश्रुता ॥ ७९ ॥ अंजनस्यापितत्रापिसमेष्यतितपस्वि-
नी ॥ तथापरावेदवतीपर्जन्यदुहिताशुभा ॥ ८० ॥ यदातिस्रःसमेष्यंतिसप्तगोदावरेजले ॥ हाटकाख्येमहादेवेतदा
संयोगमेष्यसि ॥ ८१ ॥ इत्येवमुक्तामुनिनाबालाचित्रांगदातदा ॥ सप्तगोदावरंतीर्थमगमत्त्वरिताततः ॥ ८२ ॥ सं-
प्राप्यतत्रदेवेशंपूजयंतीत्रिलोचनं ॥ समध्यास्तेशुचिपराफलमूलाशनाभवत् ॥ ८३ ॥ सचर्षिर्ज्ञानसंपन्नःश्रीकंठायततो-
ऽलिखत् ॥ श्लोकंत्वेकंमहात्मानंतस्याश्चप्रियकाम्यया ॥ ८४ ॥ नसोऽस्तिकश्चित्त्रिदशोऽसुरोवायक्षोथमर्त्योरजनी-
चरोवा ॥इदंहिदुःखंमृगशावनेत्र्यानिर्माजयेद्यःस्वपराक्रमेण ॥८५॥ इत्येवमुक्त्वासमुनिर्जगामद्रष्टुंविभुंपुष्करनाथमीड्यं
॥ नदींपयोष्णींमुनिवृंदवंद्यांसंचिंतयन्नेवविशालनेत्रां ॥ ८६ ॥ इतिश्रीवामनपुराणेभैरवप्रादुर्भावेदंडोपाख्यानेत्रि-
षष्टितमोऽध्यायः ॥ ६३ ॥ ॥ ॥ ॥ ॥ ॥ ॥
दंडउवाच ॥ चित्रांगदायास्त्वरजेतत्रसत्यायथासुखं ॥ स्मरंत्याशुरथंवीरंमहान्कालःसमभ्यगात् ॥ १ ॥ विश्वकर्मा-

पिमुनिनाशप्तोवानरतांगतः ॥ न्यपतन्मेरुशिखराद्भूपृष्ठेविधिनोदितः ॥ २ ॥ वनंघोरंसुगुल्माढ्यंनदींशालूकिनीमनु ॥
सत्वेवंपर्वतश्रेष्ठंसमावसतिसुंदरि ॥ ३ ॥ तत्रासतोऽस्यसुचिरंफलमूलान्यथाश्नतः ॥ कालोत्यगाद्वरारोहेबहुवर्षगणो
वने ॥ ४ ॥ एकदादैत्यशार्दूलःकंदराख्यःसुतांप्रियां ॥ प्रतिगृह्यसमभ्यागात्ख्यातांवेदवतींदिवि ॥ ५ ॥ तांचतद्वन-
मायातांसमंपित्रावराननां ॥ ददर्शवानरश्रेष्ठःप्रजग्राहबलात्करे ॥ ६ ॥ ततोगृहीतांकपिनासदैत्यःस्वसुतांशुभे ॥
कंदरोवीक्ष्यसंक्रुद्धःखड्गमुद्यम्यचाद्रवत् ॥ ७ ॥ तमापतंतंदैत्येंद्रंदृष्ट्वाशाखामृगोबली ॥ तथैवसहचार्वंग्याहिमाचलमुपा-
गमत् ॥ ८ ॥ ददर्शचमहादेवंश्रीकंठंयमुनातटे ॥ तस्याविदूरेगहनमाश्रमंऋषिवर्जितं ॥ ९ ॥ तस्मिन्महाश्रमेपुण्ये
स्थाप्यदेववतींकपिः ॥ न्यमज्जतसकालिंद्यांपश्यतःकंदरस्यहि ॥ १० ॥ सोऽजानतमृतांपुत्रींसमंशाखामृगेणहि ॥ ज-
गामचमहातेजाःपातालंनिलयंनिजं ॥ ११ ॥ सचापिवानरोदेव्याकालिंद्यावेगतोभृशं ॥ नीतःशिवेतिव्याख्यातंदेशं
स्फीतजनाश्रितं ॥ १२ ॥ ततस्तीर्त्वाथवेगेनसकपिलवनंप्रति ॥ गंतुकामोमहातेजायत्रान्यस्तासुलोचना ॥ १३ ॥
अथापश्यत्समायातमंजनंगुह्यकोत्तमं ॥ दमयंत्यासमंपुत्र्यागलाजिगमिषुःकपिः ॥ १४ ॥ तांदृष्ट्वामन्यतश्रीमान्सेयं
देववतीध्रुवं ॥ तन्मेवृथाश्रमोजातोजलमज्जनसंभवः ॥ १५ ॥ इतिसंचिंतयन्नेवसमाद्रवतसुंदरि ॥ सातद्भयाच्चन्यपतन्न-
दींचैवहिरण्वतीं ॥ १६ ॥ गुह्यकोवीक्ष्यतनयांपतितामापगाजले ॥ दुःखशोकसमायुक्तोजगामांजनपर्वतं ॥ १७ ॥
तत्रासौतपआस्थायमौनव्रतधरःशुचिः ॥ समास्तेवैमहातेजाःसंवत्सरगणान्बहून् ॥ १८ ॥ दमयंत्यपिवेगेनहिरण्व-
त्यापवाहिता ॥ नीतादेशंमहापुण्यंकोशलंसाधुभिर्युतं ॥ १९ ॥ गच्छंतीसाचरुदतीददर्शवटपादपं ॥ प्ररोहप्रावृतत-
नुंजटाधरमिवेश्वरं ॥ २० ॥ तंदृष्ट्वाविपुलच्छायंविशश्रामवरानना ॥ उपविष्टाशिलापट्टेततोवाचंप्रशुश्रुवे ॥ २१ ॥ न

सोस्तिपुरुषःकश्चिद्यस्त्वंब्रूयात्तपोधनं ॥ यथासतनयस्तुभ्यमुद्बधोवटपादपे ॥ २२ ॥ साश्रुत्वातांतदावाणींविशिष्टाक्षर-
संयुतां ॥ तिर्यगूर्ध्वमधश्चैवसमंतादवलोकयन् ॥ २३ ॥ ददर्शवृक्षशिखरेशिशुंपंचाब्दकंस्थितं ॥ पिंगलाभिर्जटाभि-
स्तुउद्बद्धंयत्नतःशुभे ॥ २४ ॥तंविब्रुवंतंदृष्ट्वैवदमयंतीसुदुःखिता ॥ प्राहकेनासिबद्धस्त्वंपापिनावदपोतक ॥२५॥ सताम्मा-
हमहाभागेबद्धोस्मिकपिनावटे ॥ जटास्वेवंसुदुष्टेनजीवामितपसोबलात् ॥२६॥ पुरामनुपुरेचैवतत्रदेवोमहेश्वरः ॥ तत्रा-
स्तितपसोराशिःपितामममऋतध्वजः ॥ २७ ॥ तस्यास्मितप्यमानस्यमहायोगान्महात्मनः ॥ जातोऽलिवृंदसंयुक्तःसर्व-
शास्त्रविशारदः ॥ २८ ॥ ततोमामब्रवीत्तातोनमस्कृत्यशुभानने ॥ जाबालीतिपरिज्ञायतच्छृणुष्वशुभानने॥२९॥पंच-
वर्षसहस्राणिबालएवभविष्यति ॥ दशवर्षसहस्राणिकुमारत्वेभरिष्यति ॥ ३० ॥ विंशतिर्यौवनस्थायीस्थाविर्येद्विगुणं
ततः ॥ पंचवर्षशतान्बालोभोक्ष्यसेबंधनंदृढं ॥ ३१ ॥ दशवर्षशतान्येवकौमारेकायपीडनं ॥ यौवनेपरमान्भोगान्द्विस-
हस्रंसमास्तथा ॥ ३२ ॥ चत्वारिंशच्छतान्येववार्धकेक्लेशमुत्तमं ॥ आप्स्यसेभूमिशय्यायांकदन्नाशनभोजनं ॥ ३३ ॥
इत्येवमुक्तःपित्राहंबालःपंचाब्ददेशकः ॥ विचरामिमहीपृष्ठंगच्छन्स्नातुंहिरण्वतीं ॥ ३४ ॥ ततोऽपश्यंकपिवरंसोवदन्मां
क्वयास्यसि ॥ इमांदेववतींगृह्यमूढन्यस्तांमहाश्रमे ॥ ३५ ॥ ततोऽसौमांसमादायविस्फुरंतंशिशुंततः ॥ वटाग्रेऽस्मिन्नु-
द्बबंधजटाभिरपिसुंदरि ॥ ३६ ॥ तथाचरक्षाकपिनाकृताभीरुनिरंतरैः लतापाशैर्महायंत्रमध्यस्थादुष्टबुद्धिना ॥ ३७ ॥
अभेद्योयमनाक्रम्यउपरिष्टात्तथावधः ॥ दिशांमुखेषुसर्वेषुकृतंयंत्रंलतामयं ॥३८॥ संयम्यमांकपिवरःप्रयातोऽमरपर्वतं ॥
यथेच्छयामयादृष्टमेतत्तेगादितंशुभे ॥ ३९ ॥ भवतीकामहारण्येललनापतिवर्जिता ॥ समायातासुचार्वंगीकेनकार्येणमां
वद ॥ ४० ॥ साब्रवीदंजनोनामगुह्यकेंद्रःपितामम ॥ दमयंतीतिमेनामप्रम्लोचागर्भसंभवा ॥ ४१ ॥ तत्रमेजातके

प्रोक्तमृषिणामुद्गलेनाहि ॥ इयंनरेंद्रमहिषीभविष्यतिनसंशयः ॥ ४२ ॥ तद्वाक्यसमकालंतुन्यनदद्दिविदुंदुभिः ॥ शि-
वाश्चाशिवानिर्घोषास्ततोभूयोऽब्रवीन्मुनिः ॥ ४३ ॥ नसंदेहोनरपतेमहाराज्ञीभविष्यति ॥ महान्तंसंशयंघोरंकन्याभावे
समेष्यसि ॥ ४४ ॥ ततोजगामसऋषिरेवमुक्त्वावचोद्भुतं ॥ पितामामपिचादायसमागंतुमथैच्छत ॥ ४५ ॥ तीर्थंततो
हिरण्वत्यास्तीरात्कपिरथोत्पतत् ॥ तद्भयाच्चमयाह्यात्माक्षिप्तःसागरगाजले ॥ तयास्मिंदेशमानीताइमंमानुपवर्जितं
॥ ४६ ॥ दंडउवाच ॥ श्रुत्वाजाबालिरथतद्वचनंवैतयोदितं ॥ प्राहसुंदरिगच्छस्वश्रीकंठंयमुनातटे ॥४७॥ तत्रागच्छ-
तिमध्याह्नेमत्पिताशिवमर्चितुं ॥ तस्मैनिवेदयाशुत्वंततःश्रेयोऽभिलिप्स्यसे ॥४८॥ ततस्तुत्वरिताकालेदमयंतीतपोनिधिं ॥
परित्राणार्थमगमद्धिमाद्रौयमुनांनदीं ॥ ४९ ॥ सात्वदीर्घेणकालेनकंदमूलफलाशना ॥ संप्राप्ताशंकरस्थानंयत्रा-
गच्छतितापसः ॥ ५० ॥ ततःसादेवदेवेशंश्रीकंठंलोकवंदितं ॥ प्रतिबंधततोऽपश्यदक्षराणिमहामुने ॥ ५१ ॥ तेपामर्थं
हिविज्ञायसातदाचारुहासिनी ॥ जापमाल्युदितंश्लोकमालिखच्चान्यमात्मना ॥ ५२ ॥ मुद्गलेनास्मिगदिताराजपत्नी
भविष्यति ॥ साचावस्थामिमांप्राप्ताकश्चिन्मांत्रातुमीश्वरः ॥ ५३ ॥ इत्युल्लिख्याशिलापट्टेगतास्नातुंयमानुजां ॥ ददृशे
चाश्रमवरंमत्तकोकिलनादितं ॥५४॥ अतोमध्यमसाऽऽर्षिर्नूनंतिष्ठतिसत्तमः ॥ इत्येवंचिंतयातिसासंप्रविष्टामहाश्रमं॥५५॥
ततोददर्शदेवानांस्थितांदेववतींशुभां ॥ शुष्कास्यांचलनेत्रांतुपरिम्लानामिवाब्जिनीं ॥ ५६ ॥ साचापतंतींददृशेयक्षजां
दैत्यनंदिनीं ॥ केयमित्येवसंचिंत्यसमुत्थायास्थिराभवत् ॥ ५७ ॥ ततोऽन्योऽन्यंसमाश्लिष्यगाढंगाढंसुहृत्तया ॥ पर्यपृ-
च्छत्तदान्योन्यंकथयामासतुस्ततः ॥ ५८ ॥ तेपरिज्ञाततत्त्वार्थेअन्योन्यंललनोत्तमे ॥ समासानेकथाभिस्तेनानारूपाभि-
रादरात् ॥ ५९ ॥ एतस्मिन्नंतरेप्राप्तःश्रीकंठमर्चितुंमुनिः ॥ ऋतध्वजोमुनिश्रेष्ठस्ततोऽपश्यदथाक्षरान् ॥ ६० ॥ सदृष्ट्वा

वाचयित्वाचतदर्थमधिगम्यच ॥ मुहूर्तंध्यानमास्थायव्यजानात्सतपोनिधिः ॥ ६१ ॥ ततःसंपूज्यदेवेशंत्वरयामासऋतध्वजः ॥ अयोध्यामगमत्क्षिप्रंद्रष्टुमिक्ष्वाकुमीश्वरं ॥ ६२ ॥ तंदृष्ट्वानृपतिश्रेष्ठंतापसोवाक्यमब्रवीत् ॥ श्रूयतांनरशार्दूलविज्ञप्तिर्ममपार्थिव ॥ ६३ ॥ ममपुत्रोगुणैर्युक्तःसर्वशास्त्रविशारदः ॥ उद्बद्धःकपिराजेनविपर्यांतेतवैवहि ॥ ६४ ॥ तंहिमोचयितुंनान्यःशक्तस्त्वत्तनयादृते ॥ शकुनिर्नामराजेंद्रसहास्त्रविधिपारगः ॥ ६५ ॥ तन्मुनेर्वाक्यमाकर्ण्यपिताममकृशोदरि ॥ आदिदेशप्रियंपुत्रंशकुनिंनामशांतये ॥ ६६ ॥ ततःप्रहसितःपित्राभ्राताममममहाभुजः ॥ संप्राप्तोथवनोद्देशंसमंहिपरमर्षिणा ॥ ६७ ॥ दृष्ट्वान्यग्रोधमत्युच्चंप्ररोहश्वेतदिङ्मुखं ॥ ददर्शवृक्षशिखरेउद्बद्धमृषिपुत्रकम् ॥ ६८ ॥ ततश्चललतापाशंदृष्टवान्ससमंततः ॥ दृष्ट्वासमुनिपुत्रंतंस्वजटासंयतंवटे ॥ ६९ ॥ धनुरादायबलवानधिज्यंसचकारह ॥ लाघवादृषिपुत्रस्यसमंचिच्छेदमार्गणैः ॥ ७० ॥ कपिनायत्कृतंपूर्वंलतापाशंचतुर्दिशं ॥ पंचवर्षशतेकालेगतेकृत्तंतदाशरैः ॥ ७१ ॥ लताच्छन्नंततस्तूर्णमारुरोहमुनिर्वटं ॥ प्राप्तंस्त्रापितरंदृष्ट्वाजाबालिःसंयतोऽपिसन् ॥ ७२ ॥ आदरात्पितरंमूर्ध्नाववंदेतुविधानतः ॥ संपरिष्वज्यसमुनिर्मूर्ध्न्याघ्रायसमंततः ॥ ७३ ॥ उन्मोचयितुमारब्धोनशशाकसुयंत्रितः ॥ ततस्तूर्णंधनुर्नाम्यबाणांश्चशकुनिर्बली ॥ ७४ ॥ आरुरोहवटंतूर्णंसमुन्मोचयितुंजटाः ॥ नचशक्नोतिसंयत्तंदृढंकपिवरेणहि ॥ ७५ ॥ यदानशकितस्तेनसममंमोचयितुंजटाः ॥ तदावतीर्णःशकुनिःसहितःपरमर्षिणा ॥ ७६ ॥ जग्राहचधनुर्बाणांश्चकारशरमंडपं ॥ लाघवादर्धचंद्राभ्यांशाखांचिच्छेदसात्रिधा ॥ ७७ ॥ शाखयाकृत्तयाचासौभारवाहीतपोधनः ॥ शरसोपानमार्गेणअवतीर्णोथपादपात् ॥ ७८ ॥ तस्मिंस्तथास्वेतनयेऋतध्वजस्ततोनरेंद्रस्यसुतेनधन्विना ॥ जाबालिनाभारवहेनसंयुतःसमाजगामाथनदींससूर्यजां ॥ ७९ ॥ इतिश्रीवामनपुराणेचतुःषष्टितमोऽध्यायः ॥ ६४ ॥

दंडकउवाच ॥ एतस्मिन्नंतरेबालेयक्षासुरसुतेमुने ॥ समागतेहरंद्रष्टुंतंमुनिर्योगिनांवरं ॥ १ ॥ ददर्शातेपरिम्लानंसंशुष्क-
कुसुमंविभुं ॥ बहुनिर्माल्यसंयुक्तंगतेतस्मिन्नृतध्वजे ॥ २ ॥ ततस्तुवीक्ष्यदेवेशंतेउभेवरकन्यके ॥ स्नापयेतेविधाने-
नपूजयेतेअहर्निशं ॥ ३ ॥ ताभ्यांस्थिताभ्यांतत्रैवऋषिरभ्यागमद्वनं ॥ द्रष्टुंश्रीकंठमव्यक्तंगालवोनाममनास्वतः ॥ ४ ॥
सदृष्ट्वाकन्यकायुग्मंकस्येदमितिचिंतयन् ॥ प्रविवेशमुनिःस्नात्वाकालिंद्याविमलेजले ॥ ५ ॥ ततोनुपूजयामाससश्रीकंठं
गालवोमुनिः ॥ गायेतेसुस्वरंगीतंयक्षासुरसुतेततः ॥ ६ ॥ ततः संगीतमाकर्ण्यगालवोह्येजानत ॥ गंधर्वकन्यकेचैवसंदे-
होनात्रविद्यते ॥ ७ ॥ संपूज्यदेवमीशानंगालवस्तुविधानतः ॥ कृतजप्यःसमभ्यास्तेकन्याभ्यामभिवादितः ॥ ८ ॥
ततःपप्रच्छसमुनिःकन्यकेकस्यकथ्यतां ॥ कुलालंकारकरणेभक्तियुक्तेभवस्थाहि ॥ ९ ॥ तमूचतुर्मुनिश्रेष्ठंयाथातथ्यंशु-
भानने ॥ जातोविदितवृत्तांतोगालवस्तपतांवरः ॥ १० ॥ समुष्यतत्ररजनींताभ्यांसंपूजितोमुनिः ॥ प्रातरुत्थायगौरी-
शंसंपूज्यचविधानतः ॥ ११ ॥ तेउपेत्याब्रवीद्यास्येपुष्करारण्यमुत्तमं ॥ आमंत्रयामिवांतन्व्यौमामनुज्ञातुमर्हथ ॥ १२ ॥
ततस्तेऊचतुर्ब्रह्मन्दुर्लभंदर्शनंतव ॥ किमर्थंपुष्करारण्येभवान्यास्यत्ययादरात् ॥ १३ ॥ तेउवाचमहातेजाअहंकार-
समन्वितः ॥ कार्तिकीपुण्यदाभाविपुष्करेष्वेवकार्तिके ॥ १४ ॥ तेऊचतुर्वयंयामोभवान्यत्रगमिष्यति ॥ नत्वयास्मविनात्र-
ह्मन्निहस्थातुंसमुत्सहे ॥ १५ ॥ बाढमाहमुनिश्रेष्ठस्ततोनत्वामहेश्वरं ॥ गतेचऋषिणासार्धंपुष्करारण्यमादरात् ॥ १६ ॥
तथान्येऋषयस्तत्रसमायाताःसहस्रशः ॥ पार्थिवाजानपदाश्चमुक्त्वैकंतुऋतध्वजं ॥ १७ ॥ ततःस्नातुंचकार्तिक्यामृषयः
पुष्करेष्वथ ॥ राजानश्चमहाभागानाभागेक्ष्वाकुसंयुताः ॥ १८ ॥ गालवोपिसमंताभ्यांकन्यकाभ्यामवातरत् ॥ स
स्नातुंपुष्करजलेमध्यमेधनुपांप्लुतौ ॥ १९ ॥ निमग्नश्चापिददर्शमहामत्स्यंजलेशयं ॥ बह्वीभिर्मत्स्यकन्याभिःप्रीयमाणंमु-

हुर्मुहुः ॥ २० ॥ सताश्चाहविनिर्मुक्ताइमंधर्मंनजानथ ॥ जनापवादंघोरंहिनशक्तःसोढुमुल्बणं ॥ २१ ॥ तास्ताऊचुर्मु-
हामत्स्यंकिंनपश्यामगालवं ॥ तापसंकन्यकाभ्यांवैविचरंतंयथेच्छया ॥ २२ ॥ यद्यसावपिधर्मात्मानबिभेतितपोधनः ॥
जनापवादात्तत्किंत्वंबिभेषिजलमध्यगः ॥ २३ ॥ ततश्चाप्याहसनिमिर्नैषवेत्तितपोधनः ॥ रागांधोनापिचभयंविजानाति
सुबालिशः ॥२४॥ तच्छ्रुत्वामत्स्यवचनंगालवोव्रीडयायुतः ॥ नोत्ततारनिमग्नोपितस्थौसविजितेंद्रियः ॥ २५ ॥ स्ना-
त्वाद्वेतेपिरंभोरूसमुत्तीर्यतटेस्थिते ॥ प्रतीक्षंत्यौमुनिवरंतद्दर्शनसमुत्सुके ॥ २६ ॥ वृत्तातुपुष्करेयात्रागतोलोकोयथाग-
तं ॥ ऋषयःपार्थिवाश्चान्येनानाजानपदास्तथा ॥ २७ ॥ तत्रस्थितैकासुदतीविश्वकर्मतनूरुहा ॥ चित्रांगदासुचार्वंगी
वीक्षंतीतनुमध्यमा ॥ २८ ॥ तेस्थितेवापिवीक्षंत्यौगालवंमुनिसत्तमं ॥ संस्थितेनिर्जनेतीर्थेगालवोंतर्जलेतथा ॥ २९ ॥
ततोभ्यगाद्वेदवतीनाम्नागंधर्वकन्यका ॥ पर्जन्यतनयासाध्वीघृताचीगर्भसंभवा ॥ ३० ॥ साचाभ्येत्यकुलेपुण्येस्नात्वा
मध्यमपुष्करे ॥ ददर्शकन्यात्रितयमुभयोस्तटयोःस्थितं ॥ ३१ ॥ चित्रांगदांसमभ्येत्यपर्यपृच्छदनिष्ठुरं ॥ कासिकेनच
कार्येणनिर्जनेस्थितवत्यसि ॥ ३२ ॥ सतामुवाचपुत्रींमांविंदस्वसुरवर्धिके ॥ चित्रांगदेतिसुश्रोणिविख्यातांविश्वकर्मणः
॥ ३३ ॥ साहमभ्यागताभद्रेस्नातुंपुण्यांसरस्वतीं ॥ नैमिषेकांचनाक्षींतुविख्यातांधर्ममातरं ॥ ३४ ॥ तत्रागतासुरा-
होहंदृष्टावैदर्भकेणाहि ॥ सुरथेनसकामार्तोमामेवशरणंगतः ॥ ३५ ॥ मयात्मातस्यदत्तश्चसखीभिर्वार्यमाणया ॥ ततः
शप्तास्मितातेनवियुक्तास्मिचभूभुजा ॥ ३६ ॥ मर्तुंकृतमतिर्भद्रेवारितागुह्यकेनच ॥ श्रीकंठमगमंद्रष्टुंततोगोदावरीजलं
॥ ३७ ॥ तस्मादिदंसमायातातीर्थप्रवरमुत्तरं ॥ नचापिदृष्टःसुरथःसमनोह्लादनःपतिः ॥ ३८ ॥ भवतीचात्रकाबालेष्ट-
त्तेयात्राफलेधुना ॥ समागताहितच्छंसममसत्येनभामिनि ॥ ३९ ॥ साब्रवीच्छ्रूयतांयास्मिमंदभाग्याकृशोदरी ॥

यथायात्राफलेवृत्तेसमायातास्मिपुष्करं ॥ ४० ॥ पर्जन्यस्यघृताच्यांतुजातावेदवतीतिहि ॥ रममाणावनोद्देशेदृष्टास्मि
कपिनासखि ॥ ४१ ॥ सचाभ्येत्याब्रवीन्मांतुयासिवेदवतीकहि ॥ आनीतास्याश्रमात्केनभूपृष्ठान्मेरुपर्वतं ॥ ४२ ॥ ततो
मयोक्तंनास्मीतिकपेवेदवतीत्यहं ॥ नाम्नावेदवतीत्येवंमेरावपिकृताश्रया ॥ ४३ ॥ ततस्तेनातिदुष्टेनवानरेणाभिविद्रुता ॥
समारूढास्मिसहसाबंधुजीवंनगोत्तमं ॥ ४४ ॥ तेनापिवृक्षस्तरसापादाक्रांतरुत्वभज्यत ॥ ततोस्यविपुलांशाखांसमालिं-
ग्यस्थितात्वहं ॥ ४५ ॥ ततःप्लवंगमोवृक्षंप्राक्षिपत्सागरांभसि ॥ सहतेनैववृक्षेणपतितास्म्यहमाकुला ॥ ४६ ॥ ततोऽ-
म्बरतलाद्वृक्षंनिपतंतंयदृच्छया ॥ ददृशुःसर्वभूतानिस्थावराणिचराणिच ॥४७॥ ततोहाहाकृतंलोकैर्मांपतंतींनिरीक्ष्यहि ॥
ऊचुश्चसिद्धगंधर्वाःकष्टंसेयंमहात्मनः ॥४८॥ इंद्रद्युम्नस्यमहिषीगदिताब्रह्मणास्वयं ॥ मनोःपुत्रस्यवीरस्यसहस्रक्रतुया-
जिनः ॥ ४९ ॥ तांवाणींमधुरांश्रुत्वामोहमस्म्यागतातततः ॥ नचजानेसकेनापिवृक्षश्छिन्नःसहस्रधा ॥ ५० ॥ ततो-
स्मिवेगाद्धलिनाहृतानलसखेनहि ॥ समानीतास्म्यहमिमंत्वंद्रष्टावाद्यसुंदरि ॥ ५१ ॥ ततउत्तिष्ठगच्छावःकेउभेसंस्थि-
तेवरे ॥ कन्यकेअनुपश्येहपुष्करस्योत्तरेतटे ॥ ५२ ॥ एवमुक्त्वावरांगीसातयासुतनुकन्यया ॥ जगामकन्यकेद्रष्टुंप्र-
क्रुंकार्यैतुकौतुकात् ॥ ५३ ॥ ततोगत्वापर्यपृच्छत्तेऊचतुरुभेअपि ॥ याथातथ्यंतयोस्ताभ्यांस्वमात्मानंनिवेदितं ॥५४॥
ततस्ताश्चतुरोपीहसप्तगोदावरंजलं ॥ संप्राप्यतीरेतिष्ठंतिअर्चंत्योहाटकेश्वरं ॥ ५५ ॥ ततोबहून्वर्षगणान्बभ्रमुस्तेज-
नाश्रयः ॥ तासामर्थायशकुनिर्जाबालिःसऋतध्वजः ॥ ५६ ॥ भारवाहीततोभिन्नोदशान्दशतिकेगते ॥ कालेजगाम
निर्वेदात्समंपित्रानुशाकलं ॥ ५७ ॥ तस्मिन्नरपतिःश्रीमानिंद्रद्युम्नोमनोःसुतः ॥ समध्यास्तेसविज्ञायसार्घपाद्योवि-
निर्ययौ ॥ ५८ ॥ सम्यक्संपूजितस्तेनसजाबालिर्ऋतध्वजः ॥ सचेक्ष्वाकुसुतोधीमान्शकुनिर्भ्रातृजोऽर्चितः ॥ ५९ ॥

ततोवाक्यमुनेःप्राहइंद्रद्युम्नमृतध्वजः ॥ राजन्नष्टासुतास्माकंनंदयंतीतिविश्रुता ॥ ६० ॥ तादर्थ्येचैवसुधाअस्माभि-
रटितान्नृप ॥ तस्मादुत्तिष्ठमार्गस्यसाहाय्यंकर्तुमर्हसि ॥ ६१ ॥ अथोवाचनृपोब्रह्मन्ममापिललनोत्तमा ॥ नष्टाकृत-
श्रमस्यापिकस्याहंकथयामितां ॥ ६२ ॥ आकाशात्पर्वताकारःपतमानोनगोत्तमः ॥ सिद्धानांवाक्यमाकर्ण्यबाणैश्छि-
न्नःसहस्रधा ॥ ६३ ॥ तेचैवसावरारोहाविभिन्नालाघवान्मया ॥ नचजानामिसाकुत्रतस्माद्गच्छामिमार्गितुं ॥ ६४ ॥
इत्येवमुक्त्वासनृपःसमुत्थायत्वरान्वितः ॥ स्यंदनानिद्विजाभ्यांसभ्रातृपुत्रायचार्पयत् ॥ ६५ ॥ तेऽधिरूढरथास्तूर्णमा-
र्गितेवसुधांक्रमात् ॥ बदर्याश्रममासाद्यददृशुस्तपसांनिधिं ॥ ६६ ॥ तपसाकर्शितंदीनंमलपंकजटाधरं ॥ निश्वासा-
यासपरमंप्रथमेवयसिस्थितं ॥ ६७ ॥ तमुपेत्याब्रवीद्राजाइंद्रद्युम्नोमहाभुजः ॥ तपस्विन्यौवनेघोरआस्थितोऽ-
सिसुदुश्चरं ॥ ६८ ॥ तपःकिमर्थंतच्छंसकिमभिप्रेतमुच्यतां ॥ सोब्रवीत्कोभवान्ब्रूहिममात्मानंसुहृत्तया ॥ ६९ ॥ प-
रिपृच्छसिशोकार्तंपरिद्यूनंतपोऽन्वितं ॥ सप्राहराजास्मिबलीतपस्विन्शाकलेपुरे ॥ ७० ॥ मनोःपुत्रप्रियोभ्राताइ-
क्ष्वाकोःकथितंतव ॥ सचास्मैपूर्वचरितंसर्वंकथितवान्नृपः ॥ ७१ ॥ श्रुत्वाप्रोवाचराजर्षिर्मामुंचस्वकलेवरं ॥ आगच्छ
यामितन्वंगोविचेरुंभ्रातृजोसिमे ॥ ७२ ॥ इत्युक्त्वासंपरिष्वज्यनृपंधर्मनिसंततं ॥ समारोप्यरथंतूर्णंतापसाभ्यांन्यवेद-
यत् ॥ ७३ ॥ ऋतध्वजःसपुत्रस्तुतंदृष्ट्वापृथिवीपतिं ॥ प्रोवाचराजन्नेह्येहिकरिष्यामितवप्रियं ॥ ७४ ॥ यासौचि-
त्रांगदानामत्वयादृष्टाहिनैमिषे ॥ सप्तगोदावरंतीर्थंसामयैवविवर्जिता ॥ ७५ ॥ आगच्छागमिष्यामोतस्मादेवहिका-
रणात् ॥ तत्रास्माकंसमेष्यंतिकन्यास्तिस्रस्तथापराः ॥ ७६ ॥ इत्येवमुक्त्वासऋषिःसमाश्वास्यसुदेवजां ॥ शकु-
निंपुरतःकृत्वासेंद्रद्युम्नःसपुत्रकः ॥ ७७ ॥ स्यंदनेनाश्वयुक्तेनगंतुंसमुपचक्रमे ॥ सप्तगोदावरंतीर्थंयत्रताःकन्यकागताः

॥ ७८ ॥ एतस्मिन्नंतरेतन्वीघृताचीशोकसंयुता ॥ विचचारोदयागोरींविचिन्वंतीसुतांनिजां ॥ ७९ ॥ तमाससादचक-
पिंपर्यपृच्छद्यथाप्सराः ॥ किंबालानत्वयादृष्टाकपेसत्यंवदस्वमे ॥ ८० ॥ तस्यास्तद्वचनंश्रुत्वासकपिःप्राहबालिकां ॥ दृ-
ष्टादेववतीनामसाचन्यस्तामहाश्रमे ॥ ८१ ॥ कालिंद्याविमलेतीरेमृगपक्षिसमन्विते ॥ श्रीकंठायतनस्याग्रेमयासत्यंत-
वोदितं ॥ ८२ ॥ साप्राहवानरवरंनाम्नावेदवतीतिसा ॥ नहिदेववतीख्यातातदागच्छव्रजावहे ॥८३॥ घृताच्यास्तद्व-
चःश्रुत्वावानरस्त्वरितक्रमः ॥ पृष्ठतोस्याःसमागच्छन्नदीमन्वेवकौशिकीं ॥ ८४ ॥ प्राप्ताराजर्षिप्रवरास्त्रयस्तेचापिकौ-
शिकीं ॥ द्वितयंतापसाभ्यांचरथाःपंचाश्ववेगिभिः ॥ ८५ ॥ अवतीर्यरथेभ्यस्तेस्नातुमभ्यागमन्नदीं ॥ घृताच्यापिनदीं
स्नातुंसुपुण्यामाजगामह ॥८६॥ तामन्वेवकपिःप्रायादृष्टोजाबालिनातथा ॥ दृष्ट्वैवपितरंप्राहपार्थिवंचमहाबलं ॥ ८७॥
सएषपुनरायातिवानरस्तातवेगवान् ॥ पूर्वंजटास्वेवबलाद्येनबद्धास्मिपादपे ॥ ८८ ॥ तज्जाबालिवचःश्रुत्वाशकुनिः
क्रोधसंयुतः ॥ सशरंधनुरानम्यइदंवचनमब्रवीत् ॥ ८९ ॥ ब्रह्मन्प्रदीयतांमह्यमाज्ञाताताववदस्वमां ॥ यावदेनंनिह-
न्म्यद्यशरेणैकेनवानरं ॥ ९० ॥ इत्येवमुक्तेवचनेसर्वभूतहितेरतः ॥ महर्षिःशकुनिःप्राहहेतुयुक्तंवचोमहत् ॥ ९१ ॥ न
कश्चित्तातकेनापिवध्यतेबध्यतेपिवा ॥ वधबंधौपूर्वकर्मवशौनृपतिनंदन ॥ ९२ ॥ इत्येवमुक्तःशकुनिर्ऋषिंवचनमब्रवीत् ॥
ममाज्ञादीयतांब्रह्मन्शाधिकिंकरवाण्यहं ॥९३॥ इत्युक्तःप्राहसमुनिस्तंवानरपतिंवचः ॥ ममपुत्रस्त्वयोद्बद्धोजटाभिर्वटपा-
दपे ॥ ९४ ॥ नचेन्मोचयितुंवृक्षाच्छक्नुयाच्चापियत्नतः ॥ तदनेननरेंद्रेणत्रिधाकृत्वातुशाखिनं ॥९५॥ शाखांवहतिसत्सूनुः
शिरसातांविमोचय ॥ दशवर्षशतान्यस्यशाखांवैवहतोगताः ॥ ९६ ॥ नचास्तिपुरुषःकश्चिद्योह्युन्मोचयितुंक्षमः ॥ सब्र्ह्म-
र्षेर्वाक्यमाकर्ण्यकपिर्जाबालिनोजटाः ॥ ९७ ॥ शनैरुन्मोचयामासक्षणादुन्मोचिताश्चताः ॥ ततःप्रीतोमुनिश्रेष्ठोद-

रदोभूदृतध्वजः ॥ ९८ ॥ कपिंप्राहवृणीष्वत्वंवरंयन्मनसेप्सितं ॥ ऋतध्वजवचःश्रुत्वाइमंवरमयाचत ॥ ९९ ॥ विश्वक-
र्मामहातेजाःकपित्वेप्रतिसंस्थितः ॥ ब्रह्मन्भवान्वरंमह्यंयदिदातुंयथेच्छसि ॥ १०० ॥ तच्चदत्तोमहाघोरोममशापो
निवर्त्यतां ॥ चित्रांगदायाःपितरंमांत्वष्टारंतपोधनं ॥ १०१ ॥ अभिजानीहिभवतःशापाद्वानरतांगतं ॥ सुबहूनिचपापा-
निमयायानिकृतानिहि ॥ १०२ ॥ कपिचापल्यदोषेणतानिमेयांतुसंक्षयं ॥ ततऋतध्वजःप्राहशापस्यांतोभविष्यति ॥
॥ १०३ ॥ यदाघृताच्यांतनयंजनिष्यसिमहाबलं ॥ इत्येवमुक्तःसंहृष्टःसतथाकपिसत्तमः ॥ १०४ ॥ स्नातुंतूर्णंमहान-
द्यामवतीर्णःकृशोदरि ॥ ततस्तुसर्वेक्रमशःस्नात्वाचपितृदेवताः ॥ १०५ ॥ जग्मुर्हृष्टारथेभ्यस्तेघृताचीदिवमुत्पतत् ॥
तामन्वेवमहावेगःसकपिःप्लवतांवरः ॥ १०६ ॥ ददृशेरूपसंपन्नांघृताचींसप्लवंगमः ॥ सापितंबलिनांश्रेष्ठंदृष्ट्वैवकपिकुंजरं
॥ १०७ ॥ ज्ञात्वाथविश्वकर्माणंकामयामासकामिनी ॥ ततोनुपर्वतश्रेष्ठेख्यातेकोलाहलेकपिः ॥ १०८ ॥ रमयामा-
सतांतन्वींसाचतंवानरोत्तमं ॥ एवंरमंतौसुचिरंप्राप्तौतौविंध्यपर्वतं ॥ १०९ ॥ रथेषुचापितत्तीर्थंसंप्राप्तास्तेनरोत्तमाः ॥
मध्याह्नसमयेश्रांताःसप्तगोदावरंजलं ॥ ११० ॥ प्राप्ताविश्रामहेत्वर्थमवतेरुस्तृषार्दिताः ॥ तेषांसारथयोऽश्वाश्चस्नात्वा
पीतोदाकाःप्लुताः ॥ १११ ॥ रमणीयेवनोद्देशेप्रचारायसमुत्सृजन् ॥ शाड्वलाढ्येषुदेशेषुमुहूर्तादेववाजिनः ॥११२ ॥ तृ-
प्ताःसमाद्रवन्सर्वेदेवालयमनुत्तमं ॥ तुरंगखुरनिर्घोषंश्रुत्वातायोषितांवराः ॥ ११३ ॥ किमेतदितिचोक्त्वैवप्रजग्मुर्हाट-
केश्वरं ॥ आरुह्यवलभींतास्तुसमुदैक्षंतसर्वशः ॥ ११४ ॥ अपश्यंस्तीर्थसलिलआप्लुतांगान्नरोत्तमान् ॥ ततश्चित्रांगदा
दृष्ट्वाजटामंडलधारिणं ॥ सुरथंहसतीप्राहसंरोहत्पुलकासखीं ॥ ११५ ॥ योसौयुवानीलघनप्रकाशःसंलक्ष्यतेदीर्घभुजः



१ वलभीछादने वक्रदारुणीतिकोशः । ( छज्जा ) इति भाषायां प्रसिद्धः ।

सुरूपः ॥ सएवनूनंनरदेवसूनुर्वृतोमयापूर्वपतिःपतिर्यः ॥ ११६ ॥ यश्चैषजांबूनदतुल्यवर्णःश्वेतंजटाभारमधारयिष्यत् ॥ सएषनूनंतपतांवरिष्ठऋतध्वजोनात्रविचारणास्ति ॥११७॥ ततोऽब्रवीदथोहृष्टानंदयंतीसखीजनं ॥ एषोऽपरोऽस्यैवसुतोजाबालिर्नात्रसंशयः ॥ ११८ ॥ इत्येवमुक्त्वावचनंवलभ्याअवतीर्यच ॥ समासन्नाग्रतःशंभोर्गायंतीगीतकान्शुभान् ॥ ११९ ॥ ॐ नमोऽस्तु शर्व शंभो त्रिनेत्र चारुगात्र त्रैलोक्यनाथ उमापते दक्षयज्ञविध्वंसकारक कामांगनाशन घोरपापप्रणाशन महापुरुष महोग्रमूर्ते सर्वसत्त्वक्षयंकर शुभंकर महेश्वर त्रिशूलधर स्मरारे गुहाधामन् दिग्वासः महाशंखशेखर जटाधर कपालमालाविभूषितशरीर वामचक्षुःक्षुभितदेवप्रजाध्यक्ष भगाक्ष्णोःक्षयंकर भीमसेन नाथ पशुपते कामाङ्गदाहिन् चत्वरवासिन् शिव महादेव ईशान शंकर भीम भव वृषध्वज कंटभ प्रौढमहानाट्येश्वर भूतिरत अविमुक्तक रुद्र रुद्रेश्वर स्थाणो एकलिंग कालिन्दीप्रिय श्रीकण्ठ नीलकंठ अपराजित रिपुभयंकर संतोषपते वामदेव अघोर तत्पुरुष महाघोर अघोरमूर्ते शांत सरस्वतीकांत सहस्रमूर्ते महोद्भव विभो कालाग्ने रुद्र रौद्र हर महीधर प्रिय सर्वतीर्थाधिवास हंस कामेश्वर केदार अधिपते परिपूर्ण मुचुकुंद मधुनिवास कृपाणपाणे भयंकर विद्याराज सोमराज कामराज महीधरराजकन्याहृदब्जवसते[2] समुद्रशायिन् गयामुख गोकर्ण ब्रह्मयोने सहस्रवक्त्राक्षिचरण हाटकेश्वर नमस्ते ॥ एतस्मिन्नंतरेप्राप्ताः सर्वएवर्षिपार्थिवाः ॥ द्रष्टुंत्रैलोक्यकर्तारंत्र्यंबकंहाटकेश्वरं ॥ १२० ॥ समारूढाश्चसुस्नातादद्दशुर्योषितःशुभाः ॥ स्थितास्तुपुरतस्तस्यगायंत्योगेयमुत्तमं ॥ १२१ ॥ ततःसुदेवतनयोविश्वकर्मसुतांप्रियां ॥ दृष्ट्वाहृपितचि-

१ कटा ( तीक्ष्णा ) भा ( कान्तिः ) यस्य तत्संबुद्धिः । २ रजकन्यांजनबलवमते पु. पाठः ।

त्तस्तुसंरोहत्पुलकोबभौ ॥ १२२ ॥ ऋतध्वजोपितन्वंगींदृष्ट्वाचित्रांगदांस्थितां ॥ प्रत्यभिज्ञाययोगात्माबालोमुदित-
मानसः ॥ १२३ ॥ ततःप्राहसमभ्येत्यदेवेशंहाटकेश्वरं ॥ संपूजयंतत्र्यक्षंतेसंस्तुवंतःक्रमात्ततः ॥ १२४ ॥ चित्रांगदा-
पितान्दृष्ट्वाऋतध्वजपुरोगमान् ॥ संमताभिःकृशांगीभिरभ्युत्थायाभ्यवादयत् ॥ १२५ ॥ सचताःप्रतिनंद्यैवससंपुत्रेण
तापसः ॥ समंनृपतिभिर्हृष्टःसंविवेशयथासुखं ॥ १२६ ॥ ततःकपिवरःप्राप्तोघृताच्यासहसुंदरि ॥ स्नात्वागोदावरी-
तीर्थेदिदृक्षुर्हाटकेश्वरं ॥ १२७ ॥ ततोऽपश्यच्च्युतांतन्वींघृताचींशुभदर्शनां ॥ सापितांमातरंदृष्ट्वाहृष्टाभूद्वरवर्णिनी
॥ १२८ ॥ ततोघृताचीस्वांपुत्रींपरिष्वज्यन्यपीडयत् ॥ स्नेहात्सबाष्पनयनामुहुस्तांपरिजिघ्रती ॥ १२९ ॥ ततऋ-
तध्वजःश्रीमान्कपिंवचनमब्रवीत् ॥ गच्छानेतुंगुह्यकंत्वमंजनाद्रौमहाजनं ॥ १३० ॥ पातालादपिदैत्येशंवीरंकंदरमा-
लिनं ॥ स्वर्गाद्गंधर्वराजानंपर्जन्यंशीघ्रमानय ॥ १३१ ॥ इत्येवमुक्तेमुनिनाप्राहदेववतीकपिं ॥ गालवंवानरश्रेष्ठइ-
हानेतुंत्वमर्हसि ॥ १३२ ॥ इत्येवमुक्तेवचनेकपींद्रोमितविक्रमः ॥ गत्वांजनंसमामंत्र्यजगामामरपर्वतं ॥ १३३ ॥
पर्जन्यंतत्रचामंत्र्यप्रेषयित्वामहाश्रमे ॥ सप्तगोदावरीतीर्थेपातालमगमत्कपिः ॥ १३४ ॥ तत्रामंत्र्यमहावीर्यःकपिः
कंदरमालिनं ॥ पातालादतिनिष्क्रम्यमहींपर्यचरज्जवी ॥ १३५ ॥ गालवंतपसोयोनिंदृष्ट्वामाहिष्मतीमनु ॥ समुत्प-
त्यानयच्छीघ्रंसप्तगोदावरीजलं ॥ १३६ ॥ तत्रस्नात्वाविधानेनसंप्राप्तोहाटकेश्वरं ॥ ददर्शनंदयंतींतांस्थितांवेदवतीमपि
॥ १३७ ॥ तंदृष्ट्वागालवंचैवसमुत्थायाभ्यवादयत् ॥ तेचापिनृपतिश्रेष्ठास्तंसंपूज्यतपोधनं ॥ १३८ ॥ प्रहर्षमतुलं-
गत्वाउपविष्टायथासुखं ॥ ॥ तेषूपविष्टेषुतदावानरेणनिमंत्रिताः ॥ १३९ ॥ समायातामहात्मानोयक्षगंधर्वदानवाः ॥
तानागतान्समीक्ष्यैवपुत्र्यस्ताःपृथुलोचनाः ॥ १४० ॥ स्नेहार्द्रनयनास्तावैतदासस्वजिरेपितॄन् ॥ नंदयंत्यादिकादृष्ट्वा-

सपितृकावरानना ॥ १४१ ॥ सबाष्पनयनाजाताविश्वकर्मसुतातदा ॥ अथतामाहसमुनिःसत्यंसत्यध्वजोवचः ॥१४२॥
माविषादंकृथाःपुत्रीपितायंतववानरः ॥ सातद्वचनमाकर्ण्यव्रीडोपहतचेतना ॥ १४३ ॥ कथंतुविश्वकर्मासौवानरत्वंग-
तोऽधुना ॥ दुष्पुत्र्यांमयिजातायांतस्मात्यक्ष्येकलेवरं ॥ १४४ ॥ इतिसंचिंत्यमनसाऋतध्वजमुवाचह ॥ परित्रायस्वमां
ब्रह्मन्पापोपहतचेतसं ॥ १४५ ॥ पितृघ्नीमर्तुमिच्छामितदनुज्ञातुमर्हसि ॥ अथोवाचमुनिस्तन्वींमाविषादंकृथाधुना ॥
॥ १४६ ॥ संभाव्येनविनाशोस्तितन्मात्याक्षीःकलेवरं ॥ भविष्यतिपितातुभ्यंभूयोप्यमरवार्द्धकि ॥ १४७ ॥ जातेऽ-
पत्येघृताच्यांतुनात्रकार्याविचारणा ॥ इत्येवमुक्तेवचनेमुनिनाभावितात्मना ॥१४८॥ घृताचींतांसमभ्येत्यप्राहचित्रांग-
दांवचः ॥ परित्यजस्वशोकंत्वंमासैर्दशभिरात्मजः ॥ १४९ ॥ भविष्यतिपितुस्तुल्योमत्सकाशान्नसंशयः ॥ इत्येवमु-
क्तासंहृष्टावभौचित्रांगदातदा ॥ १५० ॥ स्वंप्रतीक्षतचार्वंगीविवाहंपितृदर्शनं ॥ सर्वास्ताअपितावंतंकालंसुतनुकन्य-
काः ॥ १५१ ॥ प्रत्यैक्षंतविवाहंहितस्याएवप्रियेप्सया ॥ ततोदशसुमासेषुसमतीतेष्वथाप्सराः ॥ १५२ ॥ तस्मिन्गो-
दावरीतीरेप्रसूतातनयंनलं ॥ जातेऽपत्येकपित्वाच्चविश्वकर्माप्यमुच्यत ॥ १५३ ॥ समभ्येत्यप्रियांपुत्रींपर्यष्वजतचा-
दरात् ॥ ततःप्रीतेनमनसासस्मारसुरवार्द्धकी ॥ १५४ ॥ सुराणामधिपंशक्रंसहैवसुरकिन्नरैः ॥ त्वष्ट्राथसंस्मृतःप्राप्तः
शक्रोऽमरगणैर्वृतः ॥ १५५ ॥ सुरैर्महेंद्रःसंप्राप्तस्तत्तीर्थंहाटकाह्वयं ॥ समायातेषुदेवेषुगंधर्वेष्वप्सरेषुच ॥ १५६ ॥
इंद्रद्युम्नोमुनिश्रेष्ठऋतध्वजमुवाचह ॥ जाबालेर्दीयतांब्रह्मन्सुतांकंदरमालिनः ॥ १५७ ॥ गृह्णातुविधिवत्पाणिंदैतेय-
तनयातव ॥ नंदयंतीवशकुनिःपरिणेतास्वरूपवान् ॥ १५८ ॥ ममेयंवेदवत्यस्तुहुताहव्यंविधानतः ॥ बाढमित्यब्रवी-
त्सोपिमुनिर्मनुसुतंनृपं ॥ १५९ ॥ ततोनुजहृस्तंहृष्टाविवाहाविधिमुत्तमं ॥ ऋत्विजोगालवाद्याश्चहुत्वाहव्यंविधानतः ॥

॥ १६० ॥ गायंतितत्रगंधर्वान्नृत्यंत्यप्सरसस्तथा ॥ आदौजाबालिनःपाणिर्गृहीतोदैत्यकन्यया ॥ १६१ ॥ इंद्रद्युम्ने-
नतदनुवेदवत्याविधानतः ॥ ततःशकुनिनापाणिर्गृहीतोयक्षकन्यया ॥ १६२ ॥ चित्रांगदायाःकल्याणिसुरथंपाणिमग्र-
हीत् ॥ एवंक्रमाद्विवाहस्तुनिर्वृत्तस्तनुमध्यमे ॥ १६३ ॥ वृत्तेमुनिर्विवाहेतुशक्रादीन्प्राहदानवान् ॥ अस्मिंस्तीर्थेभव-
द्भिस्तुसप्तगोदावरेसदा ॥ १६४ ॥ स्थेयंविशेषतोमासमिमंमाधवमुत्तमं ॥ बाढमुक्त्वासुराःसर्वेजग्मुर्हृष्टादिवंक्रमात् ॥
॥ १६५ ॥ मुनयोमुनिमादायसपुत्रंजग्मुरादरात् ॥ आर्याश्चादायराजानःस्वंस्वंनगरमागताः ॥ १६६ ॥ संहृष्टाःसंमु-
खंतस्थुर्भुंजानाविषयेंद्रियान् ॥ चित्रांगदायाःकल्याणिपूर्ववृत्तंपुराकिल ॥ १६७ ॥ तस्मात्कमलपत्राक्षिभजस्वललं-
नोत्तमे ॥ इत्येवमुक्त्वानरदेवसूनुस्तांभूमिदेवस्यसुतांवरोरूं ॥ स्तुवन्मृगाक्षीमृदुनाक्रमेणसाचापिवाक्यंनृपतिंबभाषे
॥ १६८ ॥ इतिश्रीवामनपुराणेपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ ॥ ॥
अरजाउवाच ॥ नात्मानंतवदास्यामिबहुनोक्तेनकिंतव ॥ रक्षंतीभवतःशापादात्मानंचमहीपते ॥ १ ॥ प्रह्लादउवाच ॥
इत्थंविवदमानांतांभार्गवेंद्रसुतांबलात् ॥ कामोपहतचित्तात्माविध्वंसयतमंदधीः ॥ २ ॥ तांकृत्वाच्युतचारित्रांमदांधः
पृथिवीपतिः ॥ निश्चक्रामाश्रमात्तस्माद्गतश्चनगरंनिजं ॥ ३ ॥ सापिशुक्रसुतातन्वीअरजारजसाप्लुता ॥ आश्रमादथ
निर्गत्यबहिस्तस्थावधोमुखी ॥ ४ ॥ चिंतयंतीस्वपितरंरुदतीचमुहुर्मुहुः ॥ महाग्रहोपरुद्धेवरोहिणीशशिनःप्रिया ॥५॥
ततोबहुतिथेकालेसमाप्तेयज्ञकर्मणि ॥ पातालादागमच्छुक्रःस्वमाश्रमपदंमुनिः ॥ ६ ॥ आश्रमान्तेचदद्दृशेसुतामेत्यर-
जस्वलां ॥ मेघलेखामिवाकाशेसंध्यारागेणरंजितां ॥ ७ ॥ तांदृष्ट्वापरिपप्रच्छपुत्रिकेनासिधर्षिता ॥ कःक्रीडतिसरो-
षेणसममाशीविशेषणाहि ॥ ८ ॥ क्वाद्यैवयामिकृगतःपापकृत्ससुदुर्मतिः ॥ कस्त्वांशुद्धसमाचारांविध्वंसयतिपापकृत्

॥ ९ ॥ ततःस्वपितरंदृष्ट्वाकंपमानापुनःपुनः ॥ रुदतीव्रीडयोपेतामंदंमंदमुवाचह ॥ १० ॥ तवशिष्येणदंडेनवार्यमाणे-
नचासकृत् ॥ बलादनाथारुदतीनीताहंवचनीयतां ॥ ११ ॥ एतत्पुत्र्यावचःश्रुत्वाक्रोधसंरक्तलोचनः ॥ उपस्पृश्यशुचि-
र्भूत्वाइदंवचनमब्रवीत् ॥ १२ ॥ यस्मात्तेनाविनीतेनममाज्ञाभयमुत्तमं ॥ गौरवंचतिरस्कृत्यच्युतधर्मारजाःकृता ॥१३॥
तस्मात्सराष्ट्रःसबलःसभृत्योवाहनैःसह ॥ सप्तरात्रांतराद्भस्मनग्नोदृष्टाभविष्यति ॥ १४ ॥ इत्येवमुक्त्वामुनिपुंगवोसौ-
शप्त्वासदंडंस्वसुतामुवाच ॥ त्वंपापमोक्षार्थमिहैवपुत्रितिष्ठस्वकल्याणितपश्चरंती ॥ १५ ॥ शप्त्वेत्थंभगवान्शुक्रोदंड-
मिक्ष्वाकुनंदनं ॥ जगामसहिपातालंदानवालयमुत्तमं ॥ १६ ॥ दंडोऽपिभस्मसाद्भूतःसराष्ट्रबलवाहनः ॥ महताबलग-
र्वेणसप्तरात्रांतरेतदा ॥ १७ ॥ एवंतेदंडकारण्यंपरित्यक्ष्यंतिदेवताः ॥ आलयंराक्षसानांतुकृतंदेवेनशंभुना ॥ १८ ॥
एवंपरकलत्राणिनयंतिसुकृतादपि ॥ भस्मभूतान्प्राकृतांस्तुमहांतंचपराभवं ॥ १९ ॥ तस्मादंधकदुर्बुद्धिर्नकार्याभवता
त्वियं ॥ प्राकृतापिदहेन्नारीकिमुताद्रिनंदिनी ॥ २० ॥ शंकरोपिनदैत्येशशक्योजेतुंसुरासुरैः ॥ नद्रष्टुमपिशक्योसौ
किमुयोधयितुंरणे ॥ २१ ॥ पुलस्त्यउवाच ॥ इत्येवमुक्तेवचनेक्रुद्धस्ताम्रेक्षणःश्वसन् ॥ वाक्यमाहमहातेजाःप्रह्लादंचां-
धकासुरः ॥ २२ ॥ किंमात्मसौरणेयोद्धुंशक्तस्त्रिनयनोसुर ॥ एकाकीधर्मरहितोभस्मारुणितविग्रहः ॥ २३ ॥ नांध-
कोबिभियादिंद्राद्दानरेभ्यःकथंचन ॥ सकथंवृषपत्राख्याद्बिभेस्त्रिमुखेक्षणात् ॥२४॥ तच्छ्रुत्वास्यवचोघोरंप्रह्लादःप्राह
नारद ॥ नसह्यंगर्ह्यंभवताविरुद्धंधर्मतोर्थतः ॥ २५ ॥ हुताशनपतंगाभ्यांसिंहक्रोष्टुकयोरिव ॥ गजेंद्रमशकाभ्यांचरुक्म
पाषाणयोरपि ॥ २६ ॥ एतेषामेवगदितंयावदंतरमंधक ॥ तावदेवांतरंनास्तिभवतोहिहरस्यच ॥ २७ ॥ वारितोऽ-
सिमयावीरभूयोभूयश्चवार्यसे ॥ शृणुष्ववाक्यंदेवर्षेरसितस्यमहात्मनः ॥ २८ ॥ योधर्मशीलोजितमानरोषोविद्याविनी-

तोनपरोतापी ॥ स्वदारतुष्टःपरदारवर्जीनतस्यलोकेभयमस्तिकिंचित् ॥ २९ ॥ योधर्महीनःकलहप्रियःसदापरोपता-
पीश्रुतशास्त्रवर्जितः ॥ परार्थदारेप्सुरवर्णसंगमीसुखंससींविंदेन्नपरत्रचेह ॥ ३० ॥ धर्मान्वितोऽभूद्भगवान्प्रभाकरःसत्य-
क्तरोपश्चमुनिःसवारुणिः ॥ विद्यान्वितोभून्मनुरर्कपुत्रःस्वदारसंतुष्टमनास्त्वगस्त्यः ॥ ३१ ॥ एतानिपुण्यानिकृतान्य-
मोभिर्नपापबद्धानिकुलक्रमोक्त्या ॥ तेजोन्विताःशापवरक्षमाश्चजातास्तुसर्वेसुरसिद्धपूज्यः ॥३२॥ अधर्मयुक्तोद्रमितो
बभूवविभुश्चनित्यंकलहप्रियोभूत् ॥ परोपतापीनमुचिर्दुरात्मापरावलेपीसनकोहिराजा ॥ ३३ ॥ परार्थलिप्सुर्दिति-
जोहिरण्यदक्मूर्खश्चतस्याप्यनुजःसुदुर्मतिः ॥ सुवर्णहारीयदुरुत्तमौजाएतेविनेशुर्ह्यनयात्पुराहि ॥ ३४ ॥ तस्माद्धर्मो-
नसंत्याज्योधर्मोहिपरमागतिः ॥ धर्महोनानरायांतिरौरवंनरकंमहत् ॥ ३५ ॥ धर्मस्तुगदितःपुंभिस्तारणंदिविचेहच ॥
पतनायतथाधर्मइहलोकेपरत्रच ॥ ३६ ॥ त्याज्यंधर्मान्वितैर्नित्यंपरदारोपसेवनं ॥ नयंतिपरदारास्तुनरकानेकविंश-
तिं ॥ ३७ ॥ सर्वेषामेववर्णानामेषधर्मइहोच्यते ॥ परार्थपरदारेषुयस्तुवांछांकरिष्यति ॥ ३८ ॥ सयातिनरकंघोरं-
रौरवंबहुलाःसमाः ॥ एवंपुरासुरपतेदेवर्षिभिरसितोऽव्ययः ॥ ३९ ॥ प्राहधर्मव्यवस्थानंखगेंद्रायारुणायहि ॥ तस्मात्तु-
दूरतोवर्जेत्परदारान्विचक्षणः ॥ नयंतिनिकृतप्रज्ञंपरदाराःपराभवं ॥ ४० ॥ पुलस्त्यउवाच ॥ इत्येवमुक्तेवचनेप्रह्ला-
देप्राहचांधकः ॥ भवान्धर्मपरस्त्वेकोनाहंधर्मंसमाचरे ॥ ४१ ॥ इत्येवमुक्त्वाप्रह्लादमंधकःप्राहशंबरं ॥ गच्छशंबरशै-
लेंद्रंमंदरंवदशंकरं ॥ ४२ ॥ भिक्षोकिमर्थंशैलेंद्रंस्वर्गतुल्यंसकंदरं ॥ परिरक्षसिकेनाद्यतेवदत्तोवदस्वमां ॥ ४३ ॥ ति-
ष्ठंतिशासनेमह्यंदेवाःशक्रपुरोगमाः ॥ तत्किमर्थंनिवससेमामनादृत्यमंदरे ॥ ४४ ॥ यदीष्टस्तवशैलेंद्रःक्रियतांवचनंमम ॥
येयंहिभवतःपत्नीसामेशीघ्रंप्रदीयतां ॥ ४५ ॥ इत्युक्तःसतदातेनशंबरोमंदरंद्रुतं ॥ जगामतत्रयत्रास्तेसहदेव्यापिनाक-

धृक् ॥ ४६ ॥ गत्वोवाचांधकवरोयाथातथ्यंदनोःसुतः ॥ तमुत्तरंहरःप्राहशृण्वत्यांगिरिकन्यया ॥ ४७ ॥ ममायंमंद-
रोदत्तःसहस्राक्षेणधीमता ॥ तन्नशक्तोस्मिसंत्यक्तुंविनाज्ञांवृत्रवैरिणः ॥ ४८ ॥ यच्चाब्रवीद्दीयतांमेगिरिपुत्रीतिदानवः ॥
तदेषायातुस्वंकामंनाहंधारयितुंक्षमः ॥ ४९ ॥ ततोऽब्रवीद्गिरिसुताशंबरंमुनिसत्तम ॥ ब्रूहिगत्वांधकंवीरममवाक्यंवि-
पश्चितं ॥ ५० ॥ अहंपदातिःसंग्रामेभवानीशस्तदाहिनौ ॥ प्राणद्यूतंपरिस्तीर्ययोजेष्यतिसलप्स्यते ॥ ५१ ॥ इत्येव-
मुक्तोमतिमान्शंबरोंधकमागमत् ॥ समागम्याब्रवीद्वाक्यंसर्वंगौर्याचभाषितं ॥ ५२ ॥ तच्छ्रुत्वादानवपतिःक्रोधदीप्ते-
क्षणःश्वसन् ॥ समाहूयाब्रवीद्वाक्यंदुर्योधनमिदंवचः ॥५३॥ गच्छशीघ्रंमहाबाहोभेरींसान्नाहिकींदृढां ॥ ताडयस्वा-
द्यविश्रब्धंदुःशीलामिवयोषितं ॥ ५४ ॥ समादिष्टोंधकेनाथभेरींदुर्योधनोबलात् ॥ ताडयामाससवेगेनयथाप्राणेनभूय-
सा ॥ ५५ ॥ साताडिताबलवताभेरीदुर्योधनेनहि ॥ सस्वानभैरवाकाररौरवंरासभीयथा ॥ ५६ ॥ तथातंस्वरमाक-
र्ण्यसर्वएवमहासुराः ॥ समायाताःसभांतूर्णंकिमेतदितिवादिनः ॥ ५७ ॥ याथातथ्यंचतान्सर्वानाहसेनापतिर्बली ॥ ते
चापिबलिनांश्रेष्ठाःसन्नद्धायुद्धकांक्षिणः ॥ ५८ ॥ सहांधकानिर्ययुस्तेगजैरुष्ट्रैर्हयैरथैः ॥ अंधकोरथमास्थायपंचनल्वं
प्रमाणतः ॥ ५९ ॥ त्र्यंबकस्यपराजेतुंकृतबुद्धिर्विनिर्ययौ ॥ जंभःकुजंभोहुंडश्चतुहुंडःशंबरोबलिः ॥ ६० ॥ बाणःका-
र्तस्वरोहस्तीसूर्यशत्रुर्महोदरः ॥ अयःशंकुःशिबिःशाल्वोवृषपर्वाविरोचनः ॥ ६१ ॥ हयग्रीवःकालनेमिःसंह्रादःकालना-
शनः ॥ सरभश्चैवसबलोबलोवृत्रश्चवीर्यवान् ॥ ६२ ॥ दुर्योधनश्चपाकश्चविपाकःकालशंबरौ ॥ एतेचान्येचबहवोमहावी-
र्यामहाबलाः ॥ प्रजग्मुरुत्सुकायोद्धुंनानायुधधरारणे ॥ ६३ ॥ इत्थंदुरात्मादनुदैत्यपालस्तदांधकोयोद्धुमनाहरेण ॥
महाचलंमंदरमभ्युपेयिवान्सकालपाशावशितोपिमंदधीः ॥६४॥ इतिश्रीवामनपुराणेभैरवप्रादुर्भावेअंधकसैन्यनिर्याणं

नामषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुलस्त्यउवाच ॥ हरोपिसमरासन्नःसमाहूयाथनंदिनं ॥ प्राहमंत्रयशैलादेयेस्थितास्तवशासने ॥ १ ॥ ततोमहेशवच-
नान्नंदीतूर्णतरंगतः ॥ उपस्पृश्यजलंश्रीमान्सस्मारगणनायकान् ॥ २ ॥ नंदिनासंस्मृताःसर्वेगणनाथाःसहस्रशः ॥
समुत्पत्यत्वरायुक्ताःप्रणतास्त्रिदशेश्वरे ॥ ३ ॥ आगतांश्चगुणान्नंदीकृतांजलिपुटोऽव्ययः ॥ सर्वान्निवेदयामासशंकरा-
यमहात्मने ॥ ४ ॥ नंदिरुवाच ॥ येनतान्पश्यसेशंभोत्रिनेत्रान्जटिलान्शुचीन् ॥ एतेरुद्राइतिख्याताःकोट्यस्त्वेकाद-
शैवतु ॥ ५ ॥ वानरास्यान्पश्यसेयान्शार्दूलसमविक्रमान् ॥ एतेषांद्वारपालाश्चसज्जमानायशोधनाः ॥ ६ ॥ पण्मु-
खान्पश्यसेयांश्चशक्तिपाणीन्शिखिध्वजान् ॥ षट्षष्टिस्तथाकोट्यःस्कंदनाम्नःकुमारकान् ॥ ७ ॥ एतावत्यस्तथाको-
ट्यःशाखनाम्नःषडाननाः ॥ विशालास्तावदेवोक्तानैगमेयाश्चशंकर ॥ ८ ॥ सप्तकोटिशतंशंभोअमीवैप्रमथोत्तमाः ॥
एकैकंप्रतिदेवेशतावत्योह्यपिमातरः ॥ ९ ॥ भस्मारुणितदेहाश्चत्रिनेत्राःशूलपाणयः ॥ एतेशैवाइतिप्रोक्तास्तत्रचोक्ता
गणेश्वराः ॥ १० ॥ तथापाशुपताश्चान्येभस्मप्रहरणाविभो ॥ एतेगणास्त्वसंख्याताःसाहाय्यार्थंसमागताः ॥ ११ ॥
पिनाकधारिणोरौद्रागणाःकालमुखाःपरे ॥ तवभक्ताःसमायाताजलामंडलिनोधुना ॥ १२ ॥ खट्वांगयोधिनोवीरारक्त-
चंदनभूषिताः ॥ इमेप्राप्तागणायोद्धुंमहाव्रतिनउत्तमाः ॥ १३ ॥ दिग्वाससोमौलिनश्चघंटाप्रहरणाःपरे ॥ निराश्रया
नामगणाःसमायाताश्चहेविभो ॥ १४ ॥ सार्धद्विनेत्राःपद्माक्षाःश्रीवत्सांकितवक्षसः ॥ समायाताःखगारूढावृषभध्वजि-
नोऽव्ययाः ॥ १५ ॥ महापाशुपतानामचक्रशूलधरास्तथा ॥ भैरवोविष्णुनासार्द्धमभेदेनार्चितोहियैः ॥ १६ ॥ इमेमृगेंद्रवद-
नाःशूलबाणधनुर्धराः ॥ गणास्त्वद्रोमसंभूतावीरभद्रपुरोगमाः ॥ १७ ॥ एतेचान्येचबहवःशतशोऽथसहस्रशः ॥ साहा-

ग्याथैंतवायातायथाप्रीत्यादिशस्वतान् ॥ १८ ॥ ततोभ्येत्यगणाःसर्वेप्रणेमुर्दृपकेतनं ॥ सत्कारेणैवचगणान्समाश्वा-
स्योपवेशयत् ॥ १९ ॥ महापाशुपतान्दृष्ट्वासमुत्थाप्यमहेश्वरः ॥ संपरिष्वजताध्यक्षांस्तेप्रणेमुर्महेश्वरं ॥ २० ॥
ततस्तदद्भुततमंदृष्ट्वासर्वेगणेश्वराः ॥ सुविस्मितास्तदाह्यासन्किमिदंचिंतयंस्त्विति ॥ २१ ॥ विस्मिताक्षान्गणान्दृष्ट्वा
शैलादिर्योगिनांवरः ॥ प्राहप्रहस्यदेवेशंशूलपाणिंगणाधिपं ॥ २२ ॥ विस्मिताहिगणादेवसर्वएवमहेश्वर ॥ महा-
पाशुपतानांहियत्त्वयालिंगनंतदा ॥ २३ ॥ तेषांमहादेवस्फुटंत्रैलोक्यबृंहकंविकं ॥ रूपंज्ञानंविवेकंचतद्वदस्वेच्छयाविभो
॥ २४ ॥ प्रमथाधिपतेर्वाक्यंविदित्वाभूतभावनः ॥ बभाषेतान्गणान्सर्वान्भावाभावविचारिणः ॥ २५ ॥ रुद्रउवाच ॥
भवद्भिर्भक्तिसंयुक्तैर्हरोभावेनपूजितः ॥ अहंकारविमूढैश्चनिंदाद्भिर्वैष्णवंपदं ॥ २६ ॥ तेनज्ञानेनभवतांसादृश्यंहिनिवा-
रितं ॥ योहंसभगवान्विष्णुर्यश्चासौसोहमव्ययः ॥ २७ ॥ नावाभ्यांवैविशेषोस्तिएकामूर्तिर्द्विधास्थिता ॥ तदमीभि-
र्नरव्याघ्रैर्भक्तिभावयुतैर्गणाः ॥ २८ ॥ यथाहंवैपरिज्ञातोनभवद्भिस्तथाहरिः ॥ यथाविनिंदितोह्यस्माद्भवद्भिर्मूढबुद्धि-
भिः ॥ २९ ॥ तेनज्ञानंहिवोनष्टंनातस्त्वालिंगितोमया ॥ इत्येवमुक्तेवचनेगणाःप्रोचुर्महेश्वरं ॥ ३० ॥ कथंभवान्स-
हैक्यंहिसंस्थितोज्ञाननिर्मलः ॥ शुद्धस्फटिकसंकाशःशांतःशुक्लोनिरंजनः ॥३१॥ सचाप्यंजनसंकाशःकथंतेनेहयुज्यते ॥
तेषांवचनमर्थाद्यंश्रुत्वाजीमूतकेतनः ॥ ३२ ॥ विहस्यमेघगंभीरंगणानेवमुवाचह ॥ श्रूयतांसर्वमाख्यास्येस्वयशोवर्द्धनं
वचः ॥ ३३ ॥ नत्वयोग्याश्चयूयंहिमहाज्ञानस्यकर्हिचित् ॥ अपवादभयाद्गुह्यंभवतांहिप्रकाश्यते ॥ ३४ ॥ प्रीत्यैवमपि
वैतेनयन्मेचेतासिनित्यशः ॥ एकरूपमेकदेहंकुरुध्वंयत्रचाश्रिताः ॥ ३५ ॥ पयसाहविषाद्यैश्चस्नापयेत्तत्प्रयत्नतः ॥
चंदनादिभिरेवार्च्यैर्नमेप्रीतिःप्रजायते ॥ ३६ ॥ यत्नात्क्रकचमादायछिंदध्वंममविग्रहं ॥ तथापिदृश्यतेविष्णुर्ममदे-

हेसनातनः ॥ ३७ ॥ एकाहारोभवेद्यस्तुविष्णुभक्तश्चयोभवेत् ॥ उभौतौसदृशौलोकेनात्रकार्याविचारणा ॥ ३८ ॥
नायंवदिष्यतेलोकोभेदंचैवकदाचन ॥ अतोर्थेनक्षिपाम्यद्यभवतोनरकेद्भुते ॥ ३९ ॥ यन्निंदध्वंजगन्नाथंपुष्कराक्षंचम-
न्मथं ॥ सदैवभगवान्सर्वःसर्वव्यापीगणेश्वरः ॥ ४० ॥ नतस्यसदृशोलोकेविद्यतेसचराचरे ॥ श्वेतमूर्तिःसभगवान्पी-
तोरक्तोजगत्पतिः ॥ ४१ ॥ तस्मात्परतरंलोकेनान्यत्सत्यंहिविद्यते ॥ सात्त्विकंराजसंचैवतामसंमिश्रकंतथा ॥ ४२ ॥
सएवधत्तेभगवान्सर्वपूज्यःसदाशिवः ॥ शंकरस्यवचःश्रुत्वाशैलाद्याःप्रमथोत्तमाः ॥ ४३ ॥ प्रत्यूचुर्भगवन्ब्रूहिस-
दाशिवविशेषणं ॥ तेषांतद्भाषितंश्रुत्वाप्रमथानांसुरेश्वरः ॥ ४४ ॥ दर्शयामासतद्रूपंसचशैवंनिरंजनं ॥ सहस्रच-
क्रचरणंसहस्रभुजमैश्वरं ॥ ४५ ॥ दंडपाणिंसुदुर्दृश्यंलोकैर्व्याप्तंसमंततः ॥ दंडसंस्थानिदृश्यंतेदेवप्रहरणानिच
॥ ४६ ॥ ततस्त्वेकमुखंभूयोददृशुःशंकरंगणाः ॥ रौद्रैश्चवैष्णवैश्चैवधृतंचिह्नैःसहस्रशः ॥ ४७ ॥ अर्द्धेनवैष्णववपुरर्द्धेन
हरविग्रहः ॥ खगध्वजंवृषारूढंखगारूढंवृषध्वजं ॥ ४८ ॥ यथायथात्रिनयनोरूपंधत्तेगुणाग्रणीः ॥ तथातथाचजायंते
महापाशुपतागणाः ॥ ४९ ॥ ततोभवच्चैकरूपीशंकरोबहुरूपवान् ॥ क्षणाच्छ्वेतःक्षणाद्रक्तःपीतोनीलःक्षणादपि ॥ ५० ॥
मिश्रकोवर्णहीनश्चमहापाशुपतस्तथा ॥ क्षणाद्भवतिरुद्रेंद्रःक्षणाच्छंभुःप्रभाकरः ॥ ५१ ॥ क्षणार्द्धाच्छंकरोविष्णुःक्षणा-
च्छर्वःपितामहः ॥ ततस्तदद्भुततमंदृष्ट्वाशैवादयोगणाः ॥ ५२ ॥ अथाजानंतचैक्येनब्रह्मविष्णिंवद्रभास्करं ॥ यदात्वभे-
देनाजानन्देवदेवंसनातनं ॥ ५३ ॥ तदानिर्धूतपापास्तेसमजायंतपार्षदाः ॥ तेष्वेवंधूतपापेषुअभिन्नेषुहरीश्वरः॥५४॥
प्रीतात्माविबभौशंभुःप्रीत्यायुक्तोब्रवीद्वचः ॥ परितुष्टोस्मिसर्वेषांज्ञानेनानेनसुव्रताः ॥ ५५ ॥ वृणुध्वंवरमानंत्यंदास्ये
वोमनसेप्सितं ॥ ऊचुस्तेदेहिभगवन्वरमस्माकमीश्वर ॥ भिन्नदृष्ट्यामहत्पापंयदाप्तंतत्प्रयातुनः ॥ ५६ ॥ पुलस्त्यउवा-

च ॥ बाढमित्यब्रवीच्छर्वश्चक्रेनिर्धूतकल्मषान् ॥ संपर्यष्वजताव्यक्तस्तान्सर्वान्गणयूथपान् ॥ ५७ ॥ इतिविभुना प्रणतार्तिहरेणगणपतयः सहयोपिषमेघरथेनश्रुतिगदितान्गमेनविबुधावर्तेनगिरिमवत्य ॥ ५८ ॥ आच्छादितोगिरिवरः प्रमथैर्घनाभैराभातिशुक्लतनुरीश्वरपादजुष्टः ॥ नीलाजिनाततततनुःशरदभ्रवर्णोयद्वद्विभातिबलवान्वृषभोहरस्य ॥ ५९ ॥ इतिश्रीवामनपुराणेभैरवप्रादुर्भावेसदाशिवदर्शनंनामसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ ॥

पुलस्त्यउवाच ॥ एतस्मिन्नंतरेप्राप्तःसमंदैत्यैस्तथांधकः ॥ मंदरंपर्वतश्रेष्ठंप्रमथाश्रितकंदरं ॥ १ ॥ प्रमथादानवान्दृष्ट्वाचक्रुःकिलिकिलाध्वनिं ॥ प्रमथाश्चापिसंरब्धाजघ्नुस्तूर्याण्यनेकशः ॥ २ ॥ सचातूर्णोन्महानादोरोदसींप्रलयोपमः ॥ शुश्रावववायुमार्गस्थोविघ्ननाथोविनायकः ॥ ३ ॥ समभ्ययात्समंक्रुद्धःप्रमथैरभिसंवृतः ॥ मंदरंपर्वतश्रेष्ठंददर्शपितरं तथा ॥ ४ ॥ प्रणिपत्यतथाभक्त्यावाक्यमाहमहेश्वरं ॥ किंतिष्ठसिजगन्नाथसमुत्तिष्ठरणोत्सुक ॥ ५ ॥ ततोविघ्नेश्वरवचोजगन्नाथोम्बिकांवचः ॥ प्राहयामोंधकंहंतुंस्वयमेवाप्रमत्तया ॥ ६ ॥ ततोगिरिसुतादेवंसमालिंग्यपुनःपुनः ॥ हरं निरीक्ष्यसस्नेहंप्राहगच्छतथांधकं ॥ ७ ॥ ततोमरगुरोगौरीचंदनंरोचनोज्ज्वलं ॥ प्रतिवंद्यसुसंप्रोतापादावेवववंदत ॥ ८ ॥ ततोहरःप्राहवचोवयस्यांमालिनीमिति ॥ जयांचविजयांचैवजयंतींचापराजितां ॥ ९ ॥ युष्माभिरप्रमत्ताभिःस्थेयंगेहेसुरक्षिते ॥ रक्षणीयाप्रयत्नेनगिरिपुत्रीप्रमादतः ॥ १० ॥ इतिसंदिश्यताःसर्वाःसमारुह्यवृषंप्रभुः ॥ निर्जगामगृहाद्धृष्टोजग्मुस्तेपृष्ठतोगणाः ॥ ११ ॥ निर्गच्छंस्तस्यभवनादीश्वरस्यगणाधिपाः ॥ समायाताःपरीवार्यजयशब्दांश्चचक्रिरे ॥ १२ ॥ रणायनिर्गच्छतिलोकपालेमहेश्वरेशूलधरेमहर्षे ॥ शुभानिसौम्यानिसुमंगलानिचिह्नानिशंसंतिजयंहितस्य ॥ १३ ॥ शिवास्थितावामतरेचभागेप्रायात्तथाग्रेसुरसंनदंती ॥ क्रव्यादसंघाश्चतथामिषैषिणःप्रयांति

तेच्छाद्यमानादनुबाणजालैर्विनायकाद्याबलिनोपवीराः ॥ सिंहप्रणुन्नाद्दपभायथैवभयातुरादुद्रुविरेसमंतात् ॥ ४९ ॥
परस्परान्प्रेक्ष्यगणान्कुमारःशक्तिंनिशातामथधारयित्वा ॥ तूर्णंसमभ्येत्यरिपुंगवेषुप्रगृह्यशक्तिंहृदयंबिभेद ॥ ५० ॥ श-
क्तिनिर्भिन्नहृदयोहस्तीभूम्यांपपातह ॥ समरेचापिपृतनामध्येसौदनुपुंगवः ॥ ५१ ॥ तमशातिगणंदृष्ट्वाभग्नंक्रुद्धागणे-
श्वराः ॥ पुरतोनंदिनंकृत्वाजिघांसंतश्चदानवान् ॥ ५२ ॥ तेवध्यमानाःप्रमथैर्दैत्याश्चापिपराङ्मुखाः ॥ भूयो-
निवृत्ताबलिनःकुर्वंतश्चपुरोगणान् ॥ ५३ ॥ तान्निवृत्तान्समीक्ष्यैवक्रोधदीप्तेक्षणःश्वसन् ॥ नंदिषेणोऽव्याघ्रमुखोनि-
वृत्तश्चापिवेगवान् ॥ ५४ ॥ तस्मिन्निवृत्तेगणपेपट्टिशाग्रकरेतदा ॥ कांतस्वरोपिविवृतेगदामादायनारद ॥ ५५ ॥
तमापतंतंज्वलनप्रकाशंगणःसमीक्ष्यैवमहासुरेंद्रं ॥ तंपट्टिशंभ्राम्यजघानमूर्ध्निकांतस्वरंविस्वरमुन्नदंतं ॥ ५६ ॥ तस्मि-
न्हतेभ्रातरिमातुलेयेपाशंसमाविध्यतुरंगकध्वजः ॥ बबंधवीरंसहपट्टिशेनगणेश्वरंचाप्यथनंदिषेणं ॥ ५७ ॥ नंदिषेणं
तथाबद्धंसमीक्ष्यबलिनांवरः ॥ विषाणःकुपितोभ्येत्यशक्तिपाणिरुपस्थितः ॥ ५८ ॥ तंदृष्ट्वाबलिनांश्रेष्ठःपाशपाणिरयः
शिराः ॥ संयोधयामासबलिर्विशाखंकुक्कुटध्वजं ॥ ५९ ॥ विशाखंसन्निरुद्धंवैरणेदृष्ट्वागणोत्तमाः ॥ शाखश्चनैगमेयश्च
तूर्णंदुद्रुवतूरिपुं ॥ ६० ॥ एकतोनैगमेयेनभग्नःशक्त्याक्षयःशिराः ॥ एकतश्चैवशाखेनविशाखप्रियकाम्यया ॥ ६१ ॥
सत्रिभिःशंकरसुतैःपीड्यमानोजहौरणम् ॥ सप्राप्यशंबरंतूर्णंरक्षमांहिगणेश्वरात् ॥ ६२ ॥ पाशशक्त्यासमाहत्यचतु-
र्भिःशंकरात्मजैः ॥ जगामनिलयंतूर्णमाकाशादिवभूतलं ॥ ६३ ॥ पाशेनिकृत्तेयातेचशंबरःकातरेक्षणः ॥ दिशोथभेजेदे-
वर्षेकुमारःसैन्यमर्दयत् ॥ ६४ ॥ सावध्यमानापृतनामहर्षेसदानवाशर्वसुतैर्गणैश्च ॥ विवर्णरूपाभयविह्वलांगीजगाम
शुक्रंशरणंभयार्ता ॥ ६५ ॥ इतिश्रीवामनपुराणेदैत्यपराजयोनामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ ॥

पुलस्त्यउवाच ॥ ततःकुजंभेचयमालयंगतेहतेचसैन्येप्रमथैर्महारथः ॥ १ ॥ अन्धकोभ्येत्यशुक्रंतुइदंवचनमब्रवीत् ॥
भगवंस्त्वांसमाश्रित्यवयंबाधामदेवताः ॥ आथन्यानपिविप्रर्षेगंधर्वसुरकिन्नरान् ॥२॥ तदिमांपश्यभगवन्समगुप्तांवरू-
थिनीं ॥ अनाथेवयथानारीप्रमथैरपिकाल्यते ॥ ३ ॥ कुजंभाद्याश्चनिहताभ्रातरोममभार्गव ॥ असंख्याताःप्रमथा-
स्तेकुरुक्षेत्रफलंयथा ॥ ४ ॥ तस्मात्कुरुष्वचतथाययथानज्ञायतेपरैः ॥ जयेमचपरान्युद्धेतथात्वंकर्तुमर्हसि ॥ ५ ॥ पुल-
स्त्यउवाच ॥ शुक्रोंधकवचःश्रुत्वासांत्वयन्परमोगुरुः ॥ वचनंप्राहदेवर्षेहर्षयन्दानवेश्वरं ॥ ६ ॥ तद्धितीर्थंगमिष्यामि
करिष्यामितवप्रियं ॥ इत्येवमुक्त्वावचनंविद्यांसंजीवनींकविः ॥७॥ आवर्तयामासतदाविधानेनशुचिव्रतः ॥ तस्यामावर्त-
मानायांविद्यायामसुरेश्वर ॥ ८ ॥ येहताःप्रमथैर्युद्धेतेचसर्वेसमुत्थिताः ॥ कुजंभादिषुदैत्येषुभूयएवोत्थितेष्वथ ॥ ९ ॥
योद्धुंसमागतेष्वेवनंदीशंकरमब्रवीत् ॥ येहताःप्रमथैर्दैत्यायथाशक्त्यारणाजिरे ॥ १० ॥ तेसमुज्जीविताभूयोभार्गवेणा-
थविद्यया ॥ तदिदंयन्महादेवमहत्कर्मकृतंरणे ॥ ११ ॥ संजातंस्वल्पमेवेशशुक्रविद्याबलाश्रयात् ॥ इत्येवमुक्तेवचने
नंदिनंकुलनंदिनं ॥ १२ ॥ प्रत्युवाचप्रभुःप्रीत्यास्वार्थसाधनमुत्तमम् ॥ गच्छशुक्रंगणपतेममान्तिकमुपानय
॥ १३ ॥ अहंतंसंयमिष्यामियथायोगंसमेत्याह ॥ इत्येवमुक्तोरुद्रेणनंदीगणपतिस्ततः ॥ १४ ॥ समाजगामदैत्या-
नांचमूंशुक्रजिघृक्षया ॥ तंददर्शासुरश्रेष्ठोबलवांस्तुभयंकरः ॥ १५ ॥ सरुरोधतदामार्गेसिंहस्येवपशुर्वने ॥ समु-

---

१( भगवन्येहतायुद्धेदृश्यंतेतेसमुत्थिताः ॥ शंभुनंदिवचःश्रुत्वाप्रमथानाहसत्वरं ॥ दृश्यतांकारणंह्येतन्मृतानामुत्थितौगणाः ॥ प्रमथास्तत्रगत्वाचभार्गवंददृशुस्तदा ॥ संजीविन्याजीवयं-तंमृतान्दैत्यान्सहस्रशः ॥ आगत्यावेदयन्सर्वंभार्गवस्यविचेष्टितं ॥ महादेववचोमत्तःशृणत्वंपरमाद्भुतं । अचिन्त्यंचाप्यसह्यंचमृतानांजीवनंपुनः ॥ ततःक्रुद्धोहरःप्राहगृहीत्वानीयतांकविः ॥ तच्छ्रुत्वाप्रमथैःशुक्रमानीतमगिलद्धरः ॥ ) येहताइत्यारभ्य भार्गवपुगवस्त्वित्यस्यस्थाने इदंपाठान्तरंक्वचिद् दृश्यते ।

पेत्याहतंनंदीवज्रेणाशनितेजसा ॥ १६ ॥ संपपाताथनिःसंज्ञोययौनंदीततस्त्वरन् ॥ ततःकुंजंभोजंभश्चब-
लोवृत्तश्चराक्षसाः ॥ १७ ॥ स्वयंचरणशार्दूलानंदिनंसमुपाद्रवन् ॥ तथान्येदानवश्रेष्ठामयन्हादपुरोगमाः
॥ १८ ॥ नानाप्रहरणायुद्धेगणनाथमभिद्रवन् ॥ ततोगणानामधिपंकुट्यमानंमहाबलैः ॥ १९ ॥
समपश्यंतदेवास्तंपितामहपुरोगमाः ॥ तंदृष्ट्वाभगवान्प्राहदेवान्शक्रपुरोगमान् ॥ २० ॥ साहाय्यंक्रियतांशंभो-
रेतदंतरमुत्तमम् ॥ पितामहोक्तंवचनंश्रुत्वादेवाःसवासवाः॥२१॥ समापतंतवेगेनशिवसैन्यमथांबरात् ॥ तेषामापततांवे-
गःप्रमथानांबलेबभौ ॥ २२ ॥ अपगानांमहावेगःपतंतीनांमहार्णवे ॥ ततोहलहलाशब्दःसमजायतचोभयोः ॥ २३ ॥
बलयोर्घोरसंकाशोसुरप्रमथयोरथ ॥ तदन्तरमुपागम्यनंदीसंगृह्यवेगवान् ॥ २४ ॥ कथभार्गवमाक्रामत्सिंहोवनमृ-
गंयथा ॥ तमादायहराभ्यासमागमद्गणनायकः ॥ २५ ॥ निपात्यरक्षिणःसर्वानथशुक्रंन्यवेशयन् ॥ तमानीतंकविंश-
वंःप्राक्षिपद्वदनेप्रभुः ॥ २६ ॥ भार्गवंव्याप्ततंतुंडेदृष्ट्वासर्वेसुरारयः ॥ सशंभुनाकविश्रेष्ठोग्रस्तोजठरमास्थितः ॥
तुष्टावभगवंतंतंवाग्भिर्भार्गवआदरात् ॥ २७ ॥ शुक्रउवाच ॥ वरदायनमस्तुभ्यंहरायगुणशालिने ॥ शंकरायमहेशा-
यविश्वेशायनमोनमः ॥ २८ ॥ जीवनायनमस्तुभ्यंलोकनाथवृषाकपे ॥ मदनाग्निकालशत्रोवामदेवायतेनमः ॥ २९ ॥
सवित्रेविश्वरूपायवामनायसदागते ॥ महादेवायशर्वायईश्वरायनमोनमः ॥ ३० ॥ त्रिनयन हर भव शंकर उमा-
पते जीमूतकेतो गुहाश्मशाननिरत भूतिविलेपन शूलपाणे पशुपते गोपते तत्पुरुष सत्तम नमो नमस्ते ॥ १ ॥ इत्थं-
स्तुतःकविवरेणहरोऽथभक्त्याप्रीतोवरंवरयभार्गवइत्युवाच ॥ तंप्राहदेहिभगवंस्तुवरंममाद्ययद्वैतवैवजठरान्ममनिर्गमो-
स्तु॥३१॥ ततोहरोक्षाणितदानिरुध्यप्राहद्विजेंद्रंकिलनिर्गमस्व ॥ इत्युक्तमात्रोविभुनाचचारदेवोदरेभार्गवपुंगवस्तु॥३२॥

परिक्रमन्सोथददर्शशांकरेस्थितस्तदैवोदरकोटरेकविः ॥ भुवनार्णवपातालान्स्थितान्स्थावरजंगमैः ॥३३॥ आदित्य-
वसुरुद्राश्वविश्वेदेवगणास्तथा ॥ यक्षान्किंपुरुषांश्चैवगंधर्वाप्सरसांगणान् ॥ ३४ ॥ मुनीन्मनुजसाध्यांश्चपशुकीट-
पिपीलकान् ॥ वृक्षगुल्मसरीसृपान्फलमूलौषधानिच ॥३५॥ जलस्थांश्चस्थलस्थांश्चनिमेषान्निमिषानपि ॥ अव्य-
क्तांश्चैवव्यक्तांश्चद्विपदोथचतुष्पदः ॥३६॥सदृष्ट्वाकौतुकाविष्टःपरिबभ्रामभार्गवः॥तत्रास्यतोभार्गवस्यदिव्यःसंवत्सरोगतः
॥३७॥ नचैवांतमसौलेभेततःश्रांतोऽभवत्कविः ॥ सश्रांतंवीक्ष्यचात्मानंनचलेभेऽथनिर्गमं ॥ भक्तिनम्रोमहादेवंततस्तत्स-
मुपागमत् ॥ ३८ ॥ शुक्रउवाच ॥ विश्वरूपमहारूपविश्वरूपाक्षरूपधृक् ॥ सहस्राक्षमहादेवत्वामहंशरणंगतः ॥३९॥
नमोस्तुतेशंकरशर्वशंभोसहस्रनेत्रांघ्रिभुजंगभूषण ॥ दृष्ट्वैवसर्वंभुवनंतवोदरेश्रांतोभवंतंशरणंप्रपन्नः ॥ ४० ॥ इत्येवमुक्ते
वचनेमहात्माशंभुर्वचःप्राहतदाविहस्य ॥ निर्गच्छपुत्रोसिममाधुनात्वंशिश्नेनभोभार्गववंशचंद्र ॥ ४१ ॥ नाम्नातुशु-
क्रेतिचराचरास्त्वांस्तोष्यंतिनोचात्रविचारणास्यात् ॥ इत्येवमुक्त्वाभगवान्मुमोचशिश्नेनशुक्रःसचनिर्जगाम ॥ ४२ ॥
विनिर्गतोभार्गववंशचंद्रःशुक्रत्वमासाद्यमहानुभावः ॥ प्रणम्यशंभुंसजगामतूर्णंमहासुराणांबलमुत्तमौजाः ॥ ४३ ॥
भार्गवेपुनरायातेदानवामुदिताभवन् ॥ पुनर्युद्धायविदधुर्मतिंसहगणेश्वरैः ॥ ४४ ॥ गणेश्वरास्तानसुरान्सहामर-
गणैरथ ॥ युयुधुःसंकुलंयुद्धंसर्वएवजयेप्सवः ॥ ४५ ॥ ततोसुरगणानांचयुध्यतांद्वंद्वयुद्धवत् ॥ द्वंद्वयुद्धंसमभवद्घोररूपं
तपोधन ॥ ४६ ॥ अंधकोनंदिनंयुद्धेशंकुकर्णंत्वविःशिराः ॥ कुंभध्वजंबलिर्धीमान्नंदिषेणंविरोचनः ॥ ४७ ॥ अश्वग्री-
वोविशाखंचशाखोवृत्रमयोधयत् ॥ बाणंतथानैगमेयोबलराक्षसपुंगवः ॥ ४८ ॥ विनायकंमहावीर्यंपरश्वधरणंरणे ॥

१ शरणमिति पु० । २ श्रांतइति पा० ।

संक्रुद्धाराक्षसश्रेष्ठादानवाःप्रमथानथ ॥ ४९ ॥ संयोधयंतोब्रह्मर्षेदायादानांशतानिषट् ॥ ५० ॥ शतक्रतुं
समाधीतंवज्रपाणिमवस्थितं ॥ तंचापिदानवश्रेष्ठस्तुहुंडःसमयोधयत् ॥ ५१ ॥ हस्तीचकुंडजठरंह्रादोवीरंघटोदरं ॥
एतेहिबलिनांश्रेष्ठादानवाःप्रमथानथ ॥ ५२ ॥ संयोधयंतोब्रह्मर्षेदैतेयानांशतानिषट् ॥ गणोत्कटंसमायातंवज्रपाणि-
मिवास्थितं ॥ ५३ ॥ वारयामासबलवान्जंभोनाममहासुरः ॥ शंभुर्नामासुरपतिःसब्रह्माणमयोधयत् ॥ ५४ ॥ मा-
यामयःकुजंभश्चाविष्णुर्दैत्याधिपस्त्वियात् ॥ वैवस्वतंरणेसोल्कोवरुणंत्रिशिरास्तथा ॥ ५५ ॥ द्विमूर्धापवनंसोमंसहमि-
त्रंविरूपधृक् ॥ एकेदक्सरणेरौद्रःकालनेमिर्महासुरः ॥ ५६ ॥ एकादशैवरुद्रांस्तुपञ्चैकोपिरणोत्कटः ॥ योधयामासतेज-
स्वीविद्युन्मालीमहासुरः ॥५७॥ द्वावश्विनौचनरकौभास्करानेवशंबरः ॥ साध्यान्मरुद्गणांश्चैवनिवातकवचादयः ॥५८॥
एवंद्वंद्वसहस्राणिप्रमथानांचदानवैः ॥ संजातानांसुराब्दानांशतानिषण्महामुने ॥ ५९ ॥ यदायोद्धुंनशक्तास्तेदानवैर-
मरादयः ॥ मुखमादायवेगेनग्रसंतेक्रमशोमरान् ॥ ६० ॥ ततोऽभवच्चतत्सैन्यंशून्यंप्रमथदैवतैः ॥ आच्छतंवर्जितंसर्वैःप्रम-
थैरमरैरपि ॥६१॥ दृष्ट्वाशून्यंगिरिप्रस्थंग्रस्तांश्चप्रमथामरान् ॥ क्रोधादुत्पादयामासरुद्रोजृंभांविकांवशी ॥६२॥ तया-
कृष्टादनुसुताअलसामंदभाषिणः ॥ वदनंविकृतंकृत्वामुक्तशस्त्राविजृंभिरे ॥ ६३ ॥ विजृंभमाणेषुतदादानवेषुगणेश्वराः ॥
सुराश्चनिर्ययुस्तूर्णंदैत्यदेहांस्तथाकुलाः ॥ ६४ ॥ मेघप्रभेभ्योदेवेभ्योनिर्गच्छंतोनरोत्तमाः ॥ शोभंतेपद्मपत्राक्षामेघ-
स्यइवविद्युतः ॥ ६५ ॥ ततोमगरणाःसर्वेनिर्गताश्चतपोधन ॥ अयुध्यंतमहात्मानोभूयएवाभिकोपिताः ॥ ६६ ॥
ततोदेववरैःसर्वैदानवाःशर्वपालितैः ॥ पराजीयंतसंग्रामेभूयोभूयस्त्वहर्निशं ॥ ६७ ॥ तत्रत्रिनेत्रःस्वांसंध्यांसप्ताष्टशति- १२०

१ शतक्रतुं । पा० । २ एकादृगृष्टिर्यस्यैवंभूतोरौद्रः क्रूरः सः प्रसिद्धइत्यर्थः । ३ तदामायांसमाश्रित्य पाठा० ।

केगते ॥ कालेह्युपासततदासोष्टादशभुजोव्ययः ॥ ६८ ॥ संस्पृश्यापःसरस्वत्याःस्नात्वाचविधिनाहरः ॥ कृतार्थोभक्तिमान्मुह्निंपुष्पांजलिमथाक्षिपत् ॥ ६९ ॥ ततोननामशिरसाततश्चक्रेप्रदक्षिणं ॥ हिरण्यगर्भेत्यादित्यमुपतस्थेजजापह ॥ ७० ॥ द्रष्ट्रेनमोनमस्तेस्तुसम्यगुच्चार्यशूलधृक् ॥ ननर्तभावगंभीरोदोर्दण्डंभ्रामयन्बली ॥ ७१ ॥ परिनृत्यतिदेवेशे गणाश्चैवासुरास्तथा ॥ नृत्यंतिभावयुक्तास्तुहरस्यानुविधायिनः ॥ ७२ ॥ संध्यामुपास्यदेवेशःपरिनृत्ययथेच्छया ॥ युद्धायदानवैःसार्धंमतिंभूयःसमादधे ॥ ७३ ॥ ततःसुरगणैःसर्वैस्त्रिनेत्रभुजपालितैः ॥ दानवानिर्जिताःसर्वैबलिभिर्भयवर्जितैः ॥ ७४ ॥ स्वबलंनिर्जितंदृष्ट्वामत्वाजेयंचशंकरं ॥ अंधकःसुंदमाहूयइदंवचनमब्रवीत् ॥ ७५ ॥ सुंदभ्रातासिमेवीरविश्वास्यःसर्ववस्तुषु ॥ तत्त्वांवदामियद्वाक्यंतच्छ्रुत्वाकुरुयत्क्षमं ॥ ७६ ॥ दुर्जयोसौरणपटुर्महात्माकारणांतरैः ॥ ममास्तेचापिहृदयेपद्माक्षीशैलनंदिनी ॥ ७७ ॥ तदुत्तिष्ठस्वगच्छावोयत्रास्तेचारुहासिनी ॥ तत्रैनांमोहयिष्यामिशंभुरूपेणदानव ॥ ७८ ॥ भवान्भवस्यानुचरोभवनंदीगणेश्वरः ॥ ततोगत्वाथ भुक्त्वातांजेष्यामिप्रमथान्सुरान् ॥ ७९ ॥ इत्येवमुक्तेवचनेबाढंसुंदोऽभ्यभाषत ॥ समजायतशैलादिरंधकःशंकरोप्यभूत् ॥ ८० ॥ नंदिरुद्रौततोभूत्वामहासुरचमूपती ॥ संप्राप्तौमंदरगिरिंप्रहारैःकृतविग्रहौ ॥ ८१ ॥ नंदिनोहस्तमालंब्यह्यंधकोहरमंदिरं ॥ विवेशनिर्विशंकेनचित्तेनासुरसत्तमः ॥ ८२ ॥ ततोगिरिसुतादूरादायांतंवीक्ष्यचांधकं ॥ महेश्वरवपुच्छन्नंप्रहारैर्जर्जरच्छविं ॥ ८३ ॥ सुंदःशैलादिरूपस्थमवष्टभ्याविशत्ततः ॥ तंदृष्ट्वामालिनींप्राहयशस्यांविजयां जयां ॥ ८४ ॥ जयेपश्यस्वदेवस्यमदर्थेविग्रहंकृतं ॥ शत्रुभिर्दारुणतरैस्तदुत्तिष्ठस्वसत्वरं ॥ ८५ ॥ घृतमानयपौराणं चीरंचलवणंदधि ॥ व्रणभंगंकरिष्यामिस्वयमेवपिनाकिनः ॥ ८६ ॥ कुरुष्वशीघ्रंयस्यत्वंभर्तुर्व्रणविनाशनं ॥ इत्येव-

मुक्त्वावचनंसमुत्थायवरासनात् ॥ ८७ ॥ अभ्युद्ययौतदाभक्त्यामन्यमानावृषध्वजं ॥ शरपत्रेणतांच्छित्वाभूयश्चिह्ना-
नियत्नतः ॥ ८८ ॥ अन्विये्षतदापश्यत्तावुभौपार्श्वतःस्थितौ ॥ साज्ञात्वादानवंरौद्रंमायाच्छादितविग्रहं ॥ ८९ ॥
अपयानंतदाचक्रेगिरिशजसुतामुने ॥ देव्याश्चिंतितमाज्ञायसुंदंत्यक्त्वांधकोसुरः ॥ ९० ॥ समाद्रवतवेगेनहरकांतां
विभावरीम् ॥ समाद्रवतदैतेयोयेनमार्गेणसागमत् ॥ ९१ ॥ कुर्वतीचतिरस्कारंपादद्युतिनिराकुला ॥ तमापतंतंदृष्ट्वैव
गिरिजाप्राद्रवद्भयात् ॥ ९२ ॥ गृहंत्यक्त्वाह्युपवनंसखीभिःसहितातदा ॥ तत्राप्यनुजगामासौमदांधोमुनिपुंगव
॥ ९३ ॥ तथापिनशशापैनंतपसोगोपनाययत् ॥ तद्भयादाविशद्गौरीश्वेतार्ककुसुमंशुचि ॥ ९४ ॥ विजयाद्यामहागु-
ल्मंसंप्रयातालयंमुने ॥ नष्टायामथपार्वत्यांभूयोहैरण्यलोचनिः ॥ ९५ ॥ सुंदंहस्तेसमादायस्वसैन्यंपुनरागमत् ॥
अंधकेपुनरायातेस्वबलंमुनिसत्तम ॥ ९६ ॥ प्रावर्ततमहायुद्धंप्रथमासुरयोरथ॥ ततोरणेसुरश्रेष्ठोविष्णुश्चक्रगदाधरः ॥
॥९७॥ निर्जघानासुरबलंशंकरप्रियकाम्यया ॥शार्ङ्गचापच्युतैर्बाणैःसंस्यूतादानवर्षभाः ॥ ९८ ॥ पंचषट्सप्तचाष्टौवाव्र-
श्चपादैर्घनाइव ॥ गदयाकांश्चिदवधीच्चक्रेणान्यान्जनार्दनः ॥ ९९ ॥ खड्गेनचचकर्तान्यान्दृष्ट्वान्यान्भस्मसात्कृता-
न् ॥ हलेनाकृष्यचैवान्यान्मुसलेनाप्यचूर्णयत् ॥ १०० ॥ गरुडःपक्षपाताभ्यांतुंडेनाप्युरसाहनत् ॥ सचादिपुरुषो-
धातापुराणःप्रपितामहः ॥ १०१ ॥ भ्रामयन्विपुलंपद्ममभ्यषिंचतवारिणा ॥ संस्पृष्टाब्रह्मतोयेनसर्वतीर्थमयेनहि
॥ १०२ ॥ गणामरगणाश्चासन्नवागणशताधिकाः ॥ दानवास्तेचतोयेनसंस्पृष्टाश्चाघहारिणा ॥ १०३ ॥ स-
वाहनालयंजग्मुःकुलिशेनेवपर्वताः ॥ दृष्ट्वाब्रह्महरीयुद्धेघातयंतौमहासुरान् ॥ १०४ ॥ शतक्रतुश्चदुद्रावयुद्धायकृतनि-
श्चयः ॥ तमापतंतंसंप्रेक्ष्यबलोदानवसत्तमः ॥ १०५ ॥ नत्वादेवंगदापाणिंविमानस्थंचपद्मजं ॥ क्रमेणचाद्रवद्योद्धुंसु-

ष्टिमुद्यम्यनारद ॥ १०६ ॥ बलवान्दानवपतिरजेयोदेवदानवैः ॥ तमापतंतंत्रिदशेश्वरस्तुदोर्ष्णांसहस्रेणयथाबलेन
॥ १०७ ॥ वज्रंपरिभ्राम्यबलस्यमूर्धनिनिपातयामाससुरेश्वरस्तु ॥ बाढंसचास्त्रप्रवरोपिवज्रोजगामतूर्णंहिसहस्रधा
मुने ॥ १०८ ॥ बलोद्भवदेवपतिश्चभीतःपराङ्मुखोभूत्सुरराण्महर्षे ॥ तंचापिजंभोविमुखंनिरीक्ष्यभूतात्ततोवाक्यमुवा-
चचेदं ॥ १०९ ॥ तिष्ठस्वराजासिचराचरस्यनराजधर्मेगदितंपलायनं ॥ सहस्राक्षोजंभवाक्यंनिशम्यभीतस्तूर्णंवि-
ष्णुमागान्महर्षे ॥ उपेत्याथश्रूयतांवाक्यमीशत्वंवैनाथोभूतभव्यस्यविष्णो ॥ ११० ॥ जंभस्तर्जयतेत्यर्थंमानिरायुध-
मीक्ष्यहि ॥ आयुधंदेहिभगवंस्त्वामहंशरणंगतः ॥ १११ ॥ तमुवाचहरिःशक्रंत्यक्त्वावज्रंव्रजाधुना ॥ प्रार्थयस्वायुधं
वह्निंसतेदास्यत्यसंशयं ॥ ११२ ॥ जनार्दनवचःश्रुत्वाशक्रस्त्वमितविक्रमः ॥ शरणंपावकमगादिदंचोवाचनारद
॥ ११३ ॥ शक्रउवाच ॥ निघ्नतोमेबलंवज्रःकृशानोशतधागतः ॥ एषचाहूयतेजंभस्तस्माद्देह्यायुधंमम ॥ ११४ ॥ पुल-
स्त्यउवाच ॥ तमाहभगवान्वह्निःप्रीतोस्मितववासव ॥ यस्तुदर्पंपरिहृत्यमामेवशरणंगतः ॥ ११५ ॥ इत्युच्चार्यस्वश-
क्त्यासशक्तिंनिष्क्राम्यभावतः ॥ प्रादादिंद्रायभगवान्रोचमानोदिवंगतः ॥ ११६ ॥ तामादायतदाशक्तिंशतघंटांसु-
दारुणां ॥ प्रत्युद्ययौतदाजंभंहंतुकामोरिमर्दनः ॥ ११७ ॥ तयाभिसहितःशक्रःसहसैन्यैरभिद्रुतः ॥ क्रोधंचक्रेतदाजं-
भोनिजघानगजाधिपं ॥ ११८ ॥ जंभमुष्टिनिपातेनभग्नकुंभकटोगजः ॥ निपपातयथाशैलःशक्रवज्रहतःपुरा ॥११९॥
पतमानंगजेंद्रंतुशक्रश्चाप्लुत्यवेगवान् ॥ त्यक्त्वैवमंदरगिरिंप्रयातोवसुधातले ॥ १२० ॥ तंपतंतंहरिंसिद्धाश्चारणा-
श्चतदाब्रुवन् ॥ मामाशक्रपतस्वाद्यभूतलेतिष्ठवासव ॥ १२१ ॥ सतेषांवचनंश्रुत्वायोगीतस्थौक्षणंतदा ॥ प्राहचैता-
न्कथंयोत्स्येपतन्वैशत्रुभिःसह ॥ १२२ ॥ तमूचुर्देवगंधर्वामाविषादंव्रजेश्वर ॥ युध्यस्वत्वंसमारुह्यप्रेषयामोजगद्रथं

॥ १२३ ॥ इत्येवमुक्त्वाविपुलंरथंस्वस्तिकलक्षणं ॥ वानरध्वजसंयुक्तंसंहतैर्हरिभिर्युतं ॥ १२४ ॥ शुद्धजांबूनदमयं
किंकिणीजालमंडितं ॥ शक्रायप्रेषयामासुर्विश्वावसुपुरोगमाः ॥ १२५ ॥ तमागतमुदीक्ष्याथहीनंसारथिनाहरिः ॥
प्राहयोत्स्येकथंयुद्धेसंयमिष्येकथंहयान् ॥ १२६ ॥ यदिकश्चिच्चसारथ्यंकरिष्यतिममाधुना ॥ ततोहंघातयेशत्रून्नान्य-
थेतिकथंचन ॥ १२७ ॥ ततोब्रुवंस्तेगंधर्वानास्माकंसारथिर्विभो ॥ विद्यतेस्वयमेवाश्वान्स्वयंसंयंतुमर्हसि ॥१२८॥ इ-
त्येवमुक्तेभगवांस्त्यक्त्वास्यंदनमुत्तमं ॥ क्ष्मातलंनिपपातैवपरिभ्रष्टःसुरेश्वरः ॥ १२९ ॥ चलन्मौलिर्मुक्तकचंपरिभ्रष्टा-
युधास्पदं ॥ तंपततंसहस्राक्षंदृष्ट्वाभूःसमकंपत ॥ १३० ॥ पृथिव्यांकंपमानायांसमीपस्थातपस्विनी ॥ भार्याब्रवीत्प्र-
भोगांश्चबहिःकुरुयथासुखं ॥ १३१ ॥ सतुभार्यावचःश्रुत्वाकिमर्थमितिचाब्रवीत् ॥ साचाहश्रूयतांनाथदैवज्ञपरिभाषि-
तं ॥ १३२ ॥ यदेयंकम्पतेभूमिस्तदाप्रक्षिप्यतेबहिः ॥ यद्वाह्यतोमुनिश्रेष्ठतद्भवेद्द्विगुणंमुने ॥ १३३ ॥ एतद्वाक्यंतदा
श्रुत्वाबालमादायपुत्रकम् ॥ निराशंकोबहिःशीघ्रंप्राक्षिपत्क्ष्मातलेद्विजः ॥ १३४ ॥ भूयोगोयुगुलार्थायप्रविष्टोभार्यया
द्विजः ॥ निवारितोयदायासीत्तवहानिर्भविष्यति ॥ १३५ ॥ इत्येवमुक्तेदेवर्षिर्बहिर्निर्गम्यवेगवान् ॥ ददर्शबालद्वित-
यंसमरूपमवस्थितं ॥ १३६ ॥ तंदृष्ट्वादेवतापूज्यंभार्याचाद्भुतदर्शनाम् ॥ प्राहत्वांनविंदामियत्पृच्छामिवदस्वतत्
॥ १३७ ॥ बालस्यास्यद्वितीयस्यकेभविष्यद्गुणाःकिल ॥ गालवेनतुयच्चोक्तंकर्मतत्कथयाधुना ॥ १३८ ॥ साब्रवीन्ना-
द्यवक्ष्येवैवदिष्यामिपुनःप्रभो ॥ सोऽब्रवीद्वदचाद्यैवनोचेन्नाश्नामिभोजनं ॥ १३९ ॥ साप्राहश्रूयतांब्रह्मन्वदि-
ष्येवचनंहितं ॥ कातरेणाद्ययत्पृष्टंभाव्यकाररयंकिल ॥ १४० ॥ इत्युक्तवतिवाक्येचबालएवत्वचेतनः ॥ हरेर्जगामसा-

१ परिभ्रष्टायुधांबरमिति पा० । २ शमीकर्षेत्त इति पा० । ३ बालं इति पा० ।

हाय्यंकर्तुंरथविशारदः ॥ १४१ ॥ तंव्रजंतंहिगंधर्वाविश्वावसुपुरोगमाः ॥ ज्ञात्वेंद्रस्यैवसाहाय्यंतेजसासमवर्धयन्
॥ १४२ ॥ गंधर्वतेजसायुक्तःशिशुःशक्रंसमेत्यहि ॥ प्रोवाचाभ्येहिदेवेशप्रियोयंताभवामिते ॥ १४३ ॥ तच्छ्रुत्वाचहरिः
प्राहकस्यपुत्रोसिबालक ॥ संयंतासिकथंचाश्वान्संशयःप्रतिभातिमे ॥ १४४ ॥ सोऽब्रवीच्छमीकपुत्रंमांक्ष्मौभवंविद्धि
वासव ॥ गंधर्वतेजसायुक्तंवाजियानविशारदं ॥ १४५ ॥ तच्छ्रुत्वाभगवान्शक्रःस्वेबभौयोगिनांवरः ॥ सचापिविप्रत-
नयोमातलिर्नामविश्रुतः ॥ १४६ ॥ ततोधिरूढःसुरथंशक्रस्त्रिदशपुंगवः ॥ रश्मीन्शमीकतनयोमातलिःप्रगृहीतवान्
॥ १४७ ॥ ततोमंदरमागम्यविवेशरिपुवाहिनीं ॥ प्रविश्यददृशेश्रीमान्प्रथितंकार्मुकंमहत् ॥ १४८ ॥ सशरंपंचवर्णं
तत्सितरक्तासितारुणं ॥ पांडुच्छायंसुरश्रेष्ठस्तज्जग्राहसमार्गणं ॥ १४९ ॥ ततस्तुमनसादेवान्रजःसत्त्वतमोमयान् ॥
नमस्कृत्यशरंचापेसाधिज्येविनियोजयत् ॥ १५० ॥ ततोनिश्चेरुरत्युग्रंशराबर्हणवाससः ॥ ब्रह्मेशविष्णुनामांकाः
सूदयंतोसुरान्रणे ॥ १५१ ॥ आकाशंविदिशःपृथ्वींदिशश्चसशरोत्करैः ॥ सहस्राक्षोऽरिपक्षांश्चछादयामासनार-
द ॥ १५२ ॥ गजोविद्धोहयोभिन्नःपृथिव्यांपतितोरथी ॥ महामात्रोधरांप्राप्तोजंभश्चापिशरातुरः ॥ १५३ ॥ पदातिः
पतितोभूमौशक्रमार्गणताडितः ॥ हतप्रधानंभूयिष्ठंबलंतच्चाभवद्रणे ॥ १५४ ॥ तंशक्रबाणाभिहतंदुरासदंसैन्यंसमाल-
क्ष्यतदाकुजंभः ॥ जंभासुरश्चापिसुरेशमव्ययंप्रजग्मतुर्गृह्यगदेसुघोरे ॥ १५५ ॥ तावापतंतौभगवान्निरीक्ष्यसुदर्शने-
नारिविनाशनेन ॥ विष्णुःकुजंभंनिजघानवेगात्सस्यंदनाद्वान्यपतद्धतासुः ॥ १५६ ॥ तस्मिन्हतेभ्रातरिमाधवेनजं-
भस्ततःक्रोधवशंजगाम ॥ क्रोधान्वितःशक्रमुपाद्रवद्रणेसिंहंयथैणोहिविपन्नबुद्धिः ॥ १५७ ॥ तमापतंतंप्रसमीक्ष्यश-

१ दर्पितेजोत्थं इति पा० ।

क्रुस्त्यक्त्वैवचापंसशरंमहात्मा ॥ जग्राहशक्तिंयमदंडकल्पांपश्चात्ततोजंभवधेससर्ज ॥ १५८ ॥ शक्तिंचघंटारवरसस्व-
नांवैदृष्ट्वापतंतींगदयाजघान ॥ गदांचकृत्वासहसैवभस्मसाद्विभेदजंभंहृदयेचतूर्णं ॥ १५९ ॥ शक्त्यासभिन्नोहृदयेसु-
रारिःपपातभूम्यांविगतासुरेव ॥ तंवीक्ष्यभूमौपतितंविसंज्ञंदैत्यास्तुभीताविमुखाबभूवुः ॥ १६० ॥ जंभेहतेदैत्यबलेचभ-
ग्नेगणास्तुहृष्टाहरिमर्चयंतः ॥ वीर्यंप्रशंसंतिशतक्रतोश्चसगोत्रभित्सर्वमुपेत्यतस्थौ ॥ १६१ ॥ इतिश्रीवामनपुराणेभै-
रवप्रादुर्भावेजंभकुजंभवधोनामनवषष्टितमोऽध्यायः ॥ ६९ ॥ ॥ ॥ ॥ ॥ ॥
पुलस्त्यउवाच ॥ तस्मिंस्तदादैत्यबलेचभग्नेशक्रोब्रवीदंधकमासुरेंद्रं ॥ एह्येहिवीराद्यगतामहासुरायोत्स्यामभूयोहरमेत्य
शैलं ॥ १ ॥ तमुवाचांधकोब्रह्मन्सम्यक्चभवतोदितं ॥ रणान्नैवापयास्यामिकुलंव्यपदिशन्स्वयं ॥ २ ॥ पश्यत्वंद्विज-
शार्दूलममवीर्यंसुदुर्धरं ॥ देवदानवगंधर्वान्जेष्येसेंद्रमहेश्वरान् ॥ ३ ॥ इत्येवमुक्त्वावचनंहिरण्याक्षसुतोंधकः ॥ समा-
श्वास्याब्रवीत्क्रुद्धःसारथिंमधुराक्षरं ॥ ४ ॥ सारथेवाहयरथंहराभ्याशंमहाबल ॥ यावन्निहन्मिबाणौघैःप्रमथानथवा-
हिनीं ॥ ५ ॥ इत्यंधकवचःश्रुत्वासारथिस्तुरगांस्तदा ॥ कृष्णवर्णान्महाकायान्प्रेपयामासतंमुने ॥ ६ ॥ तेयत्नतोपि
तुरगाःप्रेर्यमाणाहरंप्रति ॥ जघनेष्ववसीदंतःकृच्छ्रेणोहुश्चतंरथं ॥ ७ ॥ वहंतस्तुरगादैत्यंप्राप्ताःप्रमथवाहिनीं ॥ संवत्सरे-
णसाग्रेणवायुवेगसमाअपि ॥ ८ ॥ ततःकार्मुकमानम्यबालेंदुसदृशंदृढं ॥ नाराचैःसूदयामाससंक्रोपेंद्रमहेश्वरान् ॥ ९ ॥
बाणैश्छादितमोक्ष्यैवबलंत्रैलोक्यरक्षिता ॥ सुरान्प्रोवाचभगवांश्चक्रपाणिर्जनार्दनः ॥ १० ॥ विष्णुरुवाच ॥ किंतिष्ठ-
ध्वंसुरश्रेष्ठाहतेनानेनशोभनं ॥ तस्माद्यत्ताभवत्वंद्यत्वरिताविजयेप्सवः ॥ ११ ॥ शास्यंतामस्यतुरगाःसमंरथकुटुंबिना ॥

१ रोषात्स्वशार्क्तियमदंडकल्पांतामग्निदत्तांरिपवेससर्ज इति पाठः पुस्तकान्तरयोः ।

भज्यतांस्यंदनश्चायंविरथःक्रियतांरिपुः ॥ १२ ॥ विरथंतुकृतंपश्चादेनंधक्ष्यतिशंकरः ॥ नोपेक्ष्यःशत्रुरुद्रिक्तोदेवाचार्ये-
णधीमता ॥ १३ ॥ इत्येवमुक्ताःप्रमथावासुदेवेनसामराः ॥ चक्रुर्वेगंसहेंद्रेणसमंचक्रधरेणच ॥ १४ ॥ तुरगाणांसह-
स्रंतुमेघाभानांजनार्दनः ॥ निमिषांतरमात्रेणगदयासव्यपोथयत् ॥१५॥ समहास्यंदनात्स्कंदःप्रगृह्यरथसारथिं ॥
शक्त्याबिभेदहृदयेगतासुर्व्यसृजद्भुवि ॥ १६ ॥ विनायकाद्याःप्रमथाःसमंशक्रेणदैवतैः ॥ सध्वजाक्षंरथंतूर्णमभंजंततपो-
धनाः ॥ १७ ॥ सहसासमहातेजाविरथस्त्यक्तकार्मुकः ॥ गदामादायबलवानभिदुद्रावदेवताः ॥ १८ ॥ ततःसोऽष्टौ
क्रमान्गत्वामेघगंभीरयागिरा ॥ उवाचवाक्यंदैत्येंद्रोमहादेवंसहेतुमत् ॥ १९ ॥ भिक्षोभवान्सहानीकस्त्वसहायो-
स्मिसांप्रतं ॥ तथापित्वांविजेष्यामिपश्यमेद्यपराक्रमं ॥ २० ॥ तद्वाक्यंशंकरःश्रुत्वासेंद्रान्सुरगणान्गणान् ॥ ब्रह्म-
णासहितान्सर्वान्स्वशरीरेन्यवेशयत् ॥ २१ ॥ शरीरस्थांस्तान्प्रमथान्कृत्वादेवांश्चशंकरः ॥ प्राहएह्येहिदुष्टात्मन्न-
हमेकोऽपिसंस्थितः ॥ २२ ॥ तद्दृष्ट्वामहदाश्चर्यंसर्वामरगणाःक्षयं ॥ दैत्यःशंकरमभ्यागाद्गदामादायवेगवान् ॥ २३ ॥
तमापतंतंभगवान्दृष्ट्वात्यक्त्वावृषोत्तमं ॥ शुलपाणिर्गिरिप्रस्थेपदातिःप्रत्यतिष्ठत ॥ २४ ॥ वेगेनैवापतंतंचबिभेदोरसि
भैरवः ॥ दारुणंसुमहद्युद्धंकृत्वात्रैलोक्यभीषणः ॥ २५ ॥ दंष्ट्राकरालंरविकोटिसंनिभंमृगारिचर्माभिवृतंजटाधरं ॥ भु-
जंगहारंमलपंकधारिणंशार्दूलबाहुंशिखिलोचनंहरं ॥ २६ ॥ एतादृशेनरूपेणभगवान्भूतभावनः ॥ बिभेदशत्रून्शूलेन
शुभदःशाश्वतःशिवः ॥ २७ ॥ सशूलंभैरवंगृह्यभिन्नेप्युरसिदानवः ॥ विजहारातिवेगेनक्रोशमात्रंमहामुने ॥ २८ ॥
ततःकथंचिद्भगवान्संस्तभ्यात्मानमात्मना ॥ तूर्णमुत्पाटयामासशूलेनसगदंरिपुं ॥ २९ ॥ दैत्याधिपस्तुसगदांहरमूर्ध्नि-
न्यपातयत् ॥ कराभ्यांगृह्यशूलंचसमुत्पत्याथदानवः ॥ ३० ॥ संस्थितश्चमहायोगीसत्वाधारःप्रजापतिः ॥ गदापात-

क्षताद्भूरिमूर्ध्नोस्यासृगथापतत् ॥ ३१ ॥ पूर्वधारासमुद्भूतोभैरवोग्निसमप्रभः ॥ विद्याराजेतिविख्यातःपद्ममालावि-
भूषितः ॥ ३२ ॥ [१]अन्यस्माद्रुधिराज्जातोभैरवःशूलभूषितः ॥ रुद्रनामेतिविख्यातःसर्वलोकैस्तुपूजितः ॥ ३३ ॥ अन्य-
रक्तात्समुद्भूतंभैरवाणांचतुष्टयं ॥ चंडाद्येवकपाल्यंतंख्यातंभुवियथाबुधैः ॥ ३४ ॥ भूमिस्थाद्रुधिराज्जातोभैरवःशूलभू-
षितः ॥ ख्यातोललितराजेतिसोभांजनसमप्रभः ॥ ३५ ॥ एवंहिसप्तरूपोऽसौकथ्यतेभैरवोमुने ॥ विघ्नराजोऽष्टमःप्रो-
क्तोभैरवाष्टकमुच्यते ॥ ३६ ॥ एवंमहात्मनादैत्यःशूलप्रोतोमहासुरः ॥ छत्रवद्धारितोब्रह्मन्निंद्रायुधसमप्रभः ॥ ३७ ॥
तदस्त्रमुल्बणंब्रह्मन्शूलभेदादवापतत् ॥ येनाकंठंमहादेवोमग्नःससप्तमूर्तिमान् ॥ ३८ ॥ ततःस्वेदोभवद्भूरिनिश्रमःशं-
करस्यतु ॥ ललाटफलकात्तस्माज्जाताकन्यासृगाप्लुता ॥ ३९ ॥ यद्भूम्यांन्यपतद्विप्रस्वेदबिंदुर्विनाशनात् ॥ तस्मादंगा-
रपुंजालोबालकःसमजायत ॥४०॥ सचापितृषितोत्यर्थंपपौरुधिरमांधकं ॥ कन्याचोत्क्षतसंजाताअसृक्चावलिहद्द्रुता
॥ ४१ ॥ ततस्तामाहदेवेशोबालार्कसदृशप्रभः ॥ शंकरोवरदोलोकेश्रेयोर्थंहिवचोमहत् ॥ ४२ ॥ त्वांपूजयिष्यंतिसुरा
महर्षिपितरस्तथा ॥ यक्षविद्याधराश्चैवमानवाश्चशुभंकरि ॥ ४३ ॥ त्वांस्तोष्यंतिनसंदेहोबलिपुष्पोत्करोत्करैः ॥ च-
र्चिकेतिशुभंनामयस्माद्रुधिरचर्चिता ॥ ४४ ॥ इत्येवमुक्त्वावरदेनचर्चिकाभूयोऽनुयातागिरिविंध्यवासिनी ॥ महींसमं-
ताद्विचचारसुंदरीस्थानंगताहिंगुलकाद्रिमुत्तमं ॥ ४५ ॥ तस्यांगतायांवरदःकुजस्यप्रादाद्वरंसर्ववरोत्तमंयत् ॥ ग्रहाधिप-
त्यंजगतःशुभाशुभंभविष्यतेतेव्यसनंग्रहांतरैः ॥ ४६ ॥ हरोंधकंवर्षसहस्रमात्रंदिव्यंस्वनेत्रार्कहुताशनेन ॥ चकार

१ अन्यस्मादित्यारभ्य यथाबुधैरित्यन्तग्रंथस्य पाठान्तरमेवं पुस्तकान्तरे दृश्यते । 'तथा दक्षिणधारोत्थोभैरवः प्रेतमंडितः ॥ कालराजेति विख्यातः कृष्णांजनसमप्रभः ॥ अन्यः प्रतीचीधारोत्योभैरवः पत्रभूषितः ॥ अतसीकुसुमप्रख्यः कामराजेति विश्रुतः ॥ उदग्धारामवश्चान्योभैरवः श्वेतभूषितः ॥ सोमराजेति विख्यात श्वेतमालावभूषितः ॥'

संशुष्कबलंसशोणितंत्वगस्थिशेषंभगवान्सभैरवः ॥ ४७ ॥ तत्राग्निनाशंभुसमुद्भवेनसमुक्तपापोसुरराड्बभूव ॥ ततः
प्रजानांबहुरूपमीशंनाथंहिसर्वस्यचराचरस्य ॥ ४८ ॥ ज्ञात्वाथसर्वेश्वरमीशमव्ययंत्रैलोक्यनाथंवरदंवरेण्यं ॥ सर्वैः
सुराद्यैर्नतमीड्यमाद्यंततोंधकःस्तोत्रमिदंचकार ॥ ४९ ॥ अंधकउवाच ॥ नमोस्तुतेभैरवभीममूर्तेत्रैलोक्यगोप्त्रेसितशू-
लपाणे[1] ॥ कपालपाणेभुजगेशहारत्रिनेत्रमांपाहिविपन्नबुद्धिं ॥ ५० ॥ जयस्वसर्वेश्वरविश्वमूर्तेसुरासुरैर्वंदितपादपीठ ॥
त्रैलोक्यमातर्गुरवेवृषांकभीतःशरण्यंशरणागतोस्मि ॥ ५१ ॥ त्वांनाथदेवाःशिवमीरयंतिसिद्धाहरंस्थाणुमहर्षयश्च ॥
भीमंचयक्षामनुजामहेश्वरंभूतानिभूताधिपमुच्चरंति ॥ ५२ ॥ निशाचरास्तूग्रमुपाचरंतिभवेतिपुण्याःपितरोनमस्ते ॥
दासोस्मितुभ्यंहरपाहिमह्यंपापक्षयंमेकुरुलोकनाथ ॥ ५३ ॥ भवांस्त्रिदेवस्त्रियुगस्त्रिधर्मात्रिपुष्करश्चासिविभोत्रिनेत्र ॥
त्रय्यारुणिस्त्वंश्रुतिरव्ययात्मापुनीहिमांत्वांशरणंगतोस्मि॥५४॥त्रिणाचिकेतस्त्रिपदप्रतिष्ठःषंडगवित्स्त्रीविषयेष्वलुब्धः॥
त्रैलोक्यनाथोसिपुनीहिशंभोदासोस्मिभीतःशरणागतस्ते ॥ ५५ ॥ कृतोमहाशंकरतेपराधोमयामहाभूतपतेगिरीश ॥
कामारिणा[2]निर्जितमानसेनप्रसादयेत्वांशिरसानतोस्मि ॥ ५६ ॥ पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहि
मांदेवदेवेशसर्वपापहरोभव ॥ ५७ ॥ ममनैवापराधोस्तित्वयावैतादृशोप्यहं ॥ स्पृष्टःपापसमाचारोमांप्रसन्नोभवे-
श्वर ॥ ५८ ॥ त्वंकर्त्ताचैवधाताचजयत्वंचमहाजय ॥ त्वंमंगल्यस्त्वमोंकारस्त्वमीशानोव्ययोध्रुवः ॥ ५९ ॥ त्वंब्रह्मा
सृष्टिकृन्नाथस्त्वंविष्णुस्त्वंमहेश्वरः ॥ त्वमिंद्रस्त्वंवषट्कारोधर्मस्त्वंतुषितोत्तम ॥ ६० ॥ सूक्ष्मस्त्वंव्यक्तरूपस्त्वंत्वमव्यक्त-
श्चधीवरः ॥ त्वयासर्वमिदंव्याप्तंजगत्स्थावरजंगमं ॥ ६१ ॥ त्वमादिरंतोमध्यंचत्वमेवचसहस्रपात् ॥ विजयस्त्वंसह-

१ अत्र चतुर्थ्यन्तानां नमः पदार्थेन्वयः, संबुध्यन्तानां हे शूलपाणे ते नम इत्यन्वयो बोध्यः । २ कामएवारिः कामारिस्तेनेत्यर्थः ।

स्त्राक्षोचित्तपारव्योमहाभुजः ॥ ६२ ॥ अनंतःसर्वगोऽयापीहंसःपुण्याधिकोच्युतः ॥ गीर्वाणपतिरव्यग्रोरुद्रःपशुपतिः
शिवः ॥ ६३ ॥ त्रैविद्यस्त्वंजितक्रोधोजितारातिर्जितेंद्रियः ॥ जयश्चशूलपाणिस्त्वंपाहिमांशरणागतं ॥ ६४ ॥ पुलस्त्य
उवाच ॥ इत्थंमहेश्वरोब्रह्मन्स्तुतोदैत्याधिपेनतु ॥ प्रीतियुक्तःपिंगलाक्षोहैरण्याक्षमुवाचह ॥ ६५ ॥ प्रीतोस्मिदा-
नवपतेपरितुष्टोस्मिचांधक ॥ वरंवरयभद्रंतेयमिच्छसिददामितं ॥ ६६ ॥ अंधकउवाच ॥ अंबिकाजननीमह्यंभवान्
वैत्र्यंबकःपिता ॥ वंदामिचरणौमातुर्माननीयाममाधिकं ॥ ६७ ॥ वरदोहियदीशानस्तद्यातुविपुलंमम ॥ शारीरंमान-
संवापिदुष्कृतंदुर्विचिंतितं ॥ ६८ ॥ तथामेदानवोभावोऽव्यपयातुमहेश्वर ॥ स्थिरातुतवभक्तिश्चवरमेतंप्रयच्छमे ॥६९॥
महादेवउवाच ॥ एवंभवतुदैत्येंद्रपापंतेयातुसंक्षयं ॥ मुक्तोसिदैत्यभावाच्चभृंगीगणपतिर्भव ॥ ७० ॥ इत्येवमुक्त्वावर-
दोमुदाग्रादवतार्यतं ॥ निर्माजर्यित्वाहस्तेनकृत्वानिर्व्रणमंधकं ॥ ७१ ॥ ततश्चदेवतादेहाद्ब्रह्मादीनांजुहावसः ॥ तेनिश्चे-
रुर्महात्मानोनमस्यंतस्त्रिलोचनं ॥ ७२ ॥ गणान्सनंदीनाहूयसंनिवेश्यतथाग्रतः ॥ भृंगिणंदर्शयामासब्रुवन्नेषोंधकेति
हि ॥ ७३ ॥ तंदृष्ट्वादानवपतिंसंशुष्कपिशितंरिपुं ॥ गणाधिपत्यमापन्नंप्रशशंसुर्वृषध्वजं ॥ ७४ ॥ ततस्तान्प्राहभ-
गवान्संपरिष्वज्यदेवताः ॥ गच्छध्वंस्वानिधिष्ण्यानिभुंक्षध्वंत्रिविधंसुखं ॥ ७५ ॥ सहस्राक्षोपिसंयातुपर्वतंमलयंशु-
भं ॥ तत्रस्वकार्यंकृत्वैवपश्चाद्यातुत्रिविष्टपं ॥ ७६ ॥ इत्येवमुक्त्वात्रिदशान्समाभाष्यव्यसर्जयत् ॥ पितामहंनम-
स्कृत्यपरिष्वज्यजनार्दनं ॥ ७७ ॥ महेंद्रोमलयंगत्वाकृत्वाकार्यंदिवंगतः ॥ गतेषुशक्रप्राग्र्येषुभगवान्संस्थितःशिवः
॥ ७८ ॥ विसर्जयामासगणान्तनुमध्येयथाहरः ॥ गणाश्चशंकरंदृष्ट्वास्वंस्वंवाहनमास्थिताः ॥ ७९ ॥ जग्मुस्तेशुभ-
लोकांश्चस्वस्वस्थानेषुनारद ॥ यत्रकामदुघागावःसर्वकामफलद्रुमाः ॥ ८० ॥ नद्यस्त्वमृतवाहिन्योन्हदाःपायसकर्द-

मा: ॥ स्वांस्वांगतिंप्रयातेषुप्रमथेषुमहेश्वरः ॥ ८१ ॥ समादायांधकंहस्तेनंदीशैलंसमागतं ॥ द्वाभ्यांवर्षसहस्राभ्यां पुनरायाद्धराग्रहं ॥ ८२ ॥ ददर्शेचगिरेःपुत्रींश्वेतार्ककुसुमस्थितां ॥ समायातंनिरीक्ष्यैवसर्वलक्षणसंयुतं ॥ ८३ ॥ त्यक्त्वार्ककुसुमंतूर्णंसखीस्ताःसमुपाह्वयत् ॥ समाहूताश्चदेव्याभाजयाद्यास्तूर्णमागमन् ॥८४॥ याभिःपरिवृतातस्थौहरदर्शनलालसा ॥ ततस्त्रिनेत्रोगिरिजांदृष्ट्वाहांधकदानवं ॥ ८५ ॥ नंदिनंचतथाहर्षादालिंगच्चगिरेःसुतां ॥ अथोवाचैषदासस्तेकृतोदेविमयांधकः ॥ ८६ ॥ पश्यस्वप्रतियातंहिस्वसुतंचारुहासिनि ॥ इत्युच्चार्याहांधकंवैपुत्रएह्येहिसत्वरं ॥ ८७ ॥ व्रजस्वशरणंमातुरेषाश्रेयस्करीतव ॥ इत्युक्तोविभुनानंदीअंधकश्चगणेश्वरः ॥ ८८ ॥ समागम्यांबिकापादौववंदतुरुभावपि ॥ अंधकोपितदागौरींभक्तिनम्रोमहामुने ॥ ८९ ॥ स्तुतिंचक्रेमहापुण्यांपापघ्नींश्रुतिसंमतां ॥ अंधकउवाच ॥ ॐनमस्तेऽस्तुभवानीं भूतभव्यप्रियां लोकधात्रीं जनयित्रीं स्कंदमातरं महादेवप्रियां स्यंदिनीं चेतनां त्रैलोक्यमातरं धरित्रीं देवतां मातरं श्रुतिं स्मृतिं दयां लज्जां कामसूं प्रतिं सदापावनीं दैत्यसैन्यक्षयंकरीं महामायां सुमायां वैजयंतीं शुभां कालरात्रीं गोविंदजननीं शैलराजपुत्रीं सर्वदेवार्चितां सर्वभूतार्चितां विद्यां सरस्वतीं त्रिनयनमहिषीं नमस्यामि मृडानीं शरण्यां शरणमुपयातोहंनमोनमस्ते ॥१॥ इत्थंस्तुतासांधकेनपरितुष्टाविभावरी ॥ प्राहपुत्रप्रसन्नास्मिवृणुष्वत्वरमुत्तमम् ॥९०॥ भृंगिरुवाच ॥ पापंप्रशममायातुत्रिविधंममपार्वति ॥ तथेश्वरेचसततंभक्तिरस्तुममांबिके ॥ ९१ ॥ पुलस्त्यउवाच ॥ बाढमित्यब्रवीद्गौरीहिरण्याक्षसुतंततः ॥ ममाग्रेपूजयन्शर्वंगणानामधिपोभव ॥ ९२ ॥ वपुर्दधानस्यतथाचतस्यमहेश्वरेणाप्यविरूपदृष्ट्या ॥ कृत्वैवमुच्चैर्भयदंतुभैरवंभृंगित्वमीशेनकृतास्वशक्त्या ॥ ९३ ॥ एतत्तवोक्तंहरकीर्तिवर्धनंपुण्यंपवित्रंशुभदंमहर्षे ॥ संकीर्तनीयंद्विजसत्तमेषुधर्मायुरारोग्यधनैषिणासदा ॥ ९४ ॥ इतिश्री-

वामनपुराणेभैरवप्रादुर्भावेअंधकवरप्रदानंनामसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ॥ ॥

नारदउवाच ॥ मलयेपिमहेंद्रेणयत्कृतंद्विजसत्तम ॥ निष्पादितंस्वकंकार्यंतन्मेत्वंख्यातुमर्हसि ॥ १ ॥ पुलस्त्यउवाच ॥ श्रूयतांयन्महेंद्रेणमलयेपर्वतेमुने ॥ कृतंलोकहितंकार्यमात्मनश्चतथाहितं ॥ २ ॥ अथासुरस्यवचनान्मयतारपुरोगमाः ॥ तेनिर्जिताःसुरगणैःपातालगमनोत्सुकाः ॥ ३ ॥ ददृशुर्मलयंविप्रसिद्धैःसेवितकंदरं ॥ लताविमानसंछन्नंमत्तसत्वसमाकुलं ॥ ४ ॥ चंदनैरुरगाक्रांतैःसुशीतैरतिसेवितं ॥ माधवीकुसुमामोदसुगंधितमहागिरिं ॥ ५ ॥ तंदृष्ट्वा शीतलच्छायंश्रांताव्यायामकर्शिताः ॥ मयतारपुरोगास्तेनिवासंसमरोचयन् ॥ ६ ॥ तेषुतत्रनिविष्टेषुघ्राणतृप्तिप्रदोनिलः ॥ ववौतिशीतःशनकैर्दक्षिणोगंधसंयुतः ॥ ७ ॥ तत्रैवचरतिंचक्रुःसर्वएवमहासुराः ॥ कुर्वंतोलोकपूज्यानां विद्वेषंसर्ववासवां ॥ ८ ॥ तान्ज्ञात्वाशंकरःशक्रंमलयेप्रेषितवानथ ॥ सचापिददृशेगच्छन्पथिगोमातरंहरिः ॥ ९ ॥ तस्याःप्रदक्षिणांकृत्वादृष्ट्वाशैलंचसुप्रभं ॥ ददृशेदानवान्सर्वान्संहृष्टान्भोगसंयुतान् ॥ १० ॥ अथाजुहावबलहासर्वानेवमहासुरान् ॥ तेचाप्यायुयुरव्यग्राःकिरंतश्चशरोत्करान् ॥ ११ ॥ तानागतान्बाणजालैरथस्थोद्भुतदर्शनः ॥ छादयामासविप्रर्षेगिरिंदृष्ट्वायथाघनः ॥ १२ ॥ ततोबाणैरवच्छाद्यमयादीन्दानवान्हरिः ॥ पाकंजघानतीक्ष्णाग्रैर्मार्गणैः कंकवाससैः ॥ १३ ॥ तत्रनामविभुर्लेभेशासनाच्चशरैर्दृढं ॥ पाकशासनइत्येवंसर्वामरपतिर्विभुः ॥ १४ ॥ तथान्यंपुरनामानंबाणासुरशतंशरैः ॥ सुपुंखैर्दारयामासततोभूत्सपुरंदरः ॥ १५ ॥ हत्वेत्थंसमरेजैपीद्गोत्रभिद्दानवंबलं ॥ तच्चापिविजितंब्रह्मन्रसातलमुपागमत् ॥ १६ ॥ एतदर्थंसहस्राक्षःप्रेषितोमलयाचलं ॥ त्र्यंबकेनमुनिश्रेष्ठकिमन्यच्छ्रोतुमिच्छसि ॥ १७ ॥ नारदउवाच ॥ किमर्थंदैवतपतिर्गोत्रभित्कथ्यतेहरिः ॥ अयंमेसंशयोब्रह्मन्हृदिसंपरिवर्तते ॥ १८ ॥

पुलस्त्यउवाच ॥ श्रूयतांगोत्रभिच्छक्रःकीर्तितोहियथामया ॥ हतेहिरण्यकशिपौयच्चकारारिमर्दनः ॥ १९ ॥
दितिर्विनष्टपुत्रातुकश्यपंप्राहनारद ॥ विभोनाथोसिमेदेहिशक्रहंतारमात्मजं ॥ २० ॥ कश्यपस्तामुवाचाथयदित्वम-
सितेक्षणे ॥ शौचाचारसमायुक्तास्थास्यसेदशतीर्दश ॥ २१ ॥ संवत्सराणांदिव्यानांततस्त्रैलोक्यनायकम् ॥ जनयि-
ष्यसितंपुत्रंशत्रुघ्नंनान्यथाप्रिये ॥ २२ ॥ इत्येवमुक्तासाभर्त्रादितिर्नियममास्थिता ॥ गर्भाधानमृषिःकृत्वाजगामोदय-
पर्वतं ॥ २३ ॥ गतेतस्मिन्सुरश्रेष्ठःसहस्राक्षोऽपिसत्वरं ॥ तमाश्रममुपागम्यदितिंवचनमब्रवीत् ॥ २४ ॥ करिष्या-
म्यनुशुश्रूषांभवत्यायदिमन्यसे ॥ बाढमित्यब्रवीत्सापिभाविकर्मप्रचोदिता ॥ २५ ॥ समिदाहरणादीनितस्याश्चक्रेपुरं-
दरः ॥ विनीतात्माचकार्यार्थीछिद्रान्वेषीभुजंगवत् ॥ २६ ॥ एकदासातपोयुक्ताशोकेमहतिसंस्थिता ॥ दशवर्षशतांते
तुशिरःस्नातातपस्विनी ॥ २७ ॥ जानुभ्यामुपरिस्थाप्यमुक्तकेशीनिजंशिरः ॥ सुष्वापकेशप्रांतेषुसंश्लिष्टचरणाभवत्
॥ २८ ॥ तमंतरमसौज्ञात्वादेवश्चापिसहस्रदृक् ॥ विवेशमातुरुदरेनासारंध्रेणनारद ॥ २९ ॥ प्रविश्यजठरेवृद्धोदैत्य-
मातुःपुरंदरः ॥ ददर्शोर्ध्वमुखंबालंकटिन्यस्तकरंमहत् ॥ ३० ॥ तथैवास्येथददृशेमांसपेशींचवासवः ॥ शुद्धस्फटिकसं-
काशांकराभ्यांजगृहेसतां ॥ ३१ ॥ ततःकोपसमाध्मातोमांसपेशींशतक्रतुः ॥ कराभ्यांमर्दयामासततःसाकठिनाभवत्
॥ ३२ ॥ ऊर्ध्वेनार्धंचववृधेत्वधोर्धंववृधेतथा ॥ शतपर्वासकुलिशःसंजातोमांसपेशितः ॥ ३३ ॥ तेनाभिगर्भंदितिजंवज्रेण
शतपर्वणा ॥ चिच्छेदसप्तधाब्रह्मन्सचारुदत्सविस्तरं ॥ ३४ ॥ ततोप्यबुध्यतदितिरज्ञासीच्छक्रचेष्टितं ॥ शुश्राववा-
चंपुत्रस्यरुदतोबालकस्यहि ॥ ३५ ॥ शक्रोपिप्राहमामूढरोदीस्त्वंचातिघर्घरं ॥ इत्येवमुक्त्वाचैकैकंभूयश्चिच्छेदसप्त-
धा ॥ ३६ ॥ तेजातामरुतोनामदेवाभृत्याःशतक्रतोः ॥ नानासुखोपचारेणचलंतेतेपुरस्कृताः ॥ ३७ ॥ ततःसकुलिशः

शक्रोनिर्गम्यजठरात्ततः ॥ दितिंकृतांजलिपुटः प्राहभीतस्तुशापतः ॥ ३८ ॥ ममनैवापराधोयमयमासीदरिर्मम ॥ अ-
तोहतोमयादेवितन्मेनक्रोद्धुमर्हसि ॥ ३९ ॥ दितिरुवाच ॥ नतवात्रापराधोस्तिमन्येदिष्टमिदंपुरा ॥ संपूर्णेत्वपिकाले
वैयोसौवधमुपागतः ॥ ४० ॥ पुलस्त्यउवाच ॥ इत्येवमुक्त्वातान्बालान्परिसांत्व्यादितिंत्वरन् ॥ देवराजःसहैनां-
स्तुप्रेषयामासभामिनी ॥ ४१ ॥ एवंपुरास्वा नपिसोदरान्सगर्भस्थितान्पातितवान्भयार्तः ॥ बिभेदवज्रेणततःसगो-
त्रभित्ख्यातोमहर्षेभगवान्महेंद्रः ॥४२॥ इति श्रीवामनपुराणेशक्रचरितेमरुदुत्पत्तिर्नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥
नारदउवाच ॥ येह्यमीभवताप्रोक्तामरुतोदिति जोत्तमाः ॥ तेकेचपूर्वमासन्वैमरुन्मार्गेषुकथ्यतां ॥ १ ॥ पूर्वमन्वंतरेचैवस-
मतीतेषुसत्तम ॥ केत्वासन्वायुमार्गस्थास्तन्मे व्याख्यातुमर्हसि ॥ २ ॥ पुलस्त्यउवाच ॥ श्रूयतांपूर्वमरुतामुत्पत्तिंक-
थयामिते ॥ स्वायंभुवंसमारभ्ययावन्मन्वन्तरंत्वि दं ॥ ३ ॥ स्वायंभुवस्यपुत्रोभून्मनुर्नामप्रियव्रतः ॥ तस्यासीत्सवनोनाम
पुत्रस्त्रैलोक्यविश्रुतः ॥ ४ ॥ सचानपत्योदेवर्षे नृपःप्रेतगतिंगतः ॥ ततोऽरुदत्तस्यपत्नीसुवेदाशोकविह्वला ॥ ५ ॥
नददातितथादग्धुंसमालिंग्यस्थितापतिं ॥ नाथना तिबहुशोविलपंतीत्वनाथवत् ॥ ६ ॥ तामंतरीक्षादशरीरिणीवाक्
प्रोवाचमाराजपत्नीहरोत्सीः ॥ यदस्तितेसत्यमनुत्तमं तत्तदाव्रजत्वंपतिनासहाग्निं ॥ ७ ॥ सातांवाणीमंतरिक्षान्निशम्य
प्राहक्रांताराजपत्नीसुवेदा ॥ शोचाम्येनंपार्थिवंपुत्रहीनं नैवात्मानंमंदभाग्यंविहंग ॥ ८ ॥ सोथाब्रवीन्मारुदस्वेतिबालेपु-
त्रास्तेवैभूमिपालस्यसप्त ॥ भविष्यंतिवह्निमारोहशीघ्रं सत्यंप्रोक्तंश्रद्दधस्वलमद्य ॥ ९ ॥ इत्येवमुक्ताखचरेणबालाचितां
समारोप्यपतिंवराहं ॥ हुताशमासाद्यपतिव्रतासासंचिंतयंतीज्वलनंप्रपन्ना ॥ १० ॥ ततोमुहूर्तान्नृपतिःश्रियायुतःसमु-
त्थितोऽसौसहितस्तुभार्यया ॥ खमुत्पपाताथसकामचारी समंमहिष्याचसुनाभपुत्र्या ॥ ११ ॥ तस्यापरेपार्थिवपुंगवस्य

जातंरजस्तांमहिषींतुगच्छतः ॥ पुत्रास्तुश्रेष्ठाबलवीर्ययुक्ताःख्यातामहांतोभुविभूमिपालाः ॥ १२ ॥ सदिव्ययोगात्प्र-
तिसंस्थितोंबरेभार्यासहायोदिवसांश्चपंच ॥ ततस्तुषष्ठेऽहनिपार्थिवेनऋतुर्नवंध्योह्यभवेद्विचिंत्य ॥ रराभतन्व्यासहकाम-
चारीततोंबरात्प्राच्यवतास्यशुक्रम् ॥ १३ ॥ शुक्रोत्सर्गावसानेतुनृपतिर्भार्ययासह ॥ जगामदिव्ययागत्याब्रह्मलोकं
तपोधन ॥ १४ ॥ पुत्रास्तस्यावसन्शूराःकृतास्त्राःसत्यवादिनः ॥ तदंबरात्प्रचलितमभ्रवर्णंशुक्रंसमादान्नलिनीवपु-
ष्यती ॥ चित्राविशालाहरितालिनीलाःपत्न्योमुनीनांददृशुर्यथेच्छया ॥ १५ ॥ तद्दृष्ट्वापुष्करेन्यस्तंप्रत्यूचुर्नतपोधना-
न् ॥ मन्यमानास्तदमृतंसदायौवनलिप्सया ॥१६॥ ततःस्नात्वातुविधिवत्संपूज्यचनिजान्पतीन् ॥ पतिभिःसमनुज्ञा-
ताःपपुःपुष्करसंज्ञितं ॥ १७ ॥ तच्छुक्रंपार्थिवेंद्रस्यमन्यमानास्तदामृतं ॥ पीतमात्रेणशुक्रेणपार्थिवेंद्रोद्भवेनताः ॥ १८ ॥
ब्रह्मतेजोविहीनास्ताजाताःपत्न्यस्तपस्विनां ॥ ततस्तुतत्यजुःसर्वेसदोषास्तेस्वपत्नयः ॥ १९ ॥ सुषुवुःसप्ततनयान्रु-
दतोभैरवंमुने ॥ तेषांरुदितशब्देनसर्वमापूरितंजगत् ॥ २० ॥ अथाजगामभगवान्ब्रह्मालोकपितामहः ॥ समभ्येत्या-
ब्रवीद्बालान्मारुदध्वंमहाबलाः ॥ २१ ॥ मरुतोनामभवतांभविष्यतिवयःस्थिरं ॥ इत्येवमुक्त्वादेवेशोब्रह्मालोकपितामहः
॥ २२ ॥ तानादायवियच्चारीमारुतानादिदेशह ॥ तेत्वासन्मरुतस्त्वाद्यःमनोःस्वायंभुवेंतरे ॥ २३ ॥ स्वारोचिषेतुमरुतो
वक्ष्यामिशृणुनारद ॥ स्वारोचिषस्यपुत्रस्तुश्रीमान्नाम्नाऋतध्वजः ॥ २४ ॥ तस्यपुत्राबभूवुश्चसप्तादित्यपराक्रमाः ॥
तपोर्थंतेगताःशैलंमहामेरुंनरेश्वराः ॥ २५ ॥ आराधयंतोब्रह्माणंपदमैंद्रंयथेप्सवः ॥ ततोविपश्चिन्नामाथसहस्राक्षोभ-
यातुरः ॥ २६ ॥ पूतनांसोप्सरोमुख्यांप्राहनारदवाक्यवित् ॥ गच्छस्वपूतनेशैलंमहामेरुंविलासिनि ॥ २७ ॥ तत्रत-
प्यंतोहितप ऋतध्वजसुतामहत् ॥ यथाहितपसोविघ्नंतेषांभवतिसुंदरि ॥ २८ ॥ तथाकुरुष्वमातेषांसिद्धिर्भवतुसुंदरि ॥

इत्येवमुक्ताशक्रेणपूतनारूपशालिनी ॥ २९ ॥ तत्राजगामत्वरितायत्रतैस्तप्यतेतपः ॥ आश्रमस्याविदूरेतुनदीमंदोद-
वाहिनी ॥ ३० ॥ तस्यांस्नातुंसमायाताःसर्वएवसहोदराः ॥ सातुस्नातुंसुचार्वंगीत्ववतीर्णामहानदीं ॥ ३१ ॥ ददृशु-
स्तेनृपाःस्नातांततश्चक्षुभिरेमुने ॥ ततोह्यभ्यद्रवच्छुक्रंतत्पपौजलचारिणी ॥ ३२ ॥ शंखिनीग्राहमुख्यस्यमहाशंखस्य
वल्लभा ॥ तेऽतिविभ्रष्टतपसोजग्मूराज्यंचपैतृकं ॥ ३३ ॥ साचाप्सराःशक्रमेत्ययथातथ्यंन्यवेदयत् ॥ ततोबहुतिथेकाले
साग्राहीशंखरूपिणी ॥ ३४ ॥ समुद्धृतामहाजालैर्मत्स्यबंधेनजालिना ॥ सतांदृष्ट्वामहाशंखींस्थलस्थांमत्स्यजीवनः ॥
॥ ३५ ॥ निवेदयामासतदाऋतध्वजसुतेषुवै ॥ तथाभ्येत्यमहात्मानोयोगिनांयोगधारिणः ॥ ३६ ॥ नीत्वासुमंदिरंस-
र्वेपुरवाप्यांसमुत्सृजन् ॥ ततःक्रमाच्छंखिनीसासुषुवेसप्तवैशिशून् ॥ ३७ ॥ जातमात्रेषुपुत्रेषुमोक्षमार्गमगाच्चसा ॥
अमातृपितृकाबालाजलमध्येविचारिणः ॥ ३८ ॥ स्तन्यार्थिनोवैरुरुदुस्तथाभ्यागात्पितामहः ॥ मारुदध्वमितीत्याह
स्वस्थास्तिष्ठतपुत्रकाः ॥ ३९ ॥ यूयंदेवाभविष्यध्वंवायुस्कंधविचारिणः ॥ इत्येवमुक्त्वाऽप्यादायसर्वांस्तान्दैवतंप्रति
॥ ४० ॥ नियुज्यचमरुन्मार्गेविराजोभवनंगतः ॥ एवमाश्वास्यमरुतोमनोःस्वारोचिषेंतरे ॥ ४१ ॥ उत्तमेमरुतोयेचता-
न्शृणुष्वतपोधन ॥ उत्तमस्यान्वयेयस्तुराजासीन्निषधाधिपः ॥ ४२ ॥ वपुष्मानितिविख्यातोवपुषाभास्करोपमः ॥
तस्यपुत्रोगुणश्रेष्ठोज्योतिष्मान्धार्मिकोऽभवत् ॥ ४३ ॥ सपुत्रार्थीतपस्तेपेनदींमंदाकिनीमनु ॥ तस्यभार्याचसु-
श्रोणीदेवाचार्यसुतातथा ॥ ४४ ॥ तपश्चरणयुक्तस्यबभूवपरिचारिका ॥ सानयत्फलपुष्पंचसमित्कुशज-
लादितत् ॥ ४५ ॥ चकारपद्मपत्राक्षीसम्यक्चातिथिपूजनम् ॥ पतिंशुश्रूषमाणासाकृशाधमनिसंतता ॥ ४६ ॥
तेजोयुक्तासुचार्वंगीदृष्टासप्तर्षिभिर्वने ॥ तांतथाचारुसर्वांगींदृष्ट्वाथतपसाकृशां ॥ ४७ ॥ पप्रच्छुस्तपसोहेतुंतस्यास्तद्भ-

तुरेवच ॥ साब्रवीत्तनयार्थायआवाभ्यांतपसःक्रिया ॥ ४८ ॥ तेचास्यैवरदाब्रह्मन्नूजाताःसप्तमहर्षयः ॥ व्रजध्वंतनयाः
सप्तभविष्यंतिनसंशयः ॥ ४९ ॥ युवयोर्गुणसंयुक्तामहर्षीणांप्रसादतः ॥ इत्येवमुक्त्वाजग्मुस्तेसर्वएवमहर्षयः ॥ ५० ॥
सचापिराजर्षिरगात्सभार्योनगरंनिजं ॥ ततोबहुतिथेकालेसाराज्ञोमहिषीप्रिया ॥ ५१ ॥ अवापगर्भंतन्वंगीतस्मान्नृप-
तिसत्तमात् ॥ गुर्विण्यामथभार्यायांसममारनराधिपः ॥ ५२ ॥ साचाप्यारोढुमिच्छंतीभर्तारंवैपतिव्रता ॥ निवारितात-
दामात्यैर्नतथापिप्रतिष्ठति ॥ ५३ ॥ समारोप्याथभर्तारंचितायामारुहच्चसा ॥ ततोग्निमध्यात्सलिलेमासमेवापत-
न्मुने ॥ ५४ ॥ तदंभसासुशीतेनसंसिक्तंसप्तधाभवत् ॥ तेजायंताथमरुतऔत्तमस्यांतरेमनोः ॥ ५५ ॥ तामसस्यांतरे
येचमरुतोऽथाभवन्पुरा ॥ तानहंकीर्तयिष्यामिगीतवाद्यकलिप्रिय ॥ ५६ ॥ तामसस्यमनोःपुत्रोदंतध्वजइतिश्रुतः ॥
सपुत्रार्थीजुहावाग्नौस्वमांसंरुधिरंतथा ॥५७॥ अस्थीनिरोमकेशांश्चस्नायुमज्जायकृद्धनं ॥ शुक्रंचचित्रकोराजासुतार्थी
इतिनःश्रुतं ॥ ५८ ॥ सप्तस्वेवार्चिषुततःशुक्रपातादनंतरं ॥ माप्रक्षिपस्वेत्यभवच्छब्दःसोऽपिमृतोनृपः ॥ ५९ ॥
ततस्तस्माद्धुतवहात्सप्तधातेजसायुताः ॥ शिशवःसमजायंततेऽरुदन्भैरवंमुने ॥ ६० ॥ तेषांतुध्वनिमाकर्ण्यभगवान्
पद्मसंभवः ॥ समागम्यविचार्याथसंचक्रेमरुतःसुरान् ॥ ६१ ॥ तेत्वासन्मरुतोब्रह्मंस्तामसेदेवतागणाः ॥ येऽभवन्
रैवतेतांश्चशृणुष्वत्वंतपोधन ॥ ६२ ॥ रैवतस्यान्ववायेतुजासीद्रिपुजिद्धनी ॥ रिपुजिन्नामतःख्यातोनतस्यासीत्सुतः
किल ॥ ६३ ॥ ससमाराध्यतपसाभास्करंतेजसांनिधिं ॥ अवापकन्यांसुरतिंतांप्रगृह्यगृहंययौ ॥ ६४ ॥ तस्यांपितृ-
गृहेब्रह्मन्वसंत्यांसपितामृतः ॥ सापिदुःखपरीतांगीस्वांतनुंत्यक्तुमुद्यता ॥ ६५ ॥ ततस्तांवारयामासुर्ऋषयःसप्तनारद ॥
तस्यामासक्तचित्तास्तुसर्वएवतपोधनाः ॥ ६६ ॥ अपारयंतीतद्दुःखंप्रज्वाल्याग्निंविवेशह ॥ तेचापश्यंतऋषयस्तच्चित्ता

भाविवतास्तथा ॥ ६७ ॥ तांमृतान्मृपयोद्दष्ट्वाकष्टंकष्टेतिवादिनः ॥ प्रजग्मुर्ज्वलनाञ्चाथसप्ताजायंतदारकाः ॥ ६८ ॥
तेचमात्राविनाभूतारुरुदुस्तान्पितामहः ॥ निवारयित्वाकृतवान्लोकनाथोमरुद्गणान् ॥ ६९ ॥ रैवतस्यांतरेजातामरु-
तोऽमीतपोधन ॥ शृणुष्वकीर्तयिष्यामिचाक्षुषस्यांतरेमनोः ॥ ७० ॥ आसीन्मंकिरिरितिख्यातस्तपस्वीसत्यवाक्शुचिः ॥
सप्तसारस्वतेतीर्थेसोऽतप्यतमहत्तपः ॥ ७१ ॥ विघ्नार्थंतस्यतुषितादेवाःसंप्रेषयन्मुने ॥ साचाभ्येत्यनदीतीरेक्षोभयामा-
सभामिनी ॥ ७२ ॥ ततोऽस्यप्राच्यवच्छुक्रंसप्तसारस्वतेजले ॥ तांचैवाप्यशपन्मूढांमुनिर्मंकणकोरिपुं ॥ ७३ ॥ गच्छ-
स्ववेत्सिमूढत्वंपापस्यास्यमहत्फलं ॥ विध्वंसस्तेहिभवितासंप्राप्तेयज्ञकर्मणि ॥ ७४ ॥ एवंशप्त्वाऋषिःश्रीमान्जगामा-
थस्वमाश्रमं ॥ सरस्वतीभ्यःसप्तभ्यःसप्तवैमरुतोऽभवन् ॥ ७५ ॥ एतत्तवोक्तामरुतोहिपूर्वेजाताजगद्व्याप्तिकरामहर्षे ॥
येषांश्रुतेजन्मनिपातहानिर्भवेच्चधर्माभ्युदयोमहांश्च ॥ ७६ ॥ इतिश्रीवामनपुराणेमरुदुत्पत्तिर्नामद्विसप्ततितमो-
ऽध्यायः ॥ ७२ ॥ ॥ ॥ ॥ ॥ ॥ ॥
पुलस्त्यउवाच ॥ एतदर्थंबलिर्दैत्यःकृतोराजाकलिप्रियः ॥ मंत्रप्रदाताप्रह्लादःशुक्रश्चासीत्पुरोहितः ॥ १ ॥ ज्ञात्वाभि-
षिक्तंदैतेयंविरोचनसुतंबलिम् ॥ दिदृक्षवःसमायाताअमराःसर्वएवहि ॥ २ ॥ तानागतान्निरीक्ष्यैवपूजयित्वायथाक्रमं ॥
पप्रच्छकुलजान्सर्वान्किंनुश्रेयस्करंमम ॥३॥ ततस्तेप्रोचुरेवैनंशृणुष्वासुरसुंदर ॥ यत्तेश्रेयस्करंकर्मयदस्माकंहितंतथा
॥ ४ ॥ पितामहस्तथैवासीद्बलीदानवपालकः ॥ हिरण्यकशिपुर्वीरःसशक्रोऽभूज्जगत्त्रये ॥ ५ ॥ तमागत्यसुरश्रेष्ठोवि-
ष्णुःसिंहवपुर्धरः ॥ प्रत्यक्षंदानवेंद्राणांनखैर्विशकलीकृतः ॥ ६ ॥ अवकृष्टश्चराज्यात्सत्र्यंबकेनमहात्मना ॥ अस्मदर्थे

१ पातः पातकं तस्य नाशं इत्यर्थः ।

महाबाहोशंकरेणत्रिशूलिना ॥ ७ ॥ तथातवपितान्योपिजंभःशक्रेणघातितः ॥ कुजंभोविष्णुनाचापिप्रत्यक्षंपशुवद्धतः ॥ ॥ ८ ॥ शंखःपाकोमहेंद्रेणभ्रातातवसुदर्शनः ॥ विरोचनस्तवपितानिहतःकथयामिते ॥ ९ ॥ श्रुत्वागोत्रक्षयंब्रह्मन्कृतंशक्रेणदानवः ॥ उद्योगंकारयामाससहसर्वैर्महासुरैः ॥ १० ॥ रथैरन्येगजैरन्येवाजिभिश्चापरेसुराः ॥ पदातयस्तथाप्यन्येजग्मुर्युद्धायदेवताः ॥ ११ ॥ ममाग्रेयातिबलवान्सेनानाथोभयंकरः ॥ सैन्यस्यमध्येबलिनःकालनेमिश्चपृष्ठतः ॥ १२ ॥ वामपार्श्वमवष्टभ्यशाल्वःप्रथितविक्रमः ॥ प्रयातिदक्षिणंघोरंतारकाख्योभयंकरः ॥ १३ ॥ दानवानांसहस्राणिप्रयुतान्यर्बुदानिच ॥ संप्रयातानियुद्धायदेवैःसहकलिप्रियः ॥ १४ ॥ श्रुत्वासुराणामुद्योगंशक्रःसुरपतिःसुरान् ॥ उवाचयोगंदैत्यानांयोद्धुंस्वबलसंयुताः ॥ १५ ॥ इत्येवमुक्त्वावचनंसुरराट्स्यंदनंबली ॥ समारुरोहभगवान्यतमातलिवाजिनं ॥ १६ ॥ समारूढेसहस्राक्षेस्यंदनंदेवतागताः ॥ स्वंस्वंवाहनमारुह्यनिश्चेरुर्युद्धकांक्षिणः ॥ १७ ॥ आदित्यावसवोरुद्राःसाध्याविश्वेऽश्विनौतथा ॥ विद्याधरागुह्यकाश्चयक्षराक्षसपन्नगाः ॥ १८ ॥ राजर्षयस्तथासिद्धानानाभूताश्चसंघशः ॥ गजानन्येरथानन्येहयानन्येसमारुहन् ॥ १९ ॥ विमानानिचशुभ्राणिपक्षिवाह्यानिनारद ॥ समारुह्याद्रवन्सर्वेयतोदैत्यबलंस्थितं ॥ २० ॥ एतस्मिन्नंतरेधीमान्वैनतेयःसमागतः ॥ तस्मिन्विष्णुःसुरश्रेष्ठस्त्वधिरूढः समभ्यगात् ॥ २१ ॥ तमागतंसहस्राक्षस्त्रैलोक्यपतिमव्ययं ॥ ववंदमूर्ध्नावनतःसहसर्वैःसुरोत्तमैः ॥ २२ ॥ ततोऽग्रेदेवसैन्यस्यकार्तिकेयोगदाधरः ॥ पालयन्जघनंविष्णुर्यातिमध्यंसहस्रदृक् ॥ २३ ॥ वामंपार्श्वमवष्टभ्यजयंतोवर्ततेमुने ॥ दक्षिणंवरुणःपार्श्वमवष्टभ्यागमद्बली ॥ २४ ॥ ततोऽमराणांपृतनायशस्विनीस्कंदेंद्रविष्णूरुपसूर्यपालिता ॥ नानास्त्रशस्त्रोद्यतदोःसमूहासमाससादारिबलंमहौघे ॥ २५ ॥ उदयाद्रितटेरम्येशुभेसमशिलातले ॥ निर्वृक्षेपक्षिरहितेजातो

देवासुरोरणः ॥ २६ ॥ सन्निधानात्तयोरौद्रःसेनयोरभवन्मुने ॥ महीध्रेशांतरजसितद्दानवबलंमहत् ॥ २७ ॥ अभ्यद्र-
वंतसहसासमंस्कंदेनदेवताः ॥ निजघ्नुर्दानवान्देवाःकुमारभुजपालिताः ॥२८॥ देवान्निजघ्नुर्दितिजामयगुप्ताःप्रहारिणः ॥
महीधरोत्तमेपूर्वंयथावानरहस्तिनोः ॥ २९ ॥ रणरेणूरथोद्धूतःपिंगलोरणमूर्धनि ॥ संध्यानुरक्तःसदृशोमेघःखेसुरतापजः
॥ ३० ॥ तदासीत्तुमुलंयुद्धंनप्राज्ञायतकिंचन ॥ श्रूयंतेत्वनिशंशब्दाश्छिंधिभिंधीतिवादिनां ॥ ३१ ॥ ततोविशसनोरौद्रो
दैत्यानांदैवतैःसह ॥ जातोरुधिरनिष्यंदोरजसःशमनात्मकः ॥ ३२ ॥ शांतेरजसिदेवौघास्तद्दानवबलंमहत् ॥ अभ्यद्र-
वन्नसहितासमंस्कंदेनधीमता ॥ ३३ ॥ निजघ्नुर्दानवान्देवाःकुमारभुजपालिताः ॥ देवान्निजघ्नुर्दैत्याश्चमयगुप्ताःप्रहा-
रिणः ॥ ३४ ॥ ततोमृतरसास्वादाद्विनाभूताःसुरोत्तमाः ॥ निर्जिताःसमरेदैत्यैःसमंसैन्येननारद ॥ ३५ ॥ विनिर्जितान्
सुरान्दृष्ट्वावैनतेयध्वजोऽरिहा ॥ शार्ङ्गमुद्यम्यबाणौघैर्निजघानततस्ततः ॥ ३६ ॥ विष्णुनाहन्यमानास्तेदानवागरुडो-
प्यथ ॥ दैतेयाःशरणंजग्मुःकालनेमिंमहासुरं ॥ ३७ ॥ तेभ्यःसचाभयंदत्वाप्रययौयत्रमाधवः ॥ विद्वद्वियगमद्द्ह्वान्य-
थाव्याधिरुपेक्षितः ॥ ३८ ॥ ययंकरेणस्पृशतिदेवंयक्षंसकिन्नरं ॥ तंतमादायचिक्षेपविस्तृतेवदनेबली ॥ ३९ ॥ संरं-
भाद्दानवेंद्रोऽन्यमृदतदितिजैःसंयुगेदेवसैन्यंसेंद्रंसार्कंसचंद्रंकरचरणनखैरस्त्रहीनोऽपिवेगात् ॥ चक्रेवैश्वानराभैस्त्ववनिग-
गनयोस्तिर्यगूर्ध्वंसमंताद्व्याप्तंकल्पांतवह्नेर्जगदखिलमिदंरूपमासीद्दिधक्षोः ॥ ४० ॥ तंदृष्ट्वावर्धमानंरिपुमतिबलिनंदेवगं-
धर्वमुख्याःसिद्धाःसाध्याश्चमुख्याभवतरलदृशःप्राद्रवन्दिक्षुसर्वे ॥ पोप्लूयंतेचदैत्याहरिममरगणैरर्चितंचारुमौलिंनानाश-
स्त्रास्त्रपातैर्विगलितयशसंचक्रुरुत्सिक्तदर्पाः ॥ ४१ ॥ तानित्थंप्रेक्ष्यदैत्यान्मयबलिप्रमुखान्कालनेमिप्रधानान् बाणै- १३०
राकृष्यशार्ङ्गात्वनवरतमुरोभेदिभिर्वज्रकल्पैः॥ कोपादारक्तदृष्टिःसरथगजहयान्दृष्टिनिर्धूतवीर्यान्नाराचाख्यैःसुपुंखैर्जल-

दद्दवगिरिंछादयामासविष्णुः ॥ ४२ ॥ तेबाणैश्छाद्यमानाहरिकरमुचितैःकालदंडप्रकाशैर्नाराचैरर्धचंद्रैर्बलिमयपुरगाभी-
तभीतास्त्वरंतः ॥ प्रारंभेदानवेंद्रंशतमखमथनंप्रेंखयन्कालनेमिंसप्रायाद्देवसैन्यप्रभुममितबलंकेशवंलोकनाथं ॥ ४३ ॥
दृष्ट्वातंशतशीर्षमुद्यतगदंशैलेंद्रशृंगाकृतिंविष्णुःशार्ङ्गमपास्यसत्वरमथोजग्राहचक्रंकरे ॥ देवेनैवसमेत्यदैत्यविटपप्रच्छे-
दनंमालिनं प्रोवाचाथविहस्यतंचसुचिरंमेघस्वनोदानवः ॥ ४४ ॥ अयंसदनुपुत्रजिद्दनुजसैन्यवित्रासकृद्रिपुः
परमकोपनोममविघातकृत्वायुधि ॥ हिरण्यनयनांतकोविविधपुष्पपूजारतिःक्वयातिममगोचरेनिपतितःखलोऽसदृशः
॥ ४५ ॥ यद्येषसंप्रतिममाहवमभ्युपैतिनूनंनयातिनिलयंनिजमंबुजाक्षः ॥ मन्मुष्टिपिष्टशिथिलांगमुपांतभस्मसंद्र-
क्ष्यतेसुरजनोभयकातराक्षः ॥ ४६ ॥ इत्येवमुक्त्वामधुसूदनंवैसकालनेमिःस्फुरिताधरोष्ठः ॥ गदांखगेंद्रोपरिजातरो-
षोमुमोचशैलेकुलिशंयथेंद्रः ॥४७॥ तामापतंतींप्रसमीक्ष्यविष्णुर्घोरांगदांदानवबाहुमुक्तां ॥ चक्रेणचिच्छेदसुदुर्गतस्यम-
नोरथंपूर्वकृतंहिकर्म ॥ ४८ ॥ गदांछित्वातदाविष्णुर्दानवस्यसुदारुणां ॥ समुपेत्यभुजौपीनौसंप्रचिच्छेदवेगवान् ॥४९॥
भुजाभ्यामथकृत्ताभ्यांविष्णुनाप्रभविष्णुना ॥ कालनेमिस्तथाभातिदग्धःशैलइवापरः ॥ ५० ॥ ततोऽस्यमाधवःकोपा-
च्छिरश्चक्रेणभूतले ॥ छित्वानिपातयामासपक्वंतालफलंयथा ॥ ५१ ॥ तथाविबाहुर्विशिरामुंडतालोयथावने ॥ तस्थौ
मेरुरिवाकंप्यःकबंधःक्ष्माधरेश्वरः ॥ ५२ ॥ तंवैनतेयोप्युरसाखगेंद्रोनिपातयामाससमुनेधरण्यां ॥ यथांबराद्राहुशिरःप्र-
नष्टंधन्यंमहेंद्रःकुलिशेनभूम्यां ॥ ५३ ॥ तस्मिन्हतेदानवसैन्यपालेसंसाध्यमानास्त्रिदशैश्चदैत्याः ॥ विमुक्तशस्त्रालक-
वर्मवस्त्राःसंप्राद्रवन्बाणमृतेसुरेंद्राः ॥ ५४ ॥ इतिश्रीवामनपुराणेवामनप्रादुर्भावेकालनेमिवधोनामत्रिसप्ततितमो-
ऽध्यायः ॥ ७३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुलस्त्यउवाच ॥ संनिवृत्तबलेबाणेदानवाःसत्वरंपुनः ॥ प्रयातादेवतासेनांसशस्त्रायुधलालसाः ॥ १ ॥ विष्णुरप्यमितौ-
जास्तंज्ञात्वाज्ञेयंबलेःसुतं ॥ प्राहामंत्र्यसुरान्सर्वान्युध्यध्वंविगतज्वराः ॥२॥ विष्णुनाथसमादिष्टादेवाःशक्रपुरोगमाः॥
युयुधुर्दानवैःसार्धंविष्णुस्त्वंतरधीयत ॥ ३ ॥ माधवंगतमाज्ञायशुक्रोबलिमुवाचह ॥ गोविंदेनसुरास्त्यक्तास्त्वंजयस्वा-
धुनाबले ॥ ४ ॥ सपुरोहितवाक्येनप्रीतोयातेजनार्दने ॥ गदामादायतेजस्वीदेवसैन्यमभिद्रुतः ॥ ५ ॥ बाणोबाहुसह-
स्रेणगृह्यप्रहरणान्यथ ॥ देवसैन्यमभिद्रुत्यनिजघानसहस्रशः ॥ ६ ॥ मयोपिमायामास्थायतैस्तैरूपांतरैर्मुने ॥ यो-
धयामासबलवानमराणांवरूथिनीम् ॥ ७ ॥ विद्युज्जिह्वःपराभद्रोवृषपर्वासितेक्षणः ॥ विपाकोविक्षरःसैन्यंतेपिदेवा-
नुपाद्रवन् ॥ ८ ॥ तेहन्यमानादितिजैर्देवाःशक्रपुरोगमाः ॥ गतेजनार्दनेदेवेप्रायशोविमुखाभवन् ॥ ९ ॥ तान्प्रभ-
ग्नान्सुरगणान्बलिबाणपुरोगमाः ॥ पृष्ठतस्त्वद्रवन्सर्वेत्रैलोक्यविजिगीषवः ॥ १० ॥ संसाध्यमानादैतेयैर्देवाःसेंद्राः
भयातुराः ॥ त्रिविष्टपंपरित्यज्यब्रह्मलोकमुपागताः ॥ ११ ॥ ब्रह्मलोकंगतेष्वित्थंसेंद्रेष्वपिसुरेषुवै ॥ स्वर्गभोक्ताबलि-
र्जातःसपुत्रभृत्यबांधवैः ॥ १२ ॥ शक्रोभूद्बलवान्ब्रह्मन्बलिर्बाणोयमोभवत् ॥ वरुणोभून्मयःसोमोराहुर्ह्रादोमहासुर-
॥ १३ ॥ स्वर्भानुरभवत्सूर्यःशुक्रश्चासीद्बृहस्पतिः ॥ येन्येप्यधिकृतादेवास्तेषुजाताःसुरारयः ॥ १४ ॥ पंचमस्यकलो
राद्यौद्वापरांतेसुदारुणे ॥ देवासुरोभूत्संग्रामोयत्रशक्रोप्यभूद्बलिः ॥ १५ ॥ पातालास्तस्यसप्तासन्वशेलोकत्रयंतथा॥
भूर्भुवःस्वःपरिख्यातंदशलोकाधिपोबलिः ॥ १६ ॥ स्वर्गेस्वयंनिवसतिभुंजन्भोगान्सुदुर्लभान् ॥ तत्रोपासंतगंध-
र्वाविश्वावसुपुरोगमाः ॥ १७ ॥ तिलोत्तमाद्याह्यप्सरसोनृत्यंतिसुरतापसाः ॥ वादयंतिचवाद्यानियक्षविद्याधरादयः
॥ १८ ॥ त्रैविष्टपानसौभोगान्भुंजन्दैत्येश्वरोबलिः ॥ सस्मारमनसाब्रह्मन्प्रह्लादंसपितामहं ॥ १९ ॥ संस्मृतश्च

रुषोत्तमाः ॥ येनैतेचगृहेस्माकंनिवसंतिसुनिर्वृता ॥ ३९ ॥ कुलजोव्यसनेमग्नःसखाज्ञातिबहिष्कृतः ॥ वृद्धोज्ञाति-
गुणोविप्रःकीर्तिश्चयशसासह ॥ ४० ॥ तस्माद्यथैतेनिवसंतिपुत्रंराज्यस्थितस्येहकुलोद्भवस्य ॥ तथायतस्वामलसत्व-
चेष्टयथायशस्वीभवितासिलोके ॥ ४१ ॥ भूम्यांसदाब्राह्मणभूषितायांक्षत्रान्वितायांदृढवापितायां ॥ शुश्रूषणासक्ति-
समुद्भवायामृद्धिंप्रयांतीहनराधिपेंद्राः ॥ ४२ ॥ तस्माद्द्विजाग्र्याःश्रुतिशास्त्रयुक्तानराधिपास्तेप्रतियाजयंतु ॥ यजंतुदि-
व्यैःक्रतुभिर्द्विजेंद्रायज्ञाग्निधूमेननृपस्यशांतिः ॥ ४३ ॥ तपोध्ययनसंपन्नायजनेध्यापनेरताः ॥ संतुविप्राःक्षत्रपूज्या-
स्त्वत्तोनुज्ञामवाप्यहि ॥ ४४ ॥ स्वाध्याययज्ञनिरतादातारःशस्त्रजीवनः ॥ क्षत्रियाःसंतुदैत्येंद्रप्रजापालनधर्मिणः ॥ ४५ ॥
यज्ञाध्ययनसंपन्नादातारःकृषिकारिणः ॥ पाशुपाल्यंप्रकुर्वाणावैश्याविपणजीविनः ॥ ४६ ॥ ब्राह्मणक्षत्रियविशांसदा-
शुश्रूषणेरताः ॥ शूद्राःसंतुसुरश्रेष्ठतवाज्ञाकारिणाःसदा ॥ ४७ ॥ यदावर्णाःस्वधर्मस्थाभवंतिर्दितिजेश्वराः ॥ धर्मवृद्धिरत-
दास्याद्वैधर्मवृद्धौनृपादयः ॥ ४८ ॥ तस्माद्वर्णाःस्वधर्मस्थास्त्वयाकार्याःसदाबले ॥ तद्वृद्धौभवतोवृद्धिस्तद्धानौहानिरु-
च्यते ॥ ४९ ॥ इत्थंवचःश्राव्यनराधिपेंद्रोबलिर्महात्मासबभूवतूर्ष्णीं ॥ ततोयदाज्ञापयसेकरिष्येइत्थंबलिःप्राहवचो
महर्षे ॥ ५० ॥ इतिश्रीवामनपुराणेवामनप्रादुर्भावेचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ ॥
पुलस्त्यउवाच ॥ ततोगतेषुदेवेषुब्रह्मलोकंतपोधन ॥ त्रैलोक्यंपालयामासबलिर्धर्मान्वितःसदा ॥ १ ॥ कलिस्तदा
धर्मयुतंजगदृष्ट्वाकृतेयथा ॥ ब्रह्माणंशरणंभेजेस्वभावस्यनिषेवणात् ॥ २ ॥ गत्वासददृशेदेवंसेंद्रंदेवैःसमन्वितं ॥ स्व-
दीप्त्याद्योतयंतंचस्वदेशंससुरासुरं ॥ ३ ॥ प्रणिपत्यतमाहाथकलिर्ब्रह्माणमीश्वरं ॥ ममस्वभावोबलिनानाशितोदेव-
सत्तम ॥ ४ ॥ तंप्राहभगवान्ब्रह्मास्वभावंजगतोऽपिहि ॥ नकेवलंहिभवतोहृतस्तेनबलीयसा ॥ ५ ॥ पश्यस्युत्तिष्ठदेवेंद्रंवरु-

नीलवस्त्रालिसदृशायाचतुर्थींवृषस्थिता ॥ २५ ॥ सादानवान्नैर्ऋतांश्चशूद्रान्विद्याधरानपि ॥ विप्राद्याःश्वेतरूपांतांक-
थयंतिसरस्वतीं ॥ २६ ॥ स्तुवंतिब्रह्मणासार्धंमखेमंत्रादिभिःसदा ॥ क्षत्रियारक्तवर्णांतांजयश्रीमितिशंसिरे ॥ २७ ॥
साचंद्रेणासुरश्रेष्ठमनुनाचयशस्विनी ॥ वैश्यास्तांपीवतसनांकनकांगींसदैवहि ॥ २८ ॥ स्तुवंतिलक्ष्मीमित्येवप्रजापा-
लास्तथैवहि ॥ शूद्रास्तांनीलवर्णांगींस्तुवंतिहिसुभक्तितः ॥ २९ ॥ श्रियदेवीतिनाम्नातांसदैत्यैराक्षसैस्तथा ॥ एवं
विभक्तास्तानार्यस्तेनदेवेनचक्रिणा ॥ ३० ॥ एतासांचस्वरूपस्थास्तिष्ठंतिनिधनाव्ययाः ॥ इतिहासपुराणानिवेदाः
सांगास्तथोक्तयः ॥ ३१ ॥ चतुःषष्टिकलाश्चैतामहापद्मोनिधिःस्थितः ॥ रत्नानिस्वर्णरजतंगजाश्वरथभूषणं ॥ ३२ ॥
शस्त्रास्त्रादिकवस्तूनिरक्तापद्मोनिधिःस्मृतः ॥ गोमहिष्यःखरोष्ट्राश्चसुवर्णांबरभूमयः ॥ ३३ ॥ औषध्यःपशवःपीताम-
हानीलोनिधिःस्थितः ॥ सर्वासामपिजातीनांजातिरेकाप्रतिष्ठिता ॥ ३४ ॥ अन्येषामपिसंहर्त्रीनीलाशंखोनिधिस्थितः॥
एताभिश्चस्थितानांचयानिरूपाणिदानव ॥ ३५ ॥ भवंतिपुरुषाणांवैतन्निबोधवदामिते ॥ सत्यशौचाभिसंयुक्ताबलदा-
तोत्सवेरताः ॥ ३६ ॥ भवंतिदानवपतेमहापद्माश्रितानराः ॥ यज्विनोसुभगादक्षामालिनोबहुदक्षिणाः ॥ ३७ ॥ सर्व-
सामान्यसुखिनोनराःपद्माश्रिताःस्थिताः ॥ सत्यानृतसमायुक्तादानाशरणयज्विनः ॥ ३८ ॥ न्यायान्यायव्ययोपेता
महानीलाश्रितानराः ॥ नास्तिकाःशौचरहिताःकृपणाभोगवर्जिताः ॥ ३९ ॥ स्तेयानृतकथायुक्तानराःशंखाश्रिताबले ॥
इत्येवंकथितस्तुभ्यमासांदानवनिर्णयः ॥ ४० ॥ अहंसारांगणीनामजयश्रीस्त्वामुपागता ॥ ममास्तिदानवपतेप्रतिज्ञा
साधुसंमता ॥ ४१ ॥ समाश्रयामिशौर्याढ्यंनचक्लीबंकथंचन ॥ नचास्तितवतुल्योन्यस्त्रैलोक्येपिबलान्वितः ॥ ४२ ॥ त्व-
याबलवताराजन्प्रीतिर्मेजनिताध्रुवा ॥ यत्त्वयायुधिविक्रम्यदेवराजोविनिर्जितः ॥ ४३ ॥ अतोमेपरमप्रीतिर्जातादानव

च्छुत्वाकश्यपवचःप्राहशक्रःपितामहं ॥ विनाशंपाप्मनोब्रूहिप्रायश्चित्तंप्रभोमम ॥ ९ ॥ ब्रह्मप्रोवाचदेवेशंवसिष्ठःकश्यप-
स्तथा ॥ सर्वस्यजगतश्चापिशक्रस्यापिविशेषतः ॥१०॥ शंखचक्रगदापाणिर्माधवःपुरुषोत्तमः ॥ तंप्रपद्यस्वशरणंसतेसर्वं
विधास्यति ॥ ११ ॥ सहस्राक्षोपिवचनंगुरूणांसंनिशम्यवै ॥ प्रोवाचस्वल्पकालेनकश्चिद्दृष्टोमहोदयः ॥ १२ ॥ इत्ये-
वमुक्तःसुरराड्विरिंचिनामरीचिपुत्रेणचकश्यपेन ॥ तथैवमित्रावरुणात्मजेनवेगान्महीपृष्ठमवाप्यतस्थौ ॥ १३ ॥ कालिं-
जलस्योत्तरतःसुपुण्यस्तथाहिमाद्रेरपिदक्षिणस्थः ॥ कुशस्थलात्पूर्वतएवविश्रुतोवसोःपुरात्पश्चिमतोवतस्थे ॥ १४ ॥
पूर्वंगतेनन्रृवरेणयत्रइष्टोश्वमेधःशतशःसुदक्षिणः ॥ मनुष्यमेधोपिसहस्रकृत्वस्तथापुराद्दुर्जयनःसुरारिभिः ॥१५॥ ख्या-
तोमहामेधइतिप्रसिद्धोयथास्यचक्रेभगवान्मुरारिः ॥ द्वास्थत्वमव्यक्ततनुःसुमूर्तिःख्यातिंजगामाथगदाधरेति ॥ १६ ॥
यस्मिन्द्विजेंद्राःश्रुतिशास्त्रवर्जिताःसमत्वमायांतिपितामहेन ॥ सकृत्पितॄन्पूजयन्यत्रभक्त्यात्वनन्यभावेनहितचेत-
साच ॥ १७ ॥ फलंमहामेधमखस्यमानवाद्दधत्यनंतंभगवत्प्रसादात् ॥ महानदीयत्रसुरर्षिकन्याजलोपदेशाद्धिमशै-
लमेत्य ॥ १८ ॥ चक्रेजगत्पापविमुक्तमस्याःसंदर्शनप्राशनमज्जनेन ॥ तत्रशक्रःसमभ्येत्यमहानद्यास्तटेद्भुते ॥ १९ ॥
आराधनायदेवस्यकृत्वाश्रममवस्थितः ॥ प्रातःस्नायीत्वधःशायीएकभुक्तोप्ययाचितः ॥ २० ॥ तपस्तेपेसहस्राक्षःस्तुव-
न्देवंगदाधरं ॥ तस्यैवंतप्यतःसम्यग्जितसर्वेंद्रियस्यतु ॥ २१ ॥ कामक्रोधविहीनस्यसाग्रःसंवत्सरोगतः ॥ ततोगदा-
धरःप्रीतोवासवंप्राहनारद ॥ २२ गच्छप्रीतोस्मिभवतोमुक्तपापोसिसांप्रतं ॥ निजंराज्यंचदेवेशप्राप्स्यसेनचिरादिव ॥
यतिष्यामितथाशक्रभाविश्रेयोयथातव ॥ २३ ॥ इत्येवमुक्तेनगदाधरेणविसर्जितःस्नाप्यमनोहरायां ॥ स्नातस्यदेहेस्य

१ स्नातस्य देवस्यतदैनमो नरास्तंप्रोचुरस्माननुशासयस्व । इति पुस्तकान्तरे ।

घृतार्चिः सूर्यमंडलात् ॥ विनिःसृत्याग्रतःस्थित्वाइदंवचनमब्रवीत् ॥ ३९ ॥ अनेनानेनसुप्रीतस्तवाहंदक्षनंदिनि ॥ प्रा-
प्स्यसेदुर्लभंकाममत्प्रसादान्नसंशयः ॥ ४० ॥ राज्यंत्वत्तनयानांवैदास्येदेविसुरारणि ॥ दानवान्ध्वंसयिष्यामिसंभूयै-
वोदरेतव ॥ ४१ ॥ तद्वाक्यंवासुदेवस्यश्रुत्वाब्रह्मन्सुरारणिः ॥ प्रोवाचजगतांयोनिंवेपमानापुनःपुनः ॥ ४२ ॥ कथंत्वा-
मुदरेणाहंवोढुंशक्ष्यामिदुर्धरं ॥ यस्योदरेजगत्सर्ववसेत्स्थावरजंगमं ॥ ४३ ॥ कस्त्वांधारयितुंनाथशक्तस्त्रैलोक्यधा-
र्योसि ॥ यस्यसप्तार्णवाःकुक्षौनिवसंतिसहाद्रिभिः ॥ ४४ ॥ तस्माद्यथासुरपतिःशक्रःस्यात्सुरराडिह ॥ यथात्वथानमे
क्लेशस्तथाकुरुजनार्दन ॥ ४५ ॥ विष्णुरुवाच ॥ सत्यमेतन्महाभागेदुर्धरोस्मिसुरासुरैः ॥ तथापिसंभविष्यामिह्यहं
देव्युदरेतव ॥ ४६ ॥ आत्मानंभुवनंशैलांस्त्वांचदेविसकश्यपां ॥ धारयिष्यामियोगेनमाविषादंकृथावृथा ॥ ४७ ॥
तवोदरेह्यहंदाक्षेसंभविष्यामिवैयदा ॥ तदानिस्तेजसोदैत्याःसंभविष्यंत्यसंशयः ॥ ४८ ॥ इत्येवमुक्त्वाभगवान्सदेव-
स्तस्याश्चभूयोरिगणप्रमर्दी ॥ स्वतेजसांगेषुविवेशदेव्यास्तदोदरेशक्रहितायविप्राः ॥ ४९ ॥ इतिश्रीवामनपुराणेवाम-
नप्रादुर्भावेदितिवरप्रदानंनामषट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ ॥ ॥
पुलस्त्यउवाच ॥ देवमातुःस्थितेदेवेउदरेवामनाकृतौ ॥ निस्तेजसोऽसुराजातायथोक्तंविश्वयोनिना ॥ १ ॥ निस्तेज-
सोऽसुरान्दृष्ट्वाप्रह्लादंदानवेश्वरं ॥ बलिर्दानवशार्दूलंत्विदंवचनमब्रवीत् ॥ २ ॥ बलिरुवाच ॥ तातनिस्तेजसोदैत्याः
केनजातास्तुहेतुना ॥ कथ्यतांपरमज्ञोसिशुभाशुभविशारद ॥ ३ ॥ पुलस्त्यउवाच ॥ तत्पौत्रवचनंश्रुत्वामुहूर्तंध्यानमा-
स्थितः ॥ किमर्थंतेजसोहानिरितिकस्मादतोववा ॥ ४ ॥ सज्ञात्वावासुदेवोत्थंभयंदैत्येष्वनुत्तमं ॥ चिंतयामासयोगा-
त्माक्वविष्णुःसांप्रतंस्थितः ॥५॥ अधोनाभेःसपातालान्सप्तसंचिंत्यनारदः ॥ नाभेरुपरिभूरादीन्लोकांश्चक्रमशोवशी

पुत्रस्यैतद्वचःश्रुत्वाप्रह्लादःक्रोधमूर्छितः ॥ धिग्धिगित्याहसबलिंवैकुंठाक्षेपवादिनं ॥ २५ ॥ धिक्त्वांपापंसमाचारदुष्ट-
बुद्धेसुबालिश ॥ हरिंनिंदयतोजिह्वाकथंनपतितातव ॥ २६ ॥ शोच्यस्त्वमसिदुर्बुद्धेनिंदनीयश्चसाधुभिः ॥ यत्त्रैलोक्य-
गुरुंविष्णुमभिनिंदसिदुर्मते ॥ २७ ॥ शोच्यश्चापिनसंदेहोयेनजातःपितातव ॥ यस्यत्वंकर्कशःपुत्रोजातोदेवावमानकृत्
॥ २८ ॥ भवान्किलविजानातितथाचामीमहासुराः ॥ यथानान्यःप्रियःकश्चिन्ममतस्माज्जनार्दनात् ॥ २९ ॥ जान-
न्नपिप्रियतरंममदेवंजनार्दनं ॥ सर्वेश्वरेश्वरंदेवंकथंनिंदितवानसि ॥ ३० ॥ गुरुःपूज्यस्तत्रपितापूज्यस्तस्याप्यहंगुरुः ॥
ममापिपूज्योभगवान्गुरुर्लोकगुरुर्हरिः ॥ ३१ ॥ गुरोर्गुरुगुरुंमूढपूज्यंपूज्यतमस्यच ॥ पूज्यंनिंदसियत्पापकथंनपतितो-
स्यधः ॥ ३२ ॥ शोचनीयादुराचारादानवामीकृतास्त्वया ॥ येषांत्वंकर्कशोराजावासुदेवविनिंदकः ॥ ३३ ॥ यस्मात्पू-
ज्योर्चनीयश्चभवतानिंदितोहरिः ॥ तस्मात्पापसमाचारराज्यनाशमवाप्नुहि ॥ ३४ ॥ यथानान्यत्प्रियतरंविद्यतेममके-
शवात् ॥ मनसाकर्मणावाचाराज्यभ्रष्टस्तथापत ॥ ३५ ॥ यथानतस्मादपरंव्यतिरिक्तंहिविद्यते ॥ चतुर्दशसुलोकेषु
राज्यभ्रष्टस्तथापत ॥ ३६ ॥ सर्वेषामपिभूतानांनान्यल्लोकेपरायणं ॥ यथातथानुपश्येयंभवंतंराज्यविच्युतं ॥ ३७ ॥
पुलस्त्यउवाच ॥ एवमुच्चरितेवाक्येबलिःसत्वरितस्तदा ॥ अवतीर्यासनाद्ब्रह्मन्कृतांजलिपुटोबलिः ॥ ३८ ॥ शिरसा
प्रणिपत्याहप्रसादंकुरुमेगुरो ॥ कृतापराधानपिहिक्षमंतेगुरवःशिशून् ॥ ३९ ॥ तत्साधुयदहंशप्तोभवतादानवेश्वर ॥
नबिभेमिपरेभ्योऽहंनचराज्यपरिक्षयात् ॥ ४० ॥ नैवदुःखंममविभोयदहंराज्यविच्युतः ॥ दुःखंकृतापराधत्वाद्भवतो
मेमहत्तमं ॥ ४१ ॥ क्षमस्वतत्तातकृतापराधंबालोस्मिनीचोस्मिसुदुर्मतिश्च ॥ कृतेपिदोषेगुरवःशिशूनंक्षाम्यंतिदैन्यंस-
मुपागतानां ॥ ४२ ॥ पुलस्त्यउवाच ॥ इत्येवमुक्तेवचनेमहात्माविमुक्तमोहोहरिपादभक्तः ॥ चिरंविचिंत्याद्भुतमेतदि-

च ॥ शृणुष्वकथयिष्यामिपापपंकप्रणाशिनीं ॥ प्रह्लादतीर्थयात्रांतेसर्वपापप्रणाशिनीं ॥२॥ संत्यज्यमेरुंकनकाचलेंद्र-
तीर्थंजगामामरसंघजुष्टं ॥ ख्यातंपृथिव्यांशुभदंहिमानसंयत्रस्थितोमत्स्यवपुःसुरेशः ॥ ३ ॥ तस्मिंस्तीर्थवरेस्नात्वा
संतर्प्यपितृदेवताः ॥ संपूज्यचजगन्नाथमच्युतंश्रुतिभिर्यतं ॥ ४ ॥ उपोष्यभूयःसंपूज्यदेवर्षिपितृमानवान् ॥ जगाम
कच्छपंद्रष्टुंकौशिक्यांपापनाशनं ॥ ५ ॥ तस्यांस्नात्वामहानद्यांसंपूज्यचजगत्पतिं ॥ समुपोष्यशुचिर्भूत्वादत्वाविप्रेपुद-
क्षिणां ॥६॥ नमस्कृत्यजगन्नाथमथकूर्मवपुर्धरं ॥ ततोजगामकृष्णांशंद्रष्टुंवाजिमुखंप्रभुं ॥ तत्रदेवहृदेस्नात्वातर्पयित्वापि-
तॄन्सुरान् ॥७॥ संपूज्यहयशीर्षंचजगामगजसाह्वयं ॥ तत्रदेवंजगन्नाथंगोविंदंचक्रपाणिनं ॥८॥ स्नात्वासंपूज्यविधि-
वज्जगामयमुनांनदीं ॥ तस्यांस्नातःशुचिर्भूत्वासंतर्प्यर्षिसुरान्पितॄन् ॥ ददर्शदेवदेवेशंलोकनाथंत्रिविक्रमं ॥ ९ ॥ नार-
दउवाच ॥ सांप्रतंभगवान्विष्णुस्त्रैलोक्याक्रमणंवपुः ॥ करिष्यतिजगत्स्वामीबलिबंधनमीश्वरः ॥ १० ॥ तत्कथंपूर्व-
कालेपिविभुरासीत्त्रिविक्रमः ॥ कस्यवाबंधनंविष्णुःकृतवांस्तत्त्वमेवद ॥११॥ पुलस्त्यउवाच ॥ श्रूयतांकथयिष्यामियोऽयं
प्रोक्तस्त्रिविक्रमः ॥ यस्मिन्कालेबभूवाथयंचवंचितवानसौ ॥ १२ ॥ आसीद्धुंधुरितिख्यातःकश्यपस्यौरसःसुतः ॥ द-
नोर्गर्भसमुद्भूतोमहाबलपराक्रमः ॥ १३ ॥ ससमाराध्यचतदाब्रह्माणंतपसासुरः ॥ अवध्यत्वंसुरैःसेंद्रैःप्रार्थयन्सतुना-
रद ॥ १४ ॥ तस्यतंचवरंप्रादात्तपसापंकजोद्भवः ॥ परितुष्टःसचबलीनिर्जगामत्रिविष्टपं ॥ १५ ॥ चतुर्थस्यकलेरादौ
जित्वादेवान्सवासवान् ॥ धुंधुःशक्रत्वमकरोद्धिरण्यकशिपौसति ॥१६॥ तस्मिन्कालेसबलवान्हिरण्यकशिपुस्ततः ॥
चचारमंदरगिरौदैत्योधुंधुसमाश्रितः ॥ १७ ॥ ततोऽसुरायथाकामांविचरंतित्रिविष्टपे ॥ ब्रह्मलोकेचत्रिदशाःसंस्थिता

१ संपूज्येति पा० ।

मासाद्यवाजिमेधान्यजामहे ॥ ३५ ॥ इत्थंसुरारेर्वचनंनिशम्यासुरयाजकः ॥ बाढमित्यब्रवीद्धृष्टोनिधीशंसंदिदेशसः ॥
ततोधुंधुर्देविकायांप्राचीनेपापनाशने ॥ ३६ ॥ भार्गवेंद्रेणशुक्रेणवाजिमेधायदीक्षितः ॥ सदस्याऋत्विजश्चापितत्रा-
सन्भार्गवाद्विजाः ॥ शुक्रस्यानुमतेब्रह्मन्शुक्रशिष्याश्चपंडिताः ॥ ३७ ॥ यज्ञभागभुजस्तत्रस्वर्भानुप्रमुखामुने ॥ कृता-
श्चासुरनाथेनशुक्रस्यानुमतेऽसुराः ॥३८॥ ततःप्रवृत्तोयज्ञस्तुसमुत्सृष्टस्तथाहयः ॥ हयस्यानुययौश्रीमानसिलोमामहा-
सुरः ॥ ३९ ॥ ततोऽग्निधूमेनमहीसशैलाव्याप्तादिशोवैविदिशश्चपूर्णाः ॥ तेनोग्रगंधेनदिवस्पृशेनमरुद्ववौब्रह्मलोकेम-
हर्षे ॥ ४० ॥ तंगंधमाघ्रायसुराविषण्णांजानंतधुंधुंहयमेधदीक्षितं ॥ ततःशरण्यंशरणंजनार्दनंजग्मुःसशक्राजगतःपराय-
णम् ॥४१॥ प्रणम्यवरदंदेवंपद्मनाभंजनार्दनं ॥ प्रोचुःसर्वेसुरगणाःभयगद्गदयागिरा ॥ ४२ ॥ भगवन्देवदेवेशचराचर-
परायण ॥ विज्ञप्तिःश्रूयतांविष्णोसुराणामार्तिनाशन ॥ ४३ ॥ धुंधुर्नामासुरपतिर्बलवान्बलसंवृतः ॥ सर्वान्सुरान्वि-
निर्जित्यत्रैलोक्यमहरद्बलिः ॥ ४४ ॥ देवाऊचुः ॥ ऋतेपिनाकिनंदेवांस्त्रातानोन्योनविद्यते ॥ अतोसौवृद्धिमगमद्यथा
व्याधिरुपेक्षितः ॥४५॥ सांप्रतंब्रह्मलोकस्थानपिजेतुंसमुद्यतः॥ शुक्रस्यमतमादायसोऽश्वमेधायदीक्षितः ॥४६॥ शतंक्र-
तूनामिष्ट्वासौब्रह्मलोकंमहासुरः ॥ आरोढुमिच्छतिवशीविजेतुंत्रिदशानपि ॥४७॥ तस्मादकालहीनंतुचिंतयस्वजगद्गुरो॥
उपायंमखविध्वंसेयेनस्यामसुनिर्वृताः ॥ ४८ ॥ श्रुत्वासुराणांवचनंभगवान्मधुसूदनः ॥ दत्वाभयंमहाबाहुःप्रेषयामा-
ससांप्रतं ॥ विसृज्यचतदासर्वान्त्यक्त्वाजेयंमहासुरम् ॥ ४९ ॥ बंधनायमतिंचक्रेधुंधोर्धर्मध्वजस्यवै ॥ ततःकृत्वासभ-
गवान्वामनंरूपमीश्वरः ॥ ५० ॥ देहंत्यक्त्वानिरालंबंकाष्ठवद्देविकाजले ॥ क्षणान्मज्जंस्तथोन्मज्जन्मुक्तकेशोयदृच्छ-
या ॥५१॥ दृष्टोथदैत्यपतिनादैतेयैश्चतथर्षिभिः॥ ततःकर्मपरित्यज्ययज्ञियंब्राह्मणोत्तमाः ॥५२॥ समुत्तारयितुंविप्रमाद्रवं

दीयतामस्यदैत्येंद्रसर्वोपस्करसंयुतं ॥७२॥ श्रीमदावसथंदास्योरत्नानिविविधानिच ॥ इतिद्विजानांवचनंश्रुत्वादैत्य-
पतिस्ततः ॥ ७३ ॥ प्राहद्विजेंद्रतेदद्मियत्त्वमिच्छसिवैधनं ॥ दासीर्गृहंहिरण्यंचवाजिनःस्यंदनान्गजान् ॥ ७४ ॥
गोभूमिराज्यवस्त्रादिस्वेच्छयाचैववैप्रभो ॥ तद्वाक्यंदानवपतेःश्रुत्वादेवोथवामनः ॥ ७५ ॥ प्राहासुरपतिंधुंधुंस्वार्थसि-
द्धिकरंवचः ॥ सोदरेणापिहिभ्रात्राह्रियंतेयस्यसंपदः ॥ ७६ ॥ किंतस्यनार्थोराजेंद्रदीयतेचार्थएवहि ॥ दासीदासां-
श्चभृत्यांश्चगृहंरत्नंपरिच्छदान् ॥ ७७ ॥ समर्थेषुद्विजेंद्रेषुप्रयच्छस्वमहाभुज ॥ ममप्रमाणमालोक्यमामकंचपदत्रयं
॥ ७८ ॥ स्वंप्रयच्छस्वदैत्येंद्रएतदेवार्थयेह्यहं ॥ इत्येवमुक्तंवचनंमहात्मनाविहस्यदैत्याधिपतिःसऋत्विजः ॥ ७९ ॥
प्रादात्त्रविप्रायपदत्रयंवशीयदासनान्यत्प्रगृहीतवान्पुनः ॥ क्रमत्रयंतावदवेक्ष्यदत्तंमहासुरेंद्रेणविभुर्यथाशशी ॥८०॥
चक्रेततोलंघयितुंत्रिलोकींत्रिविक्रमंरूपमनंतशक्तिः ॥ कृत्वाचरूपंदितिजांश्चहत्वाप्रणम्यचपौंश्चसचक्रमेण ॥ ८१ ॥
महींमहीध्रैःसहितांसहार्णवांजहाररत्नाकरपत्तनैर्युतां॥ भुवंसनाकांत्रिदशाधिवासंसोमार्कऋक्षैरभिमंडितंनभः॥ ८२ ॥
देवोद्वितीयेनजहारवेगात्क्रमेणदेवप्रीयमीप्सुरीश्वरः ॥ क्रमंतृतीयंनयदास्यपूरितंतदातिकोपादनुपुंगवस्य ॥ ८३ ॥
पपातपृष्ठेभगवांस्त्रिविक्रमोमेरुप्रमाणेनतुविग्रहेण ॥ पततावासुदेवेनदानवोपरिनारद ॥ ८४ ॥ त्रिंशद्योजनसा-
हस्रोभूमिर्गर्तैर्हदीकृता ॥ ततोदैत्यंसमुत्पाट्यतस्यांप्रक्षिप्यवेगतः ॥ ८५ ॥ ववर्षसिकतावृष्ट्यातंचगर्तमपूरयत् ॥
ततःस्वर्गंसहस्राक्षोवासुदेवप्रसादतः ॥ ८६ ॥ सुराश्चसर्वेत्रैलोक्यमवापुर्निरुपद्रवाः॥ भगवानपिदैत्येंद्रंप्रक्षिप्यासिक-
तार्णवे ॥ ८७ ॥ कालिंद्यारूपमाधायतत्रैवांतरधीयत ॥ एवंपुराविष्णुरभूच्चवामनोधुंधुंविजेतुंचत्रिविक्रमोऽभूत् ॥ य-
स्मिन्सदैत्येंद्रसुतोजगाममहाश्रमेपुण्ययुतेमहर्षे ॥ ८८ ॥ इतिश्रीवामनपुराणेवामनप्रादुर्भावेधुंधुपराजयोनामाष्टस-

मोतरुं ॥ क्षांतःक्षुत्तृट्परीतात्मातस्यपार्श्वमुपाविशत् ॥ १८ ॥ सुप्तश्चापिसुविश्रांतोमध्याह्नेपुनरुत्थितः ॥ समपश्यद्-
थायातंप्रेतंप्रेतशतैर्वृतं ॥ १९ ॥ ऊह्यमानंतथान्येनप्रेतेनप्रेतनायकं ॥ सुश्रांतैःपुरोधावद्भिःप्रेतैस्तुरूक्षविग्रहैः ॥ २० ॥
अथाजगामप्रेतोसौपर्यटित्वाधरामिमां ॥ उपागम्यशमीमूलेवणिक्पुत्रंददर्शसः ॥ २१ ॥ स्वागतेनाभिवाद्यैनंसमाभा-
ष्यपरस्परं ॥ सुखोपविष्टश्छायायांहृष्टःकुशलमाप्तवान् ॥ २२ ॥ प्रेताधिपतिनापृष्टःसचतेनवणिक्सखे ॥ कुतआगम्य-
तेब्रूहिक्कवासोवाभविष्यति ॥ २३ ॥ कथंचेदंमहारण्यंमृगपक्षिविवर्जितं ॥ समापन्नोसिभद्रंतेसर्वमाख्यातुमर्हसि ॥ २४ ॥
एवंप्रेताधिपतिनावणिक्पृष्टःसमासतः ॥ सर्वमाख्यातवान्ब्रह्मन्स्वदेशधनविच्युतिम् ॥ २५ ॥ तस्यश्रुत्वा
सवृत्तान्तंतस्यदुःखेनदुःखितः ॥ वणिक्पुत्रंततःप्राहप्रेतपालःस्वबंधुवत् ॥ २६ ॥ एवंगतेऽपिमाशोकंकर्तुमर्हसिसुव्रत ॥
भूयोऽप्यर्थाभविष्यंतियदिभाग्यबलंतव ॥ २७ ॥ भाग्यक्षयेऽर्थाःक्षीयंतेभवंत्यभ्युदयेपुनः ॥ क्षीणस्यास्यशरीरस्यचिं-
तयानोदयोभवेत् ॥ २८ ॥ इत्युच्चार्यसमाहूयस्वान्भृत्यान्वाक्यमब्रवीत् ॥ अद्यातिथिरयंपूज्यःसहजोदेशजोमम
॥ २९ ॥ अस्मिन्दृष्टेवणिक्पुत्रेदृष्टाःस्वजनबांधवाः ॥ अस्मिन्समागतेप्रेताःप्रीतिर्जाताममातुला ॥ ३० ॥ एवंहिवदत-
स्तस्यमृत्पात्रंसुदृढंनवं ॥ दध्योदनेनसंपूर्णमाजगामयथेप्सितं ॥ ३१ ॥ तथानवाचसुदृढासंपूर्णापरमांभसा ॥ वारि-
धानीचसंप्राप्ताप्रेतानामग्रतःस्थिता ॥ ३२ ॥ तामागतांससलिलांसान्नांवीक्ष्यमहामतिः ॥ प्राहोत्तिष्ठवणिक्पुत्रत्वमा-
ह्निकमुपाचर ॥ ३३ ततस्तुवारिधान्यास्तौसलिलेनविधानतः ॥ कृताह्निकावुभौजातौवणिक्प्रेतप्रभुस्तथा ॥ ३४ ॥ ततो
वणिक्सुतायासौदध्योदनमथेच्छया ॥ दत्वातेभ्यश्चसर्वेभ्यःशेषमन्नमधात्ततः ॥ ३५ ॥ भुक्तवत्सुचसर्वेषुकामतोंऽभसिसेविते ॥
अनंतरंसबुभुजेप्रेतपालोवराशनं ॥ ३६ ॥ प्रकामंतृप्तेप्रेतेऽथवारिधान्योदनंतथा ॥ अंतर्धानमगाद्ब्रह्मन्वणिक्पुत्रस्य

दत्तंतदिदमायातिमध्यान्हेपिदिनेदिने ॥ ५७ ॥ यावन्नाहंचभुंजेन्नंनतावक्षयमेतिच ॥ मयिभुक्तेचपोतेचसर्वमंताहितं
भवेत् ॥ ५८ ॥ आतपत्रप्रदानाच्चसोयंजातःशमीतरुः ॥ उपानद्युगुलेदत्तेप्रेतामेवाहनंभवेत् ॥ ५९ ॥ इदंतवोक्तंसर्वं
चयथाकीनाशतात्मनः ॥ श्रवणद्वादशीपुण्यातथोक्तंपुण्यवर्धनं ॥ ६० ॥ इत्येवमुक्तेवचनेवणिक्पुत्रोऽब्रवीद्वचः ॥ यन्म-
तातकर्तव्यंतदनुज्ञातुमर्हसि ॥६१॥ तत्तस्यवचनंश्रुत्वावणिक्पुत्रस्यनारद ॥ प्रेतपालोवचःप्राहस्वार्थसिद्धिकरंततः ॥६२॥
यत्त्वयातातकर्तव्यंमद्धितार्थंमहामते ॥कथयिष्यामिसम्यक्तेतवश्रेयस्करंमम ॥६३॥गयातीर्थेतुजुहुयात्स्नात्वाशौचसमन्वि-
तः ॥ ममनामसमुद्दिश्यपिंडानिर्वपणंकुरु ॥६४॥ तत्रपिंडप्रदानेनप्रेतभावादहंसखे ॥ मुक्तस्तुसर्वदातॄणांयास्यामिसहलो-
कतां ॥६५॥ तिथिर्याद्वादशीपुण्यामासिप्रोष्ठपदेसिता ॥ बुधश्रवणसंयुक्तासातिश्रेयस्करीस्मृता ॥६६॥ इत्येवमुक्त्वावणि-
जंप्रेतराजोनुगैःसह ॥ सचमेनेयथान्यायंसम्यगाख्यातवान्शुचिः ॥ ६७ ॥ प्रेतस्कंधेसमारोप्यत्याजितोमरुमंडलं ॥
रम्येथसुरसेनाख्येदेशेप्राप्तःसवैवणिक् ॥ ६८ ॥ स्वकर्मधर्मयोगेनधनमुच्चावचंबहु ॥ उपार्जयित्वाप्रययौ
गयातीर्थमनुत्तमं ॥६९॥ पिंडनिर्वपणंतत्रप्रेतानामनुपूर्वकं ॥ चकाराथस्वबंधूनांपितॄणांतदनंतरं ॥७०॥ आत्मनश्चस-
मावुद्धिर्महच्छ्राद्धंतिलैर्विना ॥ पिंडनिर्वपणंचक्रेतथान्यानपिगोत्रजान् ॥ ७१ ॥ एवंप्रदत्तेष्वथचपंचपिंडेषुभावतः ॥
विमुक्तास्तेद्विजाःप्राप्यब्रह्मलोकंततोगताः ॥ ७२ ॥ सचापिहिवणिकपुत्रोनिजमालयमाव्रजत् ॥ श्रवणद्वादशीं-
कृत्वाकालधर्ममुपेयिवान् ॥ ७३ ॥ गंधर्वलोकेसुचिरंभोगान्भुक्त्वासुदुर्लभान् ॥ मानुष्यंजन्ममासाद्यसचाभूत्सकले-
विराट् ॥७४॥ स्वधर्मकर्मवृत्तिस्थःश्रवणद्वादशीरतः ॥ कालधर्ममवाप्यासौगुह्यकावासमाश्रयत् ॥ ७५ ॥ तत्रोप्य १४१
सुचिरंकालंभोगान्भुक्त्वाचकामतः ॥ मर्त्यलोकमनुप्राप्यराजन्यतनयोऽभवत् ॥७६॥ तत्रापिक्षत्रवृत्तिस्थोदानभोग-

द्विरिंद्रायचभोजनं ॥ ११ ॥ जानुनीतत्रसंयोगेपूजयेदथभक्तितः ॥ देहिदेवेहविष्यान्नंपूर्वंचद्विजभोजनं ॥ १२ ॥ आषा-
ढाभ्यांतथाद्वाभ्यांद्विरूपंपूजयेद्बुधः ॥ सलिलंशिशिरंतत्रदोहदेचप्रकीर्तितं ॥ १३ ॥ फाल्गुनीद्वितयेगुह्यंपूजनीयंविचक्ष-
णैः ॥ दोहदंचपयोगव्यंदेयंचद्विजभोजनं ॥ १४ ॥ कृत्तिकासुकटिःपूज्यासोपवासोजितेंद्रियः ॥ दोहदंचविभोदेयं
सुगंधंकुसुमोदकं ॥ १५ ॥ पार्श्वौभाद्रपदायुग्मेपूजयित्वाविधानतः ॥ गुडंशालेयकंदद्याद्दोहदंदेवप्रीतिदं ॥ १६ ॥
द्वेकुक्षीरेवतीयोगेदोहदेमुद्गमोदकः ॥ अनुराधासुवक्षोथषष्टिकान्नंचदोहदे ॥ १७॥ धनिष्ठायांतथापूज्यःशालिभक्तंचदो-
हदे ॥ भुजयुग्मंविशाखासुदोहदेपरमौदनं ॥ १८ ॥ हस्तेहस्तौतथापूज्यौयावकंदोहदेस्मृतं ॥ पुनर्वस्वंगुलीयुग्मंपटो-
लस्तत्रदोहदे ॥ १९ ॥ नखाश्लेषासुसंपूज्यादोहदेतित्तिरामिषं ॥ ज्येष्ठायांपूजयेद्ग्रीवांदोहदेतिलमोदकः ॥ २० ॥ श्र-
वणेश्रवणौपूज्यौदधिभक्तंचदोहदे ॥ पुष्येमुखंतुसंपूज्यंदोहदेघृतपायसं ॥२१॥ स्वातियोगेचदशनादोहदेतिलशष्कुली ॥
दातव्यंकेशवप्रीत्यैब्राह्मणस्यचभोजनं ॥२२॥ हनूशतभिषायोगेपूजयेच्चप्रयत्नतः ॥ प्रियंगुभक्तंदेयंचदोहदेमधुघातिनि
॥ २३ ॥ मघासुनासिकापूज्यामधुराज्यंचदोहदे ॥ मृगोत्तमांगेनयनेमृगमांसंचदोहदे ॥ २४ ॥ चित्रायोगेललाटंच
दोहदेचारुभोजनं ॥ भरणीषुशिरःपूज्यंचारुभक्ष्यंचदोहदे ॥ २५ ॥ संपूजनीयाविद्वद्भिरार्द्रायोगेशिरोरुहाः ॥ विप्रांश्च
भोजयेद्भक्त्यादोहदेचगुडार्द्रकं ॥ २६ ॥ नक्षत्रयोगेष्वेतेषुसंपूज्यजगतःपतिं ॥ पूजितेदक्षिणांदद्याद्ब्राह्मणेवेदपारगे
॥ २७ ॥ छत्रोपानच्छ्वेतयुगंसप्तधान्यंसकांचनं ॥ घृतपात्रंचगांदोग्ध्रींब्राह्मणेभ्योनिवेदयेत् ॥ २८ ॥ प्रतिनक्षत्रयोगे-
नपूजनीयाद्विजातयः ॥ नक्षत्रज्ञायविप्रायपृथग्दद्याच्चदक्षिणां ॥ २९ ॥ नक्षत्रपुरुषाख्यंहिव्रतानामुत्तमंव्रतं ॥ पूर्वंकृतं
हिभृगुणासर्वपातकनाशनं ॥ ३० ॥ अंगोपांगानिदेवर्षेपूजनीयानिवैप्रभोः ॥ सुरूपाण्यभिजायंतेप्रत्यंगांगानिचैवहि

संपूज्यचेश्वरं ॥ जगामासौपयोष्ण्यं तुअखंडंद्रष्टुमच्युतं ॥ १० ॥ स्नात्वापयोष्णीसलिलेपूज्याखंडंजगत्पतिं ॥ द्र-
ष्टुंजगाममतिमान्वितस्तायांकुमारिलं ॥ ११ ॥ तत्रस्नात्वाचर्य्यदेवेशंवालखिल्यैर्मरीचिभिः ॥ आराध्यमानोप्ययुतं
हतंपापप्रणाशनं ॥ १२ ॥ यत्रसासुरभीदेवीस्वसुतांकपिलांशुभां ॥ देवप्रियार्थमसृजद्धितार्थंजगतस्तथा ॥ १३ ॥
तत्रदेवह्रदेस्नात्वाशुभंसंपूज्यभक्तितः ॥ १४ ॥ विधिवच्चविधिंप्राप्यमणिमंतंततोययौ ॥ तत्रतीर्थवरेस्नात्वाप्राजापत्ये
महामतिः ॥ १५ ॥ ददर्शशुभंब्रह्माणंदेवेशंचप्रजापतिं ॥ विधानतस्तुतान्देवान्पूजयित्वातपोधन ॥ १६ ॥ षड्रा-
त्रंतत्रचस्थित्वाजगाममधुनंदिनीं ॥ मधुसलिलेस्नात्वाचदेवंचक्रधरंहरं ॥ शूलबाहुंचगोविंदंददर्शदनुपुंगवः ॥ १७ ॥
नारदउवाच ॥ किमर्थंभगवान्शंभुर्दधाराथसुदर्शनं ॥ शूलंतथावासुदेवोममैतद्ब्रूहिपृच्छतः ॥ १८ ॥ पुलस्त्यउवाच ॥
श्रूयतांकथयिष्यामिकथामेतांपुरातनीं ॥ कथयामासतांविष्णुर्भविष्यामवनौसुरा ॥ १९ ॥ जलोद्भवोनाममहासुरेंद्रो
घोरंसतप्वातपउग्रवीर्यः ॥ आराधयामासविरंचिमारात्सतस्यतुष्टोवरदोबभूव ॥ २० ॥ देवासुराणामजयोमहाहवे
निजैश्चशस्त्रैरमरैरवध्यः ॥ अनन्यलंघ्यैर्नतुब्रह्मणःपुरानयातिशापैःशममेषशक्रः ॥ २१ ॥ एवंप्रभावोदनुपुंगवोसौदे-
वान्महर्षीन्नृपतीन्समग्रान् ॥ प्रबाधमानोविचचारभूम्यांसर्वाःक्रियाःप्राक्षिपदुग्रमूर्तिः ॥ २२ ॥ ततोऽमराभूमितटे-
निषण्णाजग्मुःशरण्यंहरिमीशितारं ॥ तैश्चापिसार्धंभगवान्जगामहिमालयंयत्रहरस्त्रिनेत्रः ॥ २३ ॥ संमंत्र्यदेवर्षिहि-
तंचकार्यंमतिंचकृत्वानिधनायशत्रोः ॥ निरायुधौतावपिपर्यटंतौदेवाधिपौचक्रतुरुग्रकर्म ॥ २४ ॥ ततश्चासौदानवौविष्णु-
शर्वौसमायातौहंतुकामौसुरेशौ ॥ मत्वाजेयौशत्रुभिर्घोररूपैर्भयात्तोयेनिम्नगायांविवेश ॥ २५ ॥ ज्ञात्वाप्रविष्टंत्रिदि-
वेंद्रशत्रुंनदींविशालांद्विजमत्स्यपूर्णां ॥ तीरंसमाश्रित्यस्थितौहिदेवौप्रच्छन्नमूर्तीसहसाबभूवतुः ॥ २६ ॥ दिवंसमीक्ष-

दत्तेपिष्टकारितं ॥ रुरोदचतथावाल्यात्पाथोर्थँचातकोयथा ॥९॥ तंमातारुदंतंप्राहबाष्पगद्गदयागिरा ॥ उमापतौपशु-
पतौशूलधारिणिशंकरे ॥ १० ॥ अप्रसन्नेविरूपाक्षेकुतःक्षीरेणभोजनं ॥ यदीच्छसिपयोभोक्तुंसद्यःपुष्टिकरंसुत ॥११॥
तदाराधयदेवेशंविरूपाक्षंत्रिशुलिनं ॥ तस्मिंस्तुष्टेजगद्धाम्निसर्वकल्याणदायिनि ॥ १२ ॥ प्राप्यतेमृतपायित्वंकिंपुनः
क्षीरभोजनं ॥ समातुर्वचनंश्रुत्वावीतमन्युस्ततोब्रवीत् ॥ १३ ॥ कोऽयंविरूपाक्षइतित्वयाराध्यस्तुकीर्तितः ॥ ततःसुतं
धर्मशीलाधर्माढ्यंवाक्यमब्रवीत् ॥ १४ ॥ योयंविरूपाक्षइतिश्रूयतांकथयामितं ॥ आसीन्महासुरपतिःश्रीदामइतिवि-
श्रुतः ॥ १५ ॥ येनाभ्रम्यजगत्सर्वंश्रीदामाविष्णुवत्पुरा ॥ निःश्रीकास्तुत्रयोलोकाःकृतास्तेनदुरात्मना ॥ १६ ॥ श्री-
वत्संवासुदेवस्यहर्तुमिच्छन्महासुरः ॥ तस्यदुष्टंसभगवानभिप्रायंजनार्दनः ॥ १७ ॥ ज्ञात्वातस्यवधाकांक्षीमहेश्वर-
मुपागमत् ॥ एतस्मिन्नंतरेशंभुर्योगमूर्तिधरोव्ययः ॥१८॥ तस्थौहिमाचलप्रस्थमाश्रित्यश्लक्ष्णभूपितं ॥ अथाभ्येत्यज-
गन्नाथःसहस्रशिरसंविभुं ॥ १९ ॥ आराधयामासहरिःस्वयमात्मानमात्मना ॥ आसीद्वर्षसहस्रंतुपादांगुष्ठेनतद्गिरौ
॥ २० ॥ गृणन्सनातनंब्रह्मयोगिध्येयमलक्षणं ॥ ततःप्रीतःप्रभुःप्रादाद्विष्णवेपरमंपदं ॥ २१ ॥ प्रत्यक्षतेजसायुक्तं
दिव्यंचक्रंसुदर्शनं ॥ तद्दत्वादेवदेवायसर्वभूतमयःप्रभुः ॥ २२ ॥ कालचक्रनिभंचक्रंशंकरोविष्णुमब्रवीत् ॥ वरायुधंहि-
देवेशंशर्वायुधनिबर्हणं ॥ २३ ॥ सुदर्शनंद्वादशारंषण्णाभिद्विजवज्जवे ॥ आरात्संस्थास्त्वमीतत्रदेवामासाश्चराशयः
॥ २४ ॥ शिष्टानांरक्षणार्थायसंस्थिताऋतवश्चषट् ॥ अग्निःसोमस्तथामित्रोवरुणश्चशचीपतिः ॥ २५ ॥ इंद्राग्नीवाप्य-
थोविश्वेप्रजापतयएवतु ॥ वायुश्चबलवान्देवोवैद्योधन्वंतरिस्तथा ॥ २६ ॥ तपस्यश्चतपश्चोग्रोद्वादशेतिप्रतिष्ठिताः ॥ १४४
चैत्राद्याःफाल्गुनांताश्चमासास्तत्रप्रतिष्ठिताः ॥ २७ ॥ तदेनमादायविभोरथायुधंशत्रुंसुराणांजहिमाविशंकितः ॥ अमो-

मनप्रादुर्भावेश्रीदामचरितंनामव्द्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ ॥ ॥
पुलस्त्यउवाच ॥ तस्मिंस्तीर्थवरेस्नात्वादृष्ट्वादेवंत्रिलोचनं ॥ पूजयित्वासुवर्णाक्षंनैमिषंप्राययौततः ॥१॥ तत्रतीर्थसहस्रा-
णित्रिंशत्पापहराणिच ॥ गोमत्याःकांचनाक्ष्याश्चशुभदायाश्चमध्यतः ॥ २ ॥ तेषुस्नात्वार्च्यदेवेशंपीतवाससमच्युतं ॥
ऋषीनपिचसंपूज्यनैमिषारण्यवासिनः ॥ ३ ॥ देवदेवंतथेशानंसंपूज्यविधिनाततः ॥ गयायांगोपतिंद्रष्टुंजगामसमहासुरः
॥४॥स्नात्वाब्रह्मतडागेतुकृत्वाचास्यप्रदक्षिणां ॥ पिंडनिर्वपणंपुण्यंपितॄणांसचकारह ॥ ५ ॥ उदपानेतथास्नात्वातत्राभ्यर्च्य
पितॄन्वशी ॥ गदापाणिंसमभ्यर्च्यगोपतिंचापिशंकरं ॥ ६ ॥ इंद्रतीर्थेतथास्नात्वासंतर्प्यपितृदेवताः ॥ महानदीजले
स्नात्वाशरयूंचजगामसः ॥ तस्यांस्नात्वासमभ्यर्च्यगोप्रतारंकुशेशयं ॥ ७ ॥ उपोष्यरजनीमेकांविनायावनतोययौ ॥
स्नात्वाचार्च्यरजस्तीर्थेदत्वापिंडंपितॄंस्तथा ॥ ८ ॥ दर्शनार्थंययौश्रीमानजितंपुरुषोत्तमं ॥ तंदृष्ट्वापुंडरीकाक्षमक्षरंपरमंशु-
चिः ॥ ९ ॥ षड्रात्रंसमुपोष्यैवमहेंद्रदक्षिणंययौ ॥ तत्रदेववरंशुभ्रमर्धनारीधरंहरं ॥ १० ॥ दृष्ट्वाचसंपूज्यपितॄन्महेंद्रं
चोत्तरंगतः ॥ तत्रदेववरंशंभुंगोपालंसोमपीडितं ॥ ११ ॥ दृष्ट्वास्नात्वासोमतीर्थेसह्याचलमुपागतः ॥ तत्रस्नात्वामहो-
दक्यांवैकुंठंचार्च्यभक्तितः ॥ १२ ॥ सुरान्पितॄंश्चसंतर्प्यपारियात्रंगिरिंगतः ॥ तत्रस्नात्वालांगलिन्यांपूजयित्वापराजि-
तं ॥ १३ ॥ कशेरुदेशंचाभ्येत्याविश्वरूपंददर्शसः ॥ यत्रदेववरःशंभुर्गणानांतुसुपूजितः ॥ १४ ॥ विश्वरूपमथात्मानं
दर्शयामासयोगवित् ॥ तत्रमंकुणिकातोयेस्नात्वाभ्यर्च्यमहेश्वरं ॥ १५ ॥ जगामानित्यसौगंधंप्रह्लादोमलयाचलं ॥
महाह्रदेततःस्नात्वापूजयित्वाचशंकरं ॥ १६ ॥ ततोजगामयोगात्माद्रष्टुंविंध्येसदाशिवं ॥ ततोविपाशासलिलेस्नात्वाभ्य-
र्च्यसदाशिवं ॥ १७ ॥ त्रिनेत्रंसमुपोष्याथअवंतींनगरींययौ ॥ तत्रक्षिप्राजलेस्नात्वाविष्णुंसंपूज्यभक्तितः ॥ १८ ॥

कांगिरसश्चैवतत्त्वज्ञाःकुरुजांगलं ॥ ३ ॥ उत्तराशांप्रजग्मुस्तेनदीमनुशतद्रवीम् ॥ शातद्रवेजलेस्नात्वाविवासंप्रययु-
स्ततः ॥४॥ विज्ञायतत्रास्यरतिंस्नात्वार्च्यपितृदेवताः ॥ ततोपिकिरणांपुण्यांदिनेशकिरणच्युतां ॥५॥ तस्यांस्नात्वाच
देवर्षेसर्वएवमहर्षयः ॥ वेगवतींसुपुण्योदांस्नात्वाजग्मुरथेश्वरीं ॥ ६ ॥ देविकायांजलेस्नात्वापयोष्णायांचतापसः ॥
अवतीर्णामुनेस्नातुंमाधवाद्यासुभानवीं ॥ ७ ॥ ततोनिमग्नाददृशुःप्रतिबिंबमथात्मनः ॥ अंतर्जलेद्विजश्रेष्ठमहदाश्चर्य-
कारकं ॥ ८ ॥ उन्मज्जंतश्चददृशुःपुनर्विस्मितमानसाः ॥ ततःस्नात्वासमुत्तीर्णाऋषयःसर्वएवहि ॥ ९ ॥ पुष्करा-
क्षमयोगांधिंब्रह्माणंचाप्यपूजयन् ॥ ततोभूयःसरस्वत्यास्तीर्थेत्रैलोक्यविश्रुते ॥ १० ॥ कोटितीर्थेरुद्रकोटिंददर्शवृषभ-
ध्वजं ॥ नैमिषेयाद्विजवरामागधेयाःससैंधवाः ॥११॥ धर्मारण्याःपुष्करेयादंडकारण्यकास्तथा ॥ चांपेयास्तारकच्छेया
देविकातीर्थकाश्चये ॥ १२ ॥ तेतत्रशंकरंद्रष्टुंसमायाताद्विजातयः ॥ कोटिसंख्यास्तपःसिद्धाहरदर्शनलालसाः ॥१३॥
अहंपूर्वमहंपूर्वमित्येवंवादिनोमुने ॥ तानाकुलान्हरोदृष्ट्वामहर्षीन्दग्धकिल्बिषान् ॥ १४ ॥ तेषामेवानुकंपार्थंकोटिमू-
र्तिरभूच्छिवः ॥ ततस्तेमुनयःप्रीताःसर्वएवमहेश्वरं ॥ १५ ॥ संपूजयंतस्तेतस्थुस्तीर्थेकृत्वापृथक्पृथक् ॥ इत्येवंरुद्रको-
टीभिर्नामशंभोरजायत ॥ १६ ॥ तंददर्शमहातेजाःप्रह्लादोभक्तिमान्वशी ॥ कोटितीर्थेततःस्नात्वातर्पयित्वावसून्पि-
तॄन् ॥ १७ ॥ रुद्रकोटिंसमभ्यर्च्यजगामकुरुजांगलं ॥ ततोदेववरंस्थाणुंशंकरंपार्वतीप्रियं ॥ १८ ॥ सरस्वतीजले
मग्नंददर्शसुरपूजितं ॥ सारस्वतेंभसिस्नात्वास्थाणुंसंपूज्यभक्तितः ॥ १९ ॥ स्नात्वादशाश्वमेधेचसंपूज्यचसुरान्
पितॄन् ॥ सहस्रलिंगंसंपूज्यस्नात्वातस्मिन्हूदेशुचिः ॥ २० ॥ अभिवाद्यगुरुंशुक्रंसोमतीर्थंजगामह ॥ तत्रस्नात्वा-
भ्यर्च्यपितॄन्सोमंसंपूज्यभक्तितः ॥ २१ ॥ क्षीरिकावासमभ्येत्यस्नानंचक्रेमहामतिः ॥ प्रदक्षिणीकृत्यतरुंवरुणंचा-

हादेवमपूजयच्च ॥ ततस्त्रिकूटंगिरिमद्रिपुत्रंजगामद्रष्टुंसहचक्रपाणिं ॥ ४२ ॥ तमर्च्यभक्त्यातुगजेंद्रमोक्षणंजजाप
जाप्यंपरमंपवित्रं ॥ तत्रोष्यदैत्येश्वरसूनुरादरान्मासत्रयंमूलफलांबुभक्षी ॥ ४३ ॥ निवेद्यविप्रप्रवरेषुकांचनंजगाम
घोरंसहिदंडकंवनं ॥ तत्रदिव्यंमहाशाखंवनस्पतिवपुर्धरं ॥ ४४ ॥ ददर्शपुंडरीकाक्षंमहास्वापदवारणं ॥ तस्याधस्थं
त्रिरात्रंसमहाभागवतोसुरः ॥ ४५ ॥ स्थितःस्थण्डिलशायीचपठन्सारस्वतंस्तवं ॥ तस्मात्तीर्थवरंविद्वान्सर्वपापप्रणा
शनं ॥ ४६ ॥ जगामदानवोद्रष्टुंसर्वपापहरंहरिं ॥ तस्याग्रतोजगादासौस्तवौपापप्रमोचनौ ॥ ४७ ॥ यौपुराभगवान्
प्राहक्रोडरूपीजनार्दनः ॥ तस्मादथागाद्दैत्येंद्रःशालग्राममंमहाफलं ॥ ४८ ॥ यत्रसंनिहितोविष्णुःस्तंभेपुस्थावरेषुच ॥
तत्रसर्वगतंविष्णुंमत्वाचक्रेरतिंबली ॥ ४९ ॥ पूजयन्भगवत्पादौमहाभागवतोमुने ॥ इयंतवोक्तामुनिसंघजुष्टाप्रह्ला-
दतीर्थानुगतिःसुपुण्या ॥ यत्कीर्तनाच्छ्रवणात्स्पर्शनाच्चविमुक्तपापामनुजाभवंति ॥ ५० ॥ इतिश्रीवामनपुराणेवामन-
प्रादुर्भावेप्रह्लादतीर्थयात्रानामचतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ ॥ ॥
नारदउवाच ॥ यान्जप्यान्भगवद्भक्त्याप्रह्लादोदानवोजपत् ॥ गजेंद्रमोक्षणादींस्त्वंचतुरस्तान्वदस्वमे ॥ १ ॥ पुल-
स्त्यउवाच ॥ शृणुष्वकथयिष्यामिजप्यानेतांस्तपोधन ॥ दुःस्वप्ननाशोभवतियैरुक्तैःसंस्मृतैःश्रुतैः ॥ २ ॥ गजेंद्रमो-
क्षणंत्वादौशृणुष्वतदनंतरं ॥ सारस्वतौततःपुण्यौपापप्रशमनौस्तवौ ॥ ३ ॥ सर्वरत्नमयःश्रीमांस्त्रिकूटोनामपर्वतः ॥
सुतःपर्वतराजस्यसुमेरोर्भास्करद्युतेः ॥ ४ ॥ क्षीरोदजलवीच्यग्रैर्धौतामलशिलातलः ॥ उत्थितःसागरंभित्त्वादेवर्षिग-
णसेवितः ॥ ५ ॥ अप्सरोभिःपरिवृतःश्रीमान्प्रस्रवणाकुलः ॥ गंधर्वैःकिन्नरैर्यक्षैःसिद्धचारणगुह्यकैः ॥ ६ ॥ विद्याध-
रैःसपत्नीकैःसंयतैश्चतपस्विभिः ॥ वृकद्वीपगजेंद्रैश्चधृतगात्रोविराजते ॥७॥ पुन्नागैःकर्णिकारैश्चबिल्वामलकपाटलैः ॥

न्नारायणपरायणः ॥ तमेवशरणंदेवंगतःसर्वात्मनातदा ॥ २८ ॥ एकात्मानुगृहीतात्माविशुद्धेनांतरात्मना ॥ जन्मज-
न्मांतराभ्यासाद्भक्तिमान्गरुडध्वजे ॥ २९ ॥ आद्यंदेवंमहादेवंपूजयामासकेशवं ॥ मथितामृतफेनाभंशंखचक्रगदाधरं
॥ ३० ॥ सहस्रशुभनामानमादिदेवमजंविभुं ॥ प्रगृह्यपुष्कराग्रेणकांचनंकमलोद्भवं ॥ आपद्विमोक्षमन्विच्छन्गजः
स्तोत्रमुदीरयन् ॥ ३१ ॥ गजेंद्रउवाच ॥ ॐनमोमूलप्रकृतयेअजितायमहात्मने ॥ अनाश्रितायदेवायनिःस्पृहायन-
मोस्तुते ॥ ३२ ॥ नमआद्यायवामायआर्षायादिप्रवर्तिने ॥ अनंतरायचैकायअव्यक्तायनमोनमः ॥ ३३ ॥ नमोगु-
ह्यायगूढायगुणायगुणवर्तिने ॥ अतर्क्यायाप्रमेयायअतुलायनमोनमः ॥ ३४ ॥ नमःशिवायशांतायनिश्चिंताययश-
स्विने ॥ सनातनायपूर्वायपुराणायनमोनमः ॥ ३५ ॥ नमोस्तुतस्मैदेवायनिर्गुणायगुणात्मने ॥ नमोजगत्प्रतिष्ठाय
गोविंदायनमोनमः ॥ ३६ ॥ नमोस्तुपद्मनाभायसांख्ययोगोद्भवायच ॥ विश्वेश्वरायदेवायशिवायहरयेनमः ॥ ३७ ॥
नमोस्तुतस्मैदेवायनिर्गुणायगुणात्मने ॥ नारायणायविश्वायदेवायपरमात्मने ॥ ३८ ॥ नमोनमःकारणवामनायनारा-
यणायामितविक्रमाय ॥ श्रीशार्ङ्गचक्रासिगदाधरायनमोस्तुतस्मैपुरुषोत्तमाय ॥ ३९ ॥ गुह्यायवेदनिलयायमहोरगाय
सिंहायदैत्यनिधनायचतुर्भुजाय ॥ ब्रह्मेंद्ररुद्रमुनिचारणसंस्तुतायदेवोत्तमायसकलायनमोऽच्युताय ॥ ४० ॥ नागेंद्र-
भोगशयनायचसुप्रियायगोक्षीरहेमशुकनीलघनोपमाय ॥ पीतांबरायमधुकैटभनाशनायविश्वाद्यचारुमुकुटायनमोऽक्ष-
राय ॥ ४१ ॥ नाभिप्रजातकमलस्थचतुर्मुखायक्षीरोदकार्णवनिकेतयशोधराय ॥ नानाविचित्रकनकांगदभूषणायस-
र्वेश्वरायवरदायनमोवराय ॥ ४२ ॥ भक्तिप्रियायवरदीप्तसुदर्शनायदेवेंद्रविघ्नशमनोद्यतपौरुषाय ॥ फुल्लारविंदवि-
मलायतलोचनाययोगेश्वरायवरदायनमोवराय ॥ ४३ ॥ ब्रह्मायनायत्रिदशायनायलोकायनायात्महितायनाय ॥

स्तपोधनः ॥ ६१ ॥ ग्राहग्रस्तंगजेंद्रंतंतंचग्राहंजलेशयात् ॥ उज्जहाराप्रमेयात्मातरसामधुसूदनः ॥ ६२ ॥ जलस्थं
दारयामासग्राहंचक्रेणमाधवः ॥ मोक्षयामासनागेंद्रंपाशेभ्यःशरणागतं ॥ ६३ ॥ एवंहिदेवशापेनहूहूर्गंधर्वसत्तमः ॥
ग्राहत्वमगमत्कृष्णान्मोक्षंप्राप्यदिवंगतः ॥ ६४ ॥ गजोपिविष्णुनास्पृष्टोजातोदिव्यवपुःपुमान् ॥ पापाद्विमुक्तौयुगपद्ग-
जगंधर्वसत्तमौ ॥ ६५ ॥ प्रीतिमान्पुंडरीकाक्षःशरणागतवत्सलः ॥ अभवत्त्वथदेवेशस्ताभ्यांचैवप्रपूजितः ॥ ६६ ॥
इदंचभगवान्योगीगजेंद्रंशरणागतं ॥ प्रोवाचमुनिशार्दूलमधुरंमधुसूदनः ॥ ६७ ॥ भगवानुवाच ॥ योमांत्वांचस-
रश्चेदंग्राहस्यचविदारणं ॥ गुल्मकीचकरेणूनांरूपंमेरुसुतस्यच ॥ ६८ ॥ अश्वत्थंभास्करंगंगांनैमिषारण्यमेवच ॥ सं-
स्मरिष्यंतिमनुजाःप्रयाताःस्थिरबुद्धयः ॥ ६९ ॥ कीर्तयिष्यंतिभक्त्याचश्रोष्यंतिचशुचिव्रताः ॥ दुःस्वप्नोनश्यतेतेषां
सुस्वप्नश्चभविष्यति ॥ ७० ॥ मात्स्यंकौर्मंचवाराहंवामनंतार्क्ष्यमेवच ॥ नारसिंहंचनागेंद्रंसृष्टिप्रलयकारकं ॥ ७१ ॥
एतानिप्रातरुत्थायसंस्मरिष्यंतियेनराः ॥ सर्वपापैःप्रमुच्यंतेपुण्याँल्लोकानवाप्नुयुः ॥ ७२ ॥ पुलस्त्यउवाच ॥ एवमु-
क्त्वाहृषीकेशोगजेंद्रंगरुडध्वजः ॥ स्पर्शयामासहस्तेनगजंगंधर्वमेवच ॥ ७३ ॥ ततोदिव्यवपुर्भूत्वागजेंद्रोमधुसूदनं ॥
जगामविष्णुंशरणंनारायणपरायणः ॥ ७४ ॥ ततोनारायणःश्रीमान्मोक्षयित्वागजोत्तमं ॥ पापबंधाच्चशापाच्चग्राहं
चाद्भुतकर्मकृत् ॥ ७५ ॥ ऋषिभिःस्तूयमानश्चदेवगुह्यपरायणैः ॥ ततःसभगवान्विष्णुर्दुर्विज्ञेयगतिःप्रभुः ॥ ७६ ॥
गजेंद्रमोक्षणंदृष्ट्वादेवाःशक्रपुरोगमाः ॥ ववंदिरेमहात्मानंप्रभुंनारायणंहरिं ॥ ७७ ॥ महर्षयश्चारणाश्चदृष्ट्वागजविमो-
क्षणं ॥ विस्मयोत्फुल्लनयनाःसंस्तुवंतिजनार्दनं ॥ ७८ ॥ प्रजापतिपतिर्ब्रह्माचक्रपाणेर्विचेष्टितं ॥ गजेंद्रमोक्षणंदृष्ट्वा
इदंवचनमब्रवीत् ॥ ७९ ॥ यइदंशृणुयान्नित्यंप्रातरुत्थायमानवः ॥ प्राप्नुयात्परमांसिद्धिंदुःस्वप्नश्चविनश्यति ॥ ८० ॥

चनिशाचराः ॥ प्रेताविनायकाःक्रूरामानुष्याजृंभकाःखगाः ॥१५॥ सिंहादयोयेपशवोदंदशूकाश्चपन्नगाः ॥ सर्वेभवंतु
तेसौम्याविष्णुशंखरवाहताः ॥ १६ ॥ चित्तवृत्तिहरायेचयेजनाःस्मृतिहारकाः ॥ बलौजसांचहर्तारश्छायाविभ्रंशकाश्चये
॥ १७ ॥ येचोपभोगहर्तारोयेचलक्षणनाशकाः ॥ कूष्मांडास्तेप्रणश्यंतुविष्णुचक्ररयाहताः ॥ १८ ॥ बुद्धिस्वास्थ्यंमनः-
स्वास्थ्यंस्वास्थ्यमैंद्रियकंतथा ॥ ममास्तुवासुदेवस्यदेवदेवस्यकीर्तनात् ॥ १९ ॥ पृष्ठेपुरस्तादथदक्षिणोत्तरेविकोणत-
श्चास्तुजनार्दनोहरिः ॥ तमीड्यमीशानमनंतमच्युतंजनार्दनंप्राणपतिंनसीदति ॥ २० ॥ यथापरंब्रह्महरिस्तथापरंज-
गत्स्वरूपंचसएवकेशवः ॥ ऋतेनतेनाच्युतनामकीर्तनात्प्रणाशमेतत्रिविधंममाशुभं ॥ २१ ॥ इत्येवंचात्मरक्षार्थंकृत्वावै
विष्णुपंजरं ॥ संस्थितोसावपिबलीराक्षसःसमुपाद्रवत् ॥ २२ ॥ ततोद्विजनियुक्तयारक्षयारजनीचरः ॥ निर्धू-
तवेगःसहसातस्थौमासचतुष्टयं ॥ २३ ॥ यावद्द्विजस्यदेवर्षेसमाप्तिर्वैसमाधितः ॥ ततोजप्यावसानेऽसौतं
ददर्शनिशाचरं ॥ २४ ॥ दीनंहतबलोत्साहंकांदिशीकंहतौजसं ॥ तंदृष्ट्वाकृपयाविष्टःसमाश्वास्यनिशाचरं
॥ २५ ॥ पप्रच्छगमनेहेतुंसमाचष्टेयथागतं ॥ स्वभावमात्मनोदृष्टुंरक्षयातेजसोनाशं ॥ २६ ॥ कथयित्वा
चतद्रक्षःकारणंविधिवत्ततः ॥ प्रसीदेत्यब्रवीद्विप्रंनिर्विण्णःस्वेनकर्मणा ॥ २७ ॥ बहूनिपापानिमयाकृतानितथा
चसंतोबहवोमयाहताः ॥ २८ ॥ कृताःस्त्रियोमयाबहवोविधवाःपुत्रवर्जिताः ॥ अनागसांचसत्वानामनेकानांक्षयः
कृतः ॥ २९ ॥ तस्मात्पापादहंमोक्षमिच्छामित्वत्प्रसादतः ॥ तत्पापप्रशमायालंकुरुमेधर्मनाशनं ॥ ३० ॥ पाप-
स्यास्यक्षयकरमुपदेशंप्रयच्छमे ॥ वचनंप्राहधर्मार्थहेतुमच्चस्वभाषितं ॥ ३१ ॥ तस्यतद्वचनंश्रुत्वानिशाटस्यद्विजोत्त-
माः ॥ कथंक्रूरस्वभावस्यासतस्तवनिशाचर ॥ सहसैवसमायाताजिज्ञासाधर्मवर्त्मनि ॥ ३२ ॥ राक्षसउवाच ॥ त्वांवै

दोषाद्विशेषतः ॥ निर्विवेकेनचित्तेनपापकर्मसदाकृतं ॥५१॥ आबाल्यान्ममपापेषुनधर्मेषुरतंमनः ॥ तत्पापसंक्षयान्मो-
क्षंप्राप्नुयांयेनतत्त्वतः॥ ५२॥ यानियानिचकर्माणिबालत्वाच्चरितानिच ॥ दुष्टांयोनिमिमांप्राप्यतन्मुक्तिंकथयद्विज ॥५३॥
यद्येतद्द्विजपुत्रत्वंसमाख्यास्यस्यशेषतः ॥ ततःक्षुधार्तान्मत्तस्त्वंनियतंमोक्षमाप्स्यसि ॥५४॥ नचैतत्पापशीलोऽहमद्ययन्नक्षु-
त्पिपासितः ॥ षष्ठेषष्ठेनृशंसात्माभक्षयिष्यामिनिर्घृणः ॥५५॥ एवमुक्तोमुनिसुतस्तेनघोरेणरक्षसा ॥ चिन्तामवापमह-
तीमशक्तस्तदुदीरणे ॥५६॥ सविमृश्यचिरंविप्रःशरणंजातवेदसं ॥ जगामज्ञानदानायसंशयंपरमंगतः ॥ ५७॥ यदिशुश्रू-
षितोवह्निर्गुरुशुश्रूषणादनु ॥ व्रतानिवासुचीर्णानिसप्तार्चिःपातुमांततः ॥५८॥ नमातरंनपितरंगौरवेणयथागुरुं ॥ यथाहम-
वगच्छामितथामांपातुपावकः ॥५९॥ यथागुरुंनमनसाकर्मणामनसापिच ॥ अवजानाम्यहंतेनपातुमांतेनपावकः ॥६०॥
इत्येवंमनसासत्यंकुर्वतःशपथान्मुने ॥ सप्तार्चिपासमादिष्टाप्रादुरासीत्सरस्वती ॥ ६१ ॥ साप्रोवाचद्विजसुतंराक्षस-
ग्रहणाकुलं ॥ माभैर्द्विजसुताहंत्वांमोक्षयाम्यद्यसंकटात् ॥ ६२ ॥ यदस्यरक्षसःश्रेयोजिह्वाग्रेसंस्थितातव ॥ तत्सर्वंकथ-
यिष्यामिततोमोक्षमवाप्स्यसि ॥ ६३ ॥ अदृश्यारक्षसातेनप्रोक्त्वेत्थंचसरस्वती ॥ अदर्शनंगतासोऽपिद्विजःप्राहनिशा-
चरम् ॥ ६४ ॥ ब्राह्मणउवाच ॥ श्रूयतांतवयच्छ्रेयस्तथान्येषांचपापिनां ॥ समस्तपापशुद्ध्यर्थंपुण्योपचयदंचयत्
॥ ६५ ॥ प्रातरुत्थायजप्तव्यंमध्याह्नेह्नःक्षयेऽपिवा ॥ असंशयंसदाजापोजपतांपुष्टिशांतिदः ॥ ६६ ॥ ॐहरिंकृष्णंहृ-
षीकेशंवासुदेवंजनार्दनं ॥ प्रणतोस्मिजगन्नाथंसमेपापंव्यपोहतु ॥ ६७ ॥ चराचरगुरुंनाथंगोविंदंशेषशायिनं ॥ प्रण-
तोऽस्मिपरंदेवंसमेपापंव्यपोहतु ॥ ६८ ॥ शंखिनंचक्रिणंशार्ङ्गधारिणंस्रग्धरंपरं ॥ प्रणतोऽस्मिपतिंलक्ष्म्याःसमेपापंव्य-
पोहतु ॥ ६९ ॥ दामोदरमुदारंतंपुंडरीकाक्षमच्युतं ॥ प्रणतोऽस्मिस्तुतंस्तुत्यैःसमेपापंव्यपोहतु ॥ ७० ॥ नारायणंनरं

चराचरं॥ यच्चज्ञानपरिच्छेद्यंपापंनश्यतुमेतथा ॥९१॥शुभाशुभानिकार्याणिरजःसत्त्वतमांसिच॥ अनेकजन्मकर्मोत्थंपापंन-
श्यतुमेतथा ॥ ९२ ॥ यन्निशायांचयत्प्रातर्यन्मध्याह्नापराह्णयोः॥ संध्ययोश्चकृतंपापंकर्मणामनसागिरा ॥९३॥ यत्तिष्ठ-
तायद्व्रजतायच्चशय्यागतेनमे ॥ कृतंयदशुभंकर्मकायेनमनसापिवा ॥ ९४ ॥ अज्ञानतोज्ञानतोवामदाच्चलितमानसैः ॥
तत्क्षिप्रंविलयंयातुवासुदेवस्यकीर्तनात् ॥ ९५ ॥ परदारपरद्रव्यवांछाद्रोहोद्भवंचयत् ॥ परपीडोद्भवांनिंदांकुर्वतायन्म-
हात्मनां ॥ ९६ ॥ यच्चभोज्येतथापेयेभक्ष्येचोष्येविलेहने ॥ तद्यातुविलयंतोयेयथालवणभाजनम् ॥९७॥ यद्बाल्येयच्च
कौमारेयत्पापंयौवनेमम ॥ वयःपरिणतौयच्चयच्चजन्मांतरेकृतं ॥ ९८ ॥ तन्नारायणगोविंदहरिकृष्णेतिकीर्तनात् ॥ प्र-
यातुविलयंतोयेयथालवणभाजनं ॥ ९९ ॥ विष्णवेवासुदेवायहरयेकेशवायच ॥ जनार्दनायकृष्णायनमोभूयोनमोनमः
॥ १०० ॥ भविष्यन्नरकघ्नायनमःकंसविघातिने ॥ अरिष्टकेशिचाणूरदेवारिक्षयिणेनमः ॥ १०१ ॥ कोऽन्योबलेर्वंच-
यितात्वामृतेवैभविष्यति ॥ कोऽन्योबलवान्नाशयितादर्पंहैहयभूपतेः ॥ १०२ ॥ कःकरिष्यतिचान्योवैसागरेसेतुबंधनं ॥
वधिष्यतिदशग्रीवंकःसामात्यपुरःसरं ॥ १०३ ॥ कस्त्वामृतेऽन्योनन्दस्यगोकुलेरतिमेष्यति ॥ प्रलंबपूतनादीनांत्वामृते
मधुसूदन ॥ १०४ ॥ नियंताप्यथवाशास्तादेवदेवभविष्यति ॥ जपत्येवंनरःपुण्यंवैष्णवंधर्ममुत्तमं ॥ १०५ ॥ इष्टानिष्ट-
प्रसंगेभ्योज्ञानतोज्ञानतोपिवा ॥ कृतंतेनतुयत्पापंसप्तजन्मांतरेणवै ॥ १०६ ॥ महापातकसंज्ञंवातथाचैवोपपातकं ॥
यज्ञादीनिचपुण्यानिजपहोमव्रतानिच ॥ १०७ ॥ नाशयेद्योगिनांसर्वमामपात्रमिवांभसि ॥ नरःसंवत्सरंपूर्णंतिलपा-
त्राणिषोडश ॥ १०८ ॥ अहन्यहनियोदद्यात्पठत्येतच्चतत्समं ॥ अविप्लुतब्रह्मचर्यंसंप्राप्यस्मरणंहरेः ॥ १०९ ॥ वि-
ष्णुलोकमवाप्नोतिसत्यमेतन्मयोदितं ॥ तदेतत्सत्यमुक्तंमेनह्यल्पमपिवैमृषा ॥ राक्षसग्रस्तसर्वांगंतथामामेषमुंचतु

जयनमोस्तुते ॥ ७ ॥ सृष्टिगर्भनमस्तुभ्यंशुचिश्रवःपृथुश्रवः ॥ नमोहिरण्यगर्भायपद्मगर्भायतेनमः ॥ ८ ॥ नमःक-
मलनेत्रायकालनेत्रायवैनमः ॥ कालनाभनमस्तुभ्यंमहानाभनमोस्तुते ॥ ९ ॥ वृष्णिमूलमहामूलमूलावासनमोस्तुते ॥
धर्मावासजलावासश्रीनिवासनमोस्तुते ॥ १० ॥ धर्माध्यक्षप्रजाध्यक्षलोकाध्यक्षनमोस्तुते ॥ सेनाध्यक्षनमस्तुभ्यंका-
लाध्यक्षनमोस्तुते ॥ ११ ॥ गदाधरश्रुतिधरचक्रधारिन्श्रियोधर ॥ वनमालाधरहरेनमस्तेधरणीधर ॥ १२ ॥ आ-
र्ष्णिसेनमहासेननमस्तेस्तुपुरुष्टुत ॥ बहुकल्पमहाकल्पनमस्तेकल्पनामुख ॥ १३ ॥ सर्वात्मन्सर्वगविभोविरिंचेश्वेतके-
शव ॥ नमोनीलमहानीलअनिरुद्धनमोस्तुते ॥ १४ ॥ द्वादशात्मककालात्मन्सामात्मन्परमात्मक ॥ व्योमार्कात्मक
सुब्रह्मन्सूक्ष्मात्मकनमोस्तुते ॥ १५ ॥ हरिकेशमहाकेशगुडाकेशनमोस्तुते ॥ मुंजकेशल्हपोकेशसर्वनाथनमोस्तुते
॥ १६ ॥ सूक्ष्मस्थूलमहास्थूलमहासूक्ष्मभयंकर ॥ श्वेतपीतांबरधरनीलवासोनमोस्तुते ॥ १७ ॥ कुशेशयनमस्तेस्तुप-
द्मशयजलेशय ॥ गोविंदप्रीतिकर्तश्चहंसपीताम्बरप्रिय ॥ १८ ॥ अधोक्षजनमस्तेस्तुशार्ङ्गध्वजजनार्दन ॥ वामनायनम-
स्तुभ्यंनमस्तेमधुसूदन ॥ १९ ॥ सहस्रशीर्षायनमोब्रह्मशीर्षायवैनमः ॥ नमःसहस्रनेत्रायसोमसूर्यानलेक्षण ॥ २० ॥
नमश्चाथर्वशिरसेमहाशीर्षायतेनमः ॥ नमस्तेधर्मनेत्रायमहानेत्रायतेनमः ॥ २१ ॥ नमःसहस्रपादायसहस्रभुजमन्य-
वे ॥ नमोयज्ञवराहायमहारूपायतेनमः ॥ २२ ॥ नमस्तेविश्वदेवायविश्वात्मन्विश्वसंभव ॥ विश्वरूपनमस्तेस्तुत्वत्तो
विश्वमभूदिदम् ॥ २३ ॥ न्यग्रोधस्त्वंमहाशाखस्त्वंमूलकुसुमार्चितः ॥ स्कंधपत्रांकुरलतापल्लवायनमोस्तुते ॥ २४ ॥ मू-
लंतेब्राह्मणाःस्कंधाः ॥ क्षत्रियाभवतःप्रभोवैश्याःशाखास्त्वचःशूद्रावनस्पतेनमोस्तुते ॥ २५ ॥ ब्राह्मणाःसाग्नयोवक्त्रा-

१ कल्प्यते यस्यां कल्पनोपासनासैवमुखं प्राप्त्युपायोयस्यतत्संबुद्धिः

कायोभूतादिर्महाभूतोऽच्युतोद्विजः ॥ ४५ ॥ त्वमूर्ध्वकेतोर्ध्वधरऊर्ध्वरेतानमोस्तुते ॥ महापातकहात्वंचउपपातकहात-
था ॥ ४६ ॥ मुनीशःसर्वपापघ्नस्त्वामहंशरणंगतः ॥ इत्येतत्परमंस्तोत्रंसर्वपापप्रमोचनम् ॥ ४७ ॥ महेश्वरेणकथितं
वाराणस्यांपुरामुने ॥ केशवस्याग्रतोगत्वास्नात्वातीर्थोदकेशुभे ॥ ४८ ॥ उपशांतस्तदाजातोरुद्रःपापोपशांतिदम् ॥ ए-
तत्पवित्रंत्रिपुरघ्नभाषितंपठन्नरोविष्णुपुरेमहर्षे ॥ विमुक्तपापोप्युपशान्तमूर्तिःसंपूज्यतेदेववरैःससिद्धैः ॥ ४९ ॥ इतिश्री-
वामनपुराणेवामनप्रादुर्भावेपापप्रशमनस्तवोनामसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ ॥
पुलस्त्यउवाच ॥ द्वितीयंपापशमनंस्तवंवक्ष्यामितेमुने ॥ येनसम्यगधीतेनपापंनाशंतुगच्छति ॥ १ ॥ मत्स्यंनमस्येदे-
वेशंकूर्मंदेवेशमेवच ॥ हयशीर्षंनमस्येहंभवंविष्णुंत्रिविक्रमं ॥ २ ॥ नमस्येमाधवेशानौहृषीकेशकुमारिलौ ॥ नारायणं
नमस्येहंनमस्तेगरुडासन ॥ ३ ॥ जयेशनरसिंहंचरूपधारंकुरुध्वजं ॥ कामपालमखंडंचनमस्येब्राह्मणप्रियं ॥ ४ ॥
अजितंविश्वकर्माणंपुंडरीकंद्विजप्रियं ॥ हरिंशंभुंनमस्येचब्रह्माणंसप्रजापतिं ॥ ५ ॥ नमस्येशूलबाहुंचदेवंचक्रधरंत-
था ॥ शिवंविष्णुंसुवर्णाक्षंगोपतिंपीतवाससं ॥ ६ ॥ नमस्येचगदापाणिंनमस्येचकुशेशयं ॥ अर्धनारीश्वरंदेवंनमस्ये
पापनाशनं ॥ ७ ॥ गोपालंचसवैकुंठंनमस्येचापराजितं ॥ नमस्येविश्वरूपंचज्येष्ठेशंपंचकंतथा ॥ ८ ॥ उपहारं[illegible]
नमस्येहंमार्कंडेयंसजंबुकं ॥ नमस्येपद्मकिरणंनमस्येवडवामुखं ॥ ९ ॥ कार्तिकेयंनमस्येहं[illegible] ॥ न-
मस्येपद्मकिरणंनमस्येचकुशेशयं ॥ १० ॥ नमस्येस्थाणुमनघंनमस्येवनमालिनं ॥ नमस्येलांगलीशंचनमस्येहंश्रियः
पतिं ॥ ११ ॥ नमस्येचत्रिनयनंनमस्येहव्यवाहनं ॥ नमस्येचत्रिसौवर्णंनमस्येधरणीधरं ॥ १२ ॥ त्रिणाचिकेतंब्र-
ह्माणंनमस्येशशिभूषणं ॥ कपर्दिनंनमस्येचसर्वामयविनाशनं ॥ १३ ॥ नमस्येशशिनंसूर्यंध्रुवंरुद्रंमहौजसं ॥ पद्मना-

शिकांगिरसश्चैवतत्त्वज्ञाःकुरुजांगलान् ॥ ३ ॥ उत्तराशांप्रजग्मुस्तेनदीमनुशतद्रवीम् ॥ शातद्रवेजलेस्नात्वाविप्रास्ते
प्रययुस्ततः ॥ ४ ॥ विधायतत्रसुस्नानंसंपूज्यपितृदेवताः ॥ प्रजग्मुःकिरणांपुण्यांदिनेशकिरणच्युतां ॥ ५ ॥ तस्यांस्ना-
त्वाचदेवर्षेसर्वएवमहर्षयः ॥ ऐरावतींसुपुण्योदांस्नात्वाजग्मुरथेश्वरीं ॥६॥ देविकायाजलेस्नात्वापयोष्ण्याश्चैवतापसाः ॥
अवतीर्णामुनेस्नातुमात्रेयाद्यास्तुतांनदीं ॥ ७ ॥ ततोनिमग्नाददृशुःप्रतिबिंबमथात्मनः ॥ अंतर्जलेद्विजश्रेष्ठमहादा-
श्चर्यकारकं ॥ ८ ॥ उन्मज्जन्तश्चददृशुःपुनर्विस्मितमानसा ॥ ततःस्नात्वासमुत्तीर्णाऋषयःसर्वएवहि ॥ ९ ॥ जग्मुस्त-
तोपितेब्रह्मन्कथयंतःपरस्परं ॥ चिंतयंतश्चसततंकिमेतदितिविस्मिताः ॥ १० ॥ ततोदूरादपश्यंस्तेवनखंडंसुविस्तृतं ॥
घनंघनदलश्यामंखगश्रमविनाशनं ॥ ११ ॥ अतितुंगतयाव्योमआवृण्वानंनरोत्तम ॥ विस्तृताभिर्लताभिस्तुअंतर्भूमिं-
चनारद ॥ १२ ॥ काननंपुष्पितैर्वृक्षैःफलितैश्चततस्ततः ॥ दशार्धबाणसदृशैर्नभस्तारागणैरिव ॥ १३ ॥ तद्दृष्ट्वाकम-
लैर्व्याप्तंपुंडरीकैश्चशोभितं ॥ तद्वत्कोकनदैर्व्याप्तंवनंपद्मवनंयथा ॥ १४ ॥ प्रजग्मुस्तुष्टिमतुलांतेऽह्लादंपरमंययुः ॥ वि-
विशुःप्रीतमनसोहंसाइवमहासरः ॥ १५ ॥ तन्मध्येददृशुःपुण्यमाश्रमंलोकपूजितं ॥ चतुर्णांलोकपालानांवर्गाणांमु-
निसत्तमाः ॥ १६ ॥ धर्माश्रमंप्राङ्मुखंतुपलाशविटपावृतं ॥ प्रतीच्यभिमुखंब्रह्मन्नथपुण्यवनावृतं ॥ १७ ॥ दक्षिणा-
भिमुखंकाम्यंरंभाशोकवनावृतं ॥ उदङ्मुखंचमोक्षस्यशुद्धस्फटिकसंनिभं ॥ १८ ॥ कृतांतेत्वाश्रमीमोक्षःकामस्त्रेतायु-
गेस्थितः ॥ आश्रम्यर्थोद्वापरांतेतिष्यांतेधर्मआश्रमी ॥ १९ ॥ तमाश्रमंहिमुनयोदृष्ट्वात्रेयास्ततोव्ययाः ॥ तत्रैवहि
रतिंचक्रुरखंडेसलिलाप्लुते ॥ २० ॥ धर्माद्योभगवान्विष्णुरखंडइतिविश्रुतः ॥ चतुर्मूर्तिर्जगन्नाथःपूर्वमेवप्रतिष्ठितः
॥ २१ ॥ तमर्चयंतिऋषयोयोगात्मानोबहुश्रुताः ॥ शुश्रूषयाचतपसाब्रह्मचर्येणनारद ॥ २२ ॥ एवंतेन्यवसंस्तत्रस-

त्थंस्तुतोजगन्नाथःसर्वात्मासर्वगोहरिः॥ प्रोवाचभगवान्महर्षिकुरूपनयनंविभो ॥४२॥ ततश्चकारदेवस्यजातकर्मादिकाः
क्रियाः॥ भारद्वाजोमहातेजाबार्हस्पत्यस्तपोधनः ॥४३॥ व्रतबंधंतथेशस्यकृतवान्सर्वशास्त्रवित् ॥ ततोददुःप्रीतिसुता
सर्वएवयथाक्रमं ॥ ४४ ॥ यज्ञोपवीतंपुलहःपुलस्त्यःसितवाससी ॥ मृगाजिनंकुंभयोनिर्भरद्वाजस्तुमेखलां ॥ ४५ ॥
पालाशमददाद्दंडंमरीचिर्ब्रह्मणःसुतः ॥ अक्षसूत्रंवारुणिस्तुकौशचीरमथांगिराः ॥ ४६ ॥ छत्रंददौघुराजश्चउपानद्युगु-
लंभृगुः ॥ कमंडलुंब्रहत्तेजाःप्रादाद्विष्णोर्बृहस्पतिः ॥ ४७ ॥ एवंकृतोपनयनोभगवान्भूतभावनः ॥ संस्तूयमानऋषिभि-
र्वेदान्सांगानधीतवान् ॥ ४८ ॥ भारद्वाजात्सांगिरसात्सामवेदंमहास्वरं ॥ महाव्याहृतिसंयुक्तंगांधर्वसहितंमुने ॥
॥ ४९ ॥ मासेनैकेनभगवान्ज्ञातश्रुतिमहार्णवः ॥ लोकाचारप्रवृत्त्यर्थंबभूवस्तुविशारदः ॥ ५० ॥ [illegible]
गत्वादेवोक्षयोऽव्ययः ॥ प्रोवाचब्राह्मणश्रेष्ठंभारद्वाजमिदंवचः ॥ ५१ ॥ वामनउवाच ॥ ब्रह्मन्व्रजामिमह्यांतुकुरुक्षे-
त्रंमहोदयं ॥ तत्रदैत्यपतेःपुण्योहयमेधःप्रवर्तते ॥ ५२ ॥ समाविष्टानिपश्यत्वंतेजांसिपृथिवीतले ॥ येसंविधानाःसततं
मदंशाःपुण्यवर्धनाः ॥ तेनाहंप्रतिजानामिकुरुक्षेत्रंगतोबलिः ॥ ५३ ॥ भरद्वाजउवाच ॥ स्वेच्छयातिष्ठगच्छवानाहमा-
ज्ञापयामिते ॥ गमिष्यामोवयंविष्णोबलेरध्वरमाखिदः ॥ ५४ ॥ यद्भवंतमहंदेवपरिपृच्छामितद्वद ॥ केषुकेषुविभोनित्यं
स्थानेषुपुरुषोत्तम ॥ सान्निध्यंभवतोब्रूहिज्ञातुमिच्छामितत्त्वतः ॥ ५५ ॥ विष्णुरुवाच ॥ श्रूयतांकथयिष्यामियेषुयेषुगु-
रोत्वहं ॥ निवसामिसुपुण्येषुस्थानेषुबहुरूपवान् ॥ ५६ ॥ ममावतारैर्वसुधानभस्तलंपातालमंभोनिधयोदिवंच ॥ दिशः
समस्तागिरयोंबुदाश्चव्याप्ताभरद्वाजममानुरूपैः ॥ ५७ ॥ येदिव्यायेचभौमाजलगगनचरास्थावरायेचब्रह्मन्सेंद्राः
सार्काःसचंद्रायमवसुवरुणाह्यग्नयःसर्वपालाः ॥ ब्रह्माद्याःस्थावरांताद्विजखगसहितामूर्तिमंतोह्यमुर्तेस्तेसर्वेमत्प्रसूताबहु

मनवंस्थाणुंचकुरुजांगले ॥ वनमालिनमाहुर्मांकिष्किंधावासिनोजनाः ॥ १७॥ वीरंकुवलयारूढंशंखचक्रगदाधरं ॥
श्रीवत्सांकमुदारांगंनर्मदायांश्रियःपतिं ॥ १८ ॥ माहिष्मत्यांत्रिनयनंतत्रैवचहुताशनं ॥ अर्बुदेचत्रिसौपर्णंक्ष्माधरंशूक
रांचले ॥ १९ ॥ तृणाचिकेतंब्रह्मर्षेप्रभासेचकपर्दिनं ॥ तत्रैवात्रापिचख्यातंतृतीयंशशिशेखरं ॥ २० ॥ उदयेशशिनं
सूर्यंध्रुवंचत्रितयस्थितं ॥ हेमकूटेहिरण्याक्षंस्कंदंशरवणेमुने ॥ २१ ॥ महालयेस्मृतंरुद्रमुत्तरेपुकुरुप्वथ ॥ पद्मनाभंमु-
निश्रेष्ठसर्वसौख्यप्रदायकं ॥२२॥ सप्तगोदावरेब्रह्मन्विख्यातंहाटकेश्वरं ॥ तत्रैवचमहाहंसंप्रयागेऽपिमहेश्वरं ॥ २३ ॥
शोणेचरुक्मकवचंकुंडिनेघ्राणतर्पणं ॥ भिल्लीवनेमहायोगंमंत्रेपुपुरुषोत्तमं ॥ २४ ॥ प्लक्षावतरणेविश्वंश्रीनिवासंद्विजो-
त्तमं ॥ सूर्यारकेचतुर्बाहुंमगधायांसुधापतिं ॥ २५ ॥ गिरिव्रजेपशुपतिंश्रीकंठंयमुनातटे ॥ वनस्पतिंसमाख्यातंदंड-
कारण्यवासिनं ॥ २६ ॥ कालिंजरेनीलकंठंसरटवामनुमुत्तमम् ॥ हंसयुक्तंमहाकोश्यांसर्वपापप्रणाशनं ॥२७॥ गो-
कर्णेदक्षिणेशर्वंवासुदेवंप्रजामुखे ॥ विंध्यशृंगेमहागौरंकंथायांमधुसूदनं ॥२८॥ त्रिकूटशिखरेब्रह्मंश्चक्रपाणिनमीश्वरं ॥
लोहदंडेहृषीकेशंकौशलायांमहोदयं ॥ २९ ॥ महावासंसुराष्ट्रेचनवराष्ट्रेयशोधरं ॥ भूधरंदेविकानद्यांविदहायांकुशप्रि-
यं ॥ ३० ॥ गोमत्यांलांदितगदंशंखोद्धारेचशंखिनं ॥ सुनेत्रंसैंधवारण्येशूरंशूरपुरेस्थितं ॥ ३१ ॥ रुद्राख्यंचहिर-
ण्वत्यांवीरभद्रंत्रिविष्टपे ॥ शंकुकर्णेचलीनाभंभीमंशालवनेविदुः ॥३२॥ विश्वामित्रंचघटितेकैलासेवृषभध्वजं ॥ महेशंमहि-
लाशैलेकामरूपंशशिप्रभम् ॥ ३३ ॥ वलभ्यामपिगोमित्रंकटाहेब्राह्मणप्रियं ॥ उपेंद्रंसिंहलद्वीपेशक्राह्वेकुंदमालिनं
॥ ३४ ॥ रसातलेचविख्यातंसहस्राशिरसंमुने ॥ कालाग्निंकपिलंचैवतथान्यंकृत्तिवाससं ॥ ३५ ॥ सुतलेकूर्ममचलंवि-
तलेपंकजाननं ॥ महातलेगुरुख्यातंदेवेशंवृषलेश्वरं ॥ ३६ ॥ तलेसहस्रचरणंसहस्रभुजमीश्वरं ॥ सहस्राख्यंपरि-

माचार्यमहीसशैलारंभेत्रवाताभिहताचचाल ॥ किमासुरीयाश्चहुतानपीहभागान्नगृह्णंतिहुताशनाश्च ॥ ५ ॥ क्षुब्धाकि-
मर्थंमकरालयाविभोऋक्षाणिखेनैवचरंतिपूर्ववत् ॥ दिशःकिमर्थंतमसापरिप्लुतादोषेणकस्याद्यवदस्वमेगुरो ॥ ६ ॥ पुल-
स्त्यउवाच ॥ शुक्रस्तद्वाक्यमाकर्ण्यविरोचनसुतेरितं ॥ अथोज्ञात्वाकारणंचततोवचनमब्रवीत् ॥ ७ ॥ शुक्रउवाच ॥
शृणुष्वदैत्येश्वरयेनभागान्नामीप्रयच्छंतिमहासुरेभ्यः ॥ हुताशनामंत्रहुतास्त्वमीभिर्नूनंसमागच्छतिवासुदेवः ॥ ८ ॥
तदंघ्रिविक्षेपमपारयंतीमहीसशैलाचलितादिशश्च ॥ तस्थांबलंगांमकरालयाश्चउद्वृत्तवेलादितिजाद्यजाताः ॥ ९ ॥ पुल-
स्त्यउवाच ॥ शुक्रस्यवचनंश्रुत्वाबलिर्भार्गवमब्रवीत् ॥ धर्मसत्यंचपथ्यंचसत्त्वोत्साहसमन्वितं ॥ १० ॥ बलिरुवाच ॥
आयातेवासुदेवेवदममभगवन्धर्मकामार्थयुक्तंकिंकार्यंकिंचदेयंमणिकनकमथोराज्यमूर्वीधनंवा ॥ किंवावाच्यंमुरारेर्निज-
हितमथवातद्धितंवाप्रयुंजेतथ्यंपथ्यंप्रियंभोवदममशुभदंतत्करिष्येनचान्यत् ॥ ११ ॥ पुलस्त्यउवाच ॥ तद्वाक्यंभार्गवः
श्रुत्वादैत्यनाथेरितंमहत् ॥ विचिंत्यनारदःप्राहभूतभव्यार्थमीश्वरः ॥ १२ ॥ शुक्रउवाच ॥ त्वयाकृतायज्ञभुजोसुरेंद्रा
बहिष्कृतायेश्रुतिदृष्टमार्गाः ॥ श्रुतिःप्रमाणंमखभागभाजिनःसुरास्तदर्थंहरिरभ्युपैति ॥ १३ ॥ तस्याध्वरंदैत्यसमाग-
तस्यकार्यंकिंशृणुत्वंपरिपृच्छसेयत् ॥ कार्यंनदेयंहिविभोतृणाग्रंयदध्वरंभूकनकादिकंवा ॥१४॥ वाच्यंतथासामनिरर्थ-
कंविभोकस्त्वांवरंदातुमलंहिशक्नुयात् ॥ यस्योदरेभूर्भुवनाकपालरसातलेशानिवसंतिनित्यशः ॥ १५ ॥ बलिरुवाच ॥
मयातवोक्तंवचनंहिभार्गवनचार्थिनेकिंचनदातुमुत्सहे ॥ समागतेप्यर्थिनिहीनवृत्ततद्वाद्विदेवेकथमागतेति ॥ १६ ॥ ज-
नार्दनेलोकपतौमहर्षेसमागतेनास्तिकथंनुवच्मि ॥ एवंचश्रूयतेलोकेसतांकथयतांविभो ॥ १७ ॥ सद्भावोब्राह्मणेष्वे-
वकर्तव्योभूतिमिच्छता ॥ दृश्यतेऽपितथातच्चसत्यंब्राह्मणपुंगव ॥ १८ ॥ पूर्वाभ्यासेनकर्माणिसंभवंतिनृणांस्फुटं ॥ वा-

सांप्रतं ॥ कोऽप्यस्माकंछलयितुंस्वरूपीभुविसंस्थितः ॥ ३८ ॥ इत्युक्त्वावचनंपत्नींमंत्रैस्तंराक्षसात्मजं ॥ बबंधोल्लि-
ख्यवसुधांसकुशेनाथपाणिना ॥ ३९ ॥ एतस्मिन्नंतरेप्राप्ताशूर्पाक्षीविप्रबालकं ॥ अंतर्द्धानंगताभूमौगृहेचिक्षेपदूरतः
॥ ४० ॥ सक्षिप्तमात्रंजग्राहकोशकारस्तुपुत्रकं ॥ साचाभ्येत्यग्रहीतुंस्वंनाशकद्राक्षसीसुतं ॥ ४१ ॥ इतश्चेतश्चवि-
भ्रष्टासाभर्तारमुपागता ॥ कथयामासयद्वृत्तंस्वकीयात्मजहारणं ॥ ४२ ॥ एवंगतायांराक्षस्यांब्राह्मणेनमहात्मना ॥
सराक्षसशिशुर्ब्रह्मन्भार्यायैविनिवेदितः ॥ ४३ ॥ कपिलायाःसवत्सायाःपित्रात्मतनयस्तदा ॥ दधासंतोपि-
तोत्यर्थंक्षीरेणेक्षुरसेनच ॥ ४४ ॥ द्वावेववर्द्धितौबालौसंजातौसप्तवार्षिकौ ॥ पित्राचकृतनामानौनिशाकरदिवाकरौ
॥ ४५ ॥ नैशाकरिर्दिवाकीर्तिर्निशाकीर्तिःस्वपुत्रकः ॥ तयोश्चकारविप्रोसौव्रतबंधक्रियांक्रमात् ॥ ४६ ॥ व्रतबंधेकृते
वेदंपपाठासौदिवाकरः ॥ निशाकरोजडतयानपपाठेतिनःश्रुतं ॥ ४७ ॥ तंबांधवाःस्वपितरौमाताभ्रातागुरुस्तथा ॥
पर्यनिंदंस्तथान्येचजनामलयवासिनः ॥ ४८ ॥ ततःसपित्राक्रुद्धेनक्षिप्तःकूपेनिरूदके ॥ महाशिलांतदुपरिपितात-
स्याथव्यक्षिपत् ॥ ४९ ॥ एवंक्षिप्तस्तदाकूपेबहुवर्षगणान्स्थितः ॥ तत्रास्त्यामलकीगुल्मःपोपायफलितोभवत् ॥ ५० ॥
ततोदशसुवर्षेषुसमतीतेषुभार्गव ॥ तस्यमातागमत्कूपंतमपश्यच्छिलान्वितं ॥ ५१ ॥ सादृष्ट्वानिचितंकूपेशिलयागिरिक-
ल्पया ॥ उच्चैःप्रोवाचकेनेयंकूपोपरिशिलाकृता ॥ ५२ ॥ कूपांतस्थःसुतोवाणींश्रुत्वामातुर्निशाकरः ॥ प्राहाम्बदत्ता
तातेनकूपोपरिशिलात्वियं ॥ ५३ ॥ सातिभीताब्रवीत्कोसिकूपांतस्थोऽद्भुतस्वरः ॥ सोप्याहतवपुत्रोस्मिनिशाकर
इतिश्रुतः ॥ ५४ ॥ साब्रवीत्तनयोमेस्तिनाम्नाख्यातोदिवाकरः ॥ निशाकरेतिनाम्नाचनकश्चित्तनयोस्तिमे ॥ ५५ ॥ सचत-
त्पूर्वचरितंमातुःनिरवशेषतः ॥ कथयामासपुत्रोसौयद्वृत्तंपूर्वमेवाहि ॥ ५६ ॥ साश्रुत्वातांशिलांसुभ्रूःसमुत्क्षिप्यान्यतोऽक्षि-

मां ॥ द्वारमुद्घाटयस्वाद्यनिर्गमिष्यामिसत्वरम् ॥७६॥ साप्यब्रवीद्दिवाव्याघ्रलोकोऽयंपरिपश्यति ॥ रात्रावुद्घाटयिष्या-
मितवोरंस्यावचेच्छया ॥ ७७॥ तामेवाहमवोचंवैकालक्षेपोनमेक्षमः ॥ तस्मादुद्घाटयद्वारंमांबन्धाच्चविमोचय ॥ ७८॥
ततःसापिवरश्रोणीद्वारमुद्घाटयांचक्रे ॥ उद्घाटितेततोद्वारेनिर्गतोऽहंबहिःक्षणात् ॥ ७९ ॥ निगडादयश्चपाशाश्च
च्छिन्नाबलवतामया ॥ सातदानृपतेर्भार्यागृहीतारंतुमिच्छाता ॥८०॥ ततोदृष्टोऽस्मिन्नृपतेर्भृत्यैरतुलविक्रमैः ॥ शस्त्रह-
स्तैःसर्वतश्चतैरहंपरिवेष्टितः ॥ ८१ ॥ महापाशैःशृंखलाभिःसमाहत्यचमुद्गरैः ॥ बद्धस्तानब्रवंमैवंवैमांहंतुंयूयमर्हत ॥
॥ ८२ ॥ तेचमद्वचनंश्रुत्वामामेवंरजनीचरं ॥ वटवृक्षेसमुद्बध्याघातयन्वैतपोधन ॥ ८३ ॥ भूयस्ततश्चनरकंपरदारानि-
षेवणात् ॥ गतोवर्षसहस्रांतेजातोहंश्वेतगर्दभः ॥ ८४ ॥ ब्राह्मणस्याग्निवेश्यस्यगृहेबहुकलत्रिणः ॥ तत्रापिसर्ववि-
ज्ञानंप्रत्यभासतमेतदा ॥ ८५ ॥ उपवाह्यःकृतश्चास्मिद्विजयोषिद्भिरादरात् ॥ एकदानवराष्ट्रीयाभार्यातस्याग्रजन्मनः
॥ ८६ ॥ विमतिर्नामतःख्यातागंतुमैच्छद्गृहेपितुः ॥ तामुवाचपतिर्गच्छआरुह्यैनंचगर्दभं ॥ ८७ ॥ मासेनागमनंकार्यं
नस्थेयंपरतस्ततः ॥ इत्येवमुक्तासाभर्त्रातन्वीचारुह्यगर्दभं ॥ ८८ ॥ बंधनादवमुच्याथजगामत्वरितामुने ॥ ततोर्द्धप-
थिसातन्वीमत्पृष्ठादवरुह्यवै ॥ ८९ ॥ अवतीर्णानदींस्नातुंसुरूपामार्द्रवाससं ॥ सर्वैरंगैरूपवतींदृष्ट्वातामहमाद्रवं
॥ ९० ॥ मयाचाभिहतातूर्णंपतितापृथिवीतले ॥ तस्याउपरिभीतातपतितोऽहंतदातुरः ॥ ९१ ॥ दृष्टोऽभवंतदातस्या
नृणातदनुसारिणा ॥ तदोद्यम्यसयष्टिंमांसमधावत्त्वरान्वितः ॥९२॥ तद्भयात्तांपरित्यज्यप्रद्रुतोदक्षिणामुखः॥ ततोऽ-
भिद्रवतस्तूर्णंखलीनरसनामुने ॥ ९३ ॥ समासन्नातदाब्रह्मन्ममासौप्राणनाशने ॥ तत्रासक्तस्यपड्ढात्राद्भून्मेजीवि-
तक्षयः ॥ ९४ ॥ ततोस्मिन्नरकंभूयतस्मान्मुक्तोऽभवंशुकः ॥ महारण्येततोबद्धःशबरेणदुरात्मना ॥ ९५ ॥ पंजरेन्य-

स्यविक्रीतोवणिक्पुत्रायशालिने ॥ तेनाप्यंतःपुरतरेयुवतीनांसमीपतः ॥ ९६ ॥ सर्वशास्त्रविदित्येवदोपन्नश्चेत्यवस्थि-
तः ॥ तत्रासतस्तरुण्यस्ताओदनादिफलादिभिः ॥ ९७ ॥ पक्वैश्चदाडिमफलैःपोषयन्त्योदिनेदिने ॥ एकदापद्मपत्रा-
क्षीश्यामापीनपयोधरा ॥ ९८ ॥ सुश्रोणीतनुमध्याचवणिक्पुत्रीप्रियाशुभा ॥ नाम्नाचंद्रावलीनामसमुद्धृत्याथपंजरं
॥९९॥ मांजग्राहसुचार्वंगीकराभ्यांचारुहासिनी ॥ चकारोपरिपीनाभ्यांस्तनाभ्यांसातदाचमां ॥१००॥ ततोहंकृतवान्
भावंतस्यांविलसितुंप्लवन् ॥ ततोनुप्लवमानोहंहारेमर्कटबंधने ॥ १ ॥ तत्राहंपापसंयुक्तोमृतश्चतदनंतरं ॥ भूयोपि
नरकंघोरंप्रपन्नोस्मिसुदुर्मतिः ॥ २ ॥ तस्मान्मृतोवृषत्वंचगतश्चांडालपक्कणे[1] ॥ सचैकदामांशकटेनियुज्यस्वांवि-
लासिनीं ॥ ३ ॥ समारोप्यमहातेजागंतुंकृतमतिर्वनं ॥ तत्राग्रतःसचांडालोगतःसाचास्यपृष्ठतः ॥ ४ ॥ गायंतीयाति
तच्छ्रुत्वाजातोऽहंव्यथितेंद्रियः ॥ पृष्ठतस्तुसमालोक्यविपर्यस्तस्तथाप्लुतः ॥ ५ ॥ पतितोभूमिमगमंक्षणेनक्षणविभ्र-
मात् ॥ योक्त्रेणबद्धएवास्मिपंचत्वमगमंततः ॥ ६ ॥ भूयोनिमग्नोनरकेदशवर्षशतान्यहं ॥ जातस्तवगृहेतातसोऽहंजा-
तिमनुस्मरन् ॥ तावंत्येवाद्यजन्मानिस्मरामिचानुपूर्वशः ॥ ७ ॥ पूर्वाभ्यासाच्चशास्त्राणांवचनंचागतंमम ॥ तदहंज्ञा-
तविज्ञानोनाचरिष्येकथंचन ॥ ८ ॥ पापानिघोररूपाणिमनसाकर्मणागिरा ॥ शुभंवाप्यशुभंवापिस्वाध्यायंशास्त्रजी-
विकां ॥ ९ ॥ बंधनंवावधोवापिपूर्वाभ्यासेनजायते ॥ जातिंयदापौर्विकींतुस्मरतेतातमानवः ॥ तदासतेभ्यःपापेभ्योनि-
वृत्तिंहिकरिष्यति ॥ १० ॥ तस्माद्गमिष्येशुभवर्धनायपापक्षयायाथसुनेह्यरण्यं ॥ भवान्दिवाकीर्तिमिमंसुपुत्रंगृहस्थ-
धर्मेविनियोजयस्व ॥ ११ ॥ बलिरुवाच ॥ इत्येवमुक्तःसनिशाकरस्तदाप्रणम्यमातापितरौमहर्षे ॥ जगामपुण्यंसदनं

१ पक्कणं शवरालयमित्यमरः ।

मुरारेःस्व्यातंवदयाश्रममाद्यमेशं ॥ १२ ॥ एवंपुराभ्यासरतस्यपुंसोभवंतिदानाध्ययनादिकानि ॥ तस्मात्पूर्वंद्विजवर्य
वैमयात्वभ्यस्तमासीन्ननतुतेब्रवीमि ॥ १३ ॥ दानंतपोवाध्ययनंमहर्षेस्तेयंमहापातकमग्निदाहः ॥ ज्ञानानिचैवाभ्य-
सनाच्चपूर्वंभवंतिधर्मार्थयशांसिनान्यथा ॥ १४ ॥ इत्येवमुक्तोबलवान्सशुक्रंदैत्येश्वरःस्वंगुरुमीशितारं ॥ ध्यायंस्तदातं
मधुकैटभारिंनारायणंचक्रगदासिपाणिम् ॥ १५ ॥ इतिश्रीवामनपुराणेशुक्रबलिसंवादोनामैकनवतितमोऽध्यायः ॥९१॥
पुलस्त्यउवाच ॥ एतस्मिन्नंतरेप्राप्तोभगवान्वामनाकृतिः ॥ यज्ञवाटसमीपेसउच्चैर्वचनमब्रवीत् ॥ १ ॥ ॐकारपूर्वाः
श्रुतयोमखेऽस्मिंस्तिष्ठंतिरूपेणतपोधनानां ॥ यज्ञोऽश्वमेधःप्रवरःक्रतूनांयुक्तंयथास्यात्कुरुदैत्यनाथ ॥ २ ॥ इत्थंवचन-
माकर्ण्यदानवाधिपतिर्वशी ॥ सार्घपात्रःसमभ्यागाद्यत्रदेवःस्थितोऽभवत् ॥ ३ ॥ ततःसदेवदेवेशंपूजयित्वाविधानतः ॥
प्रोवाचभगवन्ब्रूहिकिंददामितवमानद ॥ ४ ॥ ततोब्रवीन्मधुरिपुर्दैत्यराजंतमव्ययः ॥ विहस्यसुचिरंकालंभरद्वाजमवे-
क्ष्यच ॥ ५ ॥ गुरोर्मदीयस्यगुरुस्तस्यास्त्यग्निपरिग्रहः ॥ नसधारयतेभूम्यांपारक्यायांचपावकं ॥ ६ ॥ तदर्थमभि
याचेयंममदानवपार्थिव ॥ मेशरीरप्रमाणेनदेहिराजन्क्रमत्रयं ॥ ७ ॥ मुरारिवचनंश्रुत्वाबलिर्भार्यामवेक्ष्यच ॥ बाणंच
तनयंवीक्ष्यइदंवचनमब्रवीत् ॥ ८ ॥ नकेवलंप्रमाणेनवामनोऽयंलघुप्रियः ॥ येनक्रमत्रयंचोक्तंयाचितेमद्विधेपिच ॥ ९ ॥
प्रायोविधातात्पधियांनराणांबहिःकृतानांखलुदिव्यपुण्यैः ॥ धनादिकंभूरिनवैददातियथैवविष्णुर्नबहुप्रयासः ॥ १० ॥
नददातिविधिस्तस्ययस्यभाग्यविपर्ययः ॥ मयिदातरियश्चायंयाचतेचक्रमत्रयं ॥ ११ ॥ इत्येवमुक्त्वावचनंमहात्माभूयो-
ऽप्युवाचाथहरिंसुरारिः ॥ यावच्चविष्णोगजवाजिभूमिदासीहिरण्यंयदपीप्सितंच ॥ १२ ॥ भवांश्चयाचिताविष्णोत्वहं
दाताजगत्पतिः ॥ दातुंवैममलज्जेयंकथंनस्यात्पदत्रये ॥ १३ ॥ रसातलंस्वांपृथिवींभुवंनाकमथापिवा ॥ एतेभ्यःक-

तमंदद्यांस्वस्थोयाचस्ववामन ॥ १४ ॥ वामनउवाच ॥ गजाश्वभूहिरण्यादितदर्थिभ्यःप्रदीयताम् ॥ एतावद्देवसंप्रा-
र्थींदेहिराजन्पदत्रयं ॥ १५ ॥ इत्येवमुक्तेवचनेवामनेनमहात्मना ॥ बलिर्भृंगारमादायददौविष्णोःक्रमत्रयं ॥ १६ ॥
पाणौतुपतितेतोयेदिव्यंरूपंचकारह ॥ त्रैलोक्यक्रमणार्थायवज्ररूपंजगन्मयं ॥ १७ ॥ पादेभूमिस्तथाजंघेनभस्त्रैलो-
क्यवंदितम् ॥ सत्यंतपोजानुयुग्मेऊरूस्तोमेरुमंदरौ ॥ १८ ॥ विश्वेदेवाःकटीभागेमरुतोबस्तिशीर्षयोः ॥ लिंगस्थितो
मन्मथश्चवृषणस्थःप्रजापतिः ॥ १९ ॥ कुक्षिस्थाअर्णवाःसप्तजठरेभुवनान्यथो ॥ वलिपुत्रिपुनद्यश्चयज्ञोऽस्तर्जठरेस्थि-
तः ॥ २० ॥ इष्टापूर्तादयःसर्वाःक्रियामंत्राश्चसंस्थिताः ॥ पृष्ठस्थावसवोदेवाःस्कंधोरुद्रैरधिष्ठितः ॥ २१ ॥ बाहवश्च
दिशःसर्वावसवोष्टौकराःस्मृताः ॥ हृदयेसंस्थितोब्रह्माकुलिशोहृदयास्थिषु ॥ २२ ॥ श्रीसहस्रमुरोमध्येचंद्रमामनसि
स्थितः ॥ ग्रीवाऽदितिर्देवमाताविद्यास्तद्वलयेस्थिताः ॥ २३ ॥ मुखेतुसाग्नयोविप्राःसंस्कारादशनच्छदा ॥ धर्मकामार्थ
मोक्षाश्चशास्त्रैश्चैवसमन्विताः ॥ २४ ॥ लक्ष्म्यासहललाटस्थौश्रवणस्थौहिचाश्विनौ ॥ श्वासस्थोमातरिश्वाचमरुतः
सर्वसंधिषु ॥ २५ ॥ सर्वसूक्तानिदशनाजिह्वादेवीसरस्वती ॥ चंद्रादित्यौचनयनेपक्ष्मस्थाःकृत्तिकादयः ॥ २६ ॥
शिखादेवदेवस्यभ्रुवोर्मध्येव्यवस्थिताः ॥ तारकारोमकूपेभ्योरोमाणिचमहर्षयः ॥ २७ ॥ गुणैःसर्वमयोभूत्वाभगवा-
न्भूतभावनः ॥ क्रमेणैकेनजगतींजहारसचराचरां ॥ २८ ॥ भूमिंविक्रममाणस्यमहारूपस्यतस्यवै ॥ दक्षिणोऽभूत्त-
तश्चेंदुःसूर्योभूत्सव्यतस्तथा ॥ २९ ॥ तृतीयक्रमणेनाथस्वर्महर्जनतापसाः ॥ क्रांतास्तद्धैनवैराजन्नर्धेनापूर्यताम्बरं
॥ ३० ॥ ततःप्रवर्धितोब्रह्मन्विष्णुर्वैदक्षिणांतरे ॥ ब्रह्मांडोदरमाहत्यनिरालोकंजगामसः ॥ ३१ ॥ विश्वांघ्रिणाप्र-

१ सुवर्णपात्रविशेषः 'झारी' इतिभाषायाम् ।

सरताकटाहेभेदितेऽम्बरात् ॥ कुटिलाविष्णुपादात्तुससाराकुलिताततः ॥ ३२ ॥ तस्याविष्णुपदीत्येवंतांस्तुवंतिचता-
पसाः ॥ भगवानप्यसंपूर्णेतृतीयेनुक्रमेविभुः ॥ ३३ ॥ समभ्येत्यबलिंप्राहईषत्प्रस्फुरिताधरः ॥ ऋणेभवतिदैत्येंद्रबं-
धनंघोरदर्शनं ॥ ३४ ॥ त्वंपूरयपदंतन्मेनोचेद्बंधंप्रतीच्छमे ॥ तन्मुरारिवचःश्रुत्वाविहस्याथबलेःसुतः ॥ बाणःप्राहामरप-
तिंवचनंहेतुसंयुतं ॥३५॥ बाणासुरउवाच ॥ कृत्वामहीमल्पतरांजगत्पतेस्वयंविधाताभुवनेश्वराणां ॥ कथंबलिंप्रार्थयसे
सुविस्तृतांयांप्राग्भवान्नोविपुलांचकार ॥ ३६ ॥ विभोमहीयावतीवत्वयाद्यसृष्टासमेताभुवनांतराले ॥ दत्ताचतातेनहि
तावतीयंकिंवाक्छलेनैषनिबध्यतेऽद्य ॥ ३७ ॥ यथैवशक्त्याभवताहिपूर्वंतथैवशक्त्यादितिजेश्वरोसौ ॥ शक्तस्तुसम्पूज-
यितुंमुरारेप्रसीदमाबंधनमादिशस्व ॥ ३८ ॥ प्रोक्तंश्रुतौभवतापीशवाक्यंदानंपात्रेजायतेसौख्यदायि ॥ देशेपुण्येतद्वदे-
वापिकालेतच्चाशेषंदृश्यतेचक्रपाणौ ॥ ३९ ॥ दानंभूमिःसर्वकामप्रदाताभवान्पात्रंदेवदेवोऽजितात्मा ॥ कालोजेष्ठामूल-
योगेमृगांकःकुरुक्षेत्रंपुण्यदेशःप्रसिद्धः ॥ ४० ॥ किंवादेवैर्मद्विधैर्बुद्धिहीनैःशिक्षांनेयःसाधुवासाधुचैव ॥ स्वयंश्रुतीनामपि
चादिकर्ताव्यवस्थितःसदसद्योजगद्वै ॥ ४१ ॥ कृत्वाप्रमाणंस्वयमेवहीनंपदत्रयंयाचितवांस्तुयच्च ॥ किंत्वंहिगृह्णासिवि-
भोमहात्मारूपेणलोकप्रतिवांदितेन ॥ ४२ ॥ नात्राश्चर्यंयज्जगद्वैसमग्रंक्रमत्रयेणैवपूर्णंतवाद्य ॥ क्रमेणभोलंघयितुंसम-
र्थोमहींसमग्रांननुलोकनाथ ॥ ४३ ॥ प्रमाणहीनांस्वयमेवकृत्वावसुंधरांमाधवपद्मनाभ ॥ विष्णोनिबध्नासिकथंबलिंत्वं
विभुर्यदेवेच्छसितत्कुरुष्व ॥ ४४ ॥ पुलस्त्यउवाच ॥ इत्येवमुक्तेवचनेबलिनाबलिसूनुना ॥ प्रोवाचभगवान्वाक्यं
ह्यादिकर्ताजनार्दनः ॥ ४५ ॥ त्रिविक्रमउवाच ॥ यान्युक्तानिवचांसीत्थंत्वयाबालेयसांप्रतं ॥ तेषांवैहेतुसंयुक्तंशृणु
प्रत्युत्तरंमम ॥ ४६ ॥ पूर्वमुक्तस्तवपितामयाराजन्पदत्रयं ॥ देहिमह्यंप्रमाणेनतदेतत्समनुष्ठितं ॥ ४७ ॥ किंनवे-

त्तिप्रमाणंमेबलिस्तवपितासुरः ॥ प्रायच्छद्येननिःशंकंममभानंपदत्रयं ॥ ४८ ॥ सत्यंक्रमेणचैकेनक्रमेयंभूर्भुवादिकं ॥
बलेरपिहितार्थायकृतमेतत्क्रमद्वयं ॥ ४९ ॥ तस्माद्यन्ममबालेयत्वत्पित्राम्बुकरेमहत् ॥ दत्तंतेनायुरेतस्यकल्पंयाव-
द्भविष्यति ॥ ५० ॥ इदमुक्त्वाबलिसुतंबाणंदेवस्त्रिविक्रमः ॥ प्रोवाचबलिमभ्येत्यवचनंमधुराक्षरं ॥५१॥ श्रीभगवानु-
वाच ॥ आपूरणाद्दक्षिणायागच्छराजन्महाफलं ॥ सुतलंनामपातालंवसतत्रनिरामयः ॥ ५२ ॥ बलिरुवाच ॥ सुतले
वसतोनाथममभोगाःकुतोऽव्ययाः ॥ भविष्यंतितुयेनाहंवसिष्यामिनिरामयः ॥ ५३ ॥ त्रिविक्रमउवाच ॥ सुतलस्थ-
स्यदैत्येंद्रयानिभोग्यानितेऽधुना ॥ भविष्यंतिमहार्हाणितानिवक्ष्यामिसर्वशः ॥ ५४ ॥ दानान्यविधिदत्तानिश्राद्धान्य-
श्रोत्रियाणिच ॥ तथाधीतान्यव्रतिभिर्दास्यंतिभवतःफलं ॥ ५५ ॥ तथान्यमुत्सवंपुण्यंवृत्तेशक्रमहोत्सवे ॥ दीपप्रदान-
नामासौतवभावीमहोत्सवः ॥ ५६ ॥ तत्रत्वांनरशार्दूलाहृष्टाःपुष्टाःस्वलंकृताः ॥ पुष्पदीपप्रदानेनअर्चयिष्यंतियत्नतः
॥ ५७ ॥ तत्रोत्सवोमुख्यतमोभविष्यतिसचापिलोकेतवनामचिह्नितः ॥ यथैवराज्येभवतस्तुसांप्रतंतथैवसाभाव्यथकौ-
मुदीति ॥ ५८ ॥ इत्येवमुक्त्वामधुहादितीश्वरंविसर्जयित्वासुततंसभार्यं ॥ उर्वींसमादायजगामतूर्णंसशक्रब्रह्मामरसंघ-
जुष्टः ॥ ५९ ॥ दत्वामघोनेमधुजित्त्रिविष्टपंकृत्वाचदेवान्मखभागभोगिनः ॥ अंतर्दधेविश्वपतिर्महेशःसपश्यतामेवसुरा-
धिपानां ॥ ६० ॥ स्वर्गंगतेधातरिवासुदेवेशाल्वोऽसुराणांमहताबलेन ॥ कृत्वापुरंसौभमितिप्रसिद्धंतदांतरिक्षेविचचार
कामात् ॥ ६१ ॥ मयश्चकामात्त्रिपुरंमहात्मासुवर्णताम्रायसमुग्रसौख्यं ॥ सतारकाख्यःसहवैद्युतेनसंतिष्ठतेमित्रकलत्र-
बांधवः ॥ ६२ ॥ बाणोऽपिदेवेऽथगतेत्रिविष्टपंबद्धेबलौचापिरसातलस्थे ॥ कृत्वासुगुप्तंभुविशोणिताख्यंपुरंसचास्तेसह
दानवेंद्रैः ॥ ६३ ॥ एवंपुराचक्रधरेणविष्णुनाबद्धोबलिर्वामनरूपधारिणा ॥ शक्रप्रियार्थंसुरकार्यसिद्धयेहितायविप्रर्षभ-

गोद्विजानां ॥ ६४ ॥ प्रादुर्भवस्तेकथितोमहर्षेपुण्यःशुचिर्वामनस्याघहारी ॥ श्रुतेयस्मिन्कीर्तितेसंस्मृतेचपापंयातिप्र-
क्षयंपुण्यमेति ॥ ६५ ॥ एतत्प्रोक्तंवामनीयंचरित्रंबद्धोबलिःपुण्यकीर्तिर्यथासौ ॥ यच्चैवान्यच्छ्रोतुकामोऽसिविप्रतत्तेव-
क्ष्येब्रूहिब्रह्मन्नशेषम् ॥ ६६ ॥ इतिश्रीवामनपुराणेबलिबंधनंनामद्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥
नारदउवाच ॥ श्रुतंयथाभगवताबलिर्बद्धोमहात्मना ॥ किमन्यत्त्विहप्रष्टव्यंतच्छ्रुत्वाकथयामिते ॥ १ ॥ भगवा-
न्देवराजायविष्णुर्दत्वात्रिविष्टपं ॥ अंतर्धायगतःक्वासौसर्वात्मातातकथ्यतां ॥ २ ॥ परिचर्यार्थविधिनाब्रह्मा
पूजादिनाहरिं ॥ पप्रच्छकिंचिरेणाथभवतागमनंकृतं ॥३॥ अथोवाचजगत्स्वामीमयाकार्यंमहत्कृतं ॥ सुराणांरिपुभोगा-
र्थंस्वयंभोबलिबंधनं ॥ ४ ॥ पितामहस्तद्वचनंश्रुत्वामुदितमानसः ॥ कथंकथमितिप्राहत्वंमांद्रष्टुमिहार्हसि ॥ ५ ॥ इ-
त्येवमुक्तेभगवान्वचनेगरुडध्वजः ॥ दर्शयामासतद्रूपंसर्वदेवमयंलघु ॥६॥ तंदृष्ट्वापुंडरीकाक्षंयोजनायुतविस्तृतं ॥ तावा-
नेवोर्ध्वमानेनततोयंप्रणतोभवत् ॥ ७ ॥ सम्यक्सुचरितंसाधुसाधुसाध्वित्युदीर्यच ॥ भक्तिंगतोमहादेवेपद्मजःस्तोत्रमै-
रयत् ॥ ८ ॥ ॐनमस्ते देवाधिदेव वासुदेव एकशृंग बहुरूप वृषाकपे भूतभावन सुरासुरवृष सुरासुरमथन सुरपति-
वास सुरनिर्माण अविघ्न कपिल महाकपिल विष्वक्सेन नारायण ध्रुवध्वज भालध्वज वैकुंठ पुरुषोत्तम वरेण्य वि-
ष्णो अपराजित जय जयंत विजय कृतावर्त महादेव अनादे अनंत अनाद्यंतमध्यनिधन पुरंजय धनंजय सुरस्तुत
पृथुश्रवः पृश्निगर्भ हिरण्यगर्भ कमलगर्भ कमलायताक्ष कमलालयाप्रिय वृष्णिमूल भूताधिवास वर्गाध्यक्ष गदाधर
श्रीधर वनमालाधर लक्ष्मीधर धरणीधर पद्मनाभ विरिंचे आर्ष्णिसेन महासेन सेनाध्यक्ष परिष्टुत बहुकल्प महाकल्प

कल्पनामुख अनिरुद्ध सर्वंग सर्वात्मक द्वादशात्मक सर्वात्मक सोमात्मक कलात्मक भूतात्मक रमात्मक सनातन मुंजकेश हरिकेश हृषीकेश गुडाकेश केतुमन् नील सूक्ष्म स्थूल पीत रक्त श्वेत श्वेताधिवास रक्तांबरप्रिय प्रीतिकर प्रीतिवास हंस सीरध्वज नीलवासः सर्वलोकाधिवास कुशेशय अधोक्षज गोविंद जनार्दन मधुसूदन वामन नमस्तेऽस्तु ॐसहस्रशीर्षाअसि सहस्रदृगसि सहस्रपादोऽसि अधोमुखोसि महापुरुषोसि सहस्रबाहुरसि सहस्रमूर्तिरसि त्वां वेदा प्राहुः सहस्रवदनं नमस्ते नमस्ते ॐनमस्ते विश्वदेवेश विश्वभूत विश्वात्मक विश्वरूप विश्वसंभव त्वत्तो विश्वमिदमभवद् ब्राह्मणस्ते मुखमासीत् क्षत्रिया दोः समभूदूरुयुग्मद्विशोऽभवन् शूद्राश्चरणकमलेभ्यो नाभेस्तथांतरिक्षंचइंद्राग्नीवक्रपंकजात् मनसस्तुशशीजातः प्रसादात्त्वचाप्यहं क्रोधाज्जातस्तुत्र्यंबकः प्राणाज्जातोमातरिश्वाशिरसोद्यौरजायत श्रोत्रोद्भवादिशोऽभवन् स्वयंभो भूरियंचरणाज्जातागोत्रोद्भवातिशोभिता त्वंनभस्त्वंचनक्षत्रंस्वेदोद्भिज्जास्तथांडजाः मूर्ताश्चैवाप्यमूर्ताश्चसर्वेत्वत्तः समुद्भवाः अतोविश्वात्मनाद्योसि ॐनमस्ते पुष्पहासोसि परमोसि महाहासोसि ॐकारोसि वषट्कारोसि स्वाहाकारोसि मातरिश्वासि यज्ञचरोसि त्रिकोशिरसि होतासि होमोसि हूयमानोसि पातासि पठितासि हंतासि हन्यमानोसि नीतिरसि मेधासि अग्निरसि विश्वधामासि अर्घोसि परमधामासि स्त्रुग्भांडोसि अरणिरसि अरणीयोसि ज्ञानमयोसि ध्यानमसि ध्येयोसि यज्ञोसि इष्टोसि यष्टासि दानमसि पशुरसि पूज्योसि इज्योसि होतासि गीतोसि उद्गातासि यजमानोसि गतिमानसि ज्ञानिनांज्ञानमसि योगिनां योगोऽसि मोक्षगामिणांमोक्षोसि श्रीमतांश्रीरसि गृह्योसि धातासि परमसि सोमोसि सूर्योसि दक्षिणासि

१ सर्वः शिव आत्मा यस्येति व्याख्याय पौनरुक्त्यं परिहरणीयम् ।

दीक्षितोसि नरोसि त्रिनयनोसि आदित्यप्रभोसि शुचिरसि शुक्रोसि नभोसि नभस्योसि यज्ञोसि सहोसि सत-
स्योसि तपोसि तपस्योसि मधुरसि माधवोसि कालोसि संक्रमोसि विक्रमोसि पराक्रमोसि अश्वग्रीवोसि महामेद
सि शंकरोसि हरीश्वरोसि सत्त्वमसि ब्रह्मचर्योसि स्वरसि मित्रावरुणोसि प्राग्वंशप्रकाशोसि भूतादिरसि महाभू-
तोसि उर्ध्वकर्मांतकर्तासि व्याप्तोसि सर्वपापविमोचनोसि त्रिविक्रमोसि नमस्ते ॥ पुलस्त्यउवाच ॥ इत्थंस्तुतोसौप्र-
पितामहेनविष्णुःसदैवाद्भुतकर्मचारी ॥ प्रोवाचचेदंप्रपितामहंतुवरंवृणीष्वामलसत्त्ववृत्त ॥ ९ ॥ तमब्रवीत्प्रीतियुतःपि-
तामहोवरंममेहाद्यविभोप्रयच्छ ॥ रूपेणपुण्येनविभोरनेनसंस्थीयतांमद्भवनेमुरारे ॥ १० ॥ इत्थंवृतेतेनवरेवरेण्येदेवोऽ-
प्यथार्चिंतितमव्ययात्मा ॥ तस्थौस्वरूपेणहिवामनेनसंपूज्यमानःसदनेस्वयंभोः ॥ ११ ॥ नृत्यंतितत्राप्सरसांसमूहा
गायंतिगीतानिसुरेंद्रनार्यः ॥ विद्याधरास्तूर्यमवादयंतस्तुवंतिदेवासुरसिद्धसंघाः ॥ १२ ॥ ततःसमाराध्यविभुंमुरारिं
पितामहोधौतमलःसुशुद्धः ॥ स्वर्गंविरिंचेःसदनात्सुपुण्यादानीयपूजांप्रचकारविष्णोः ॥ १३ ॥ स्वर्गेसहस्रंसतुयोज-
नानांविष्णुःप्रमाणेनहिवामनोऽभूत् ॥ तत्रास्यशक्रःप्रचकारपूजांस्वयंभुवस्तुल्यगुणांमहर्षे ॥१४॥ एतत्तवोक्तंभगवांस्त्रि-
विक्रमश्चकारयद्देवहितंमहात्मा ॥ रसातलस्थंदितिजंहिकुर्वन्निवेदितंतेऽघमयाहिविप्र ॥ १५ ॥ इतिश्रीवामनपुराणे
वामनप्रादुर्भावेब्रह्मोक्तस्तवोनामत्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ ॥ ॥
पुलस्त्यउवाच ॥ गत्वारसातलंदैत्योमहामणिविचित्रितं ॥ शुद्धस्फटिकसोपानंकारयामासवैपुरं ॥ १ ॥ तत्रमध्येसु-
विस्तीर्णेप्रासादोबहुवेदिकः ॥ मुक्ताजालांतरद्वारोनिर्मितोविश्वकर्मणा ॥ २ ॥ तत्रास्तेविविधान्भोगान्भुंजन्दिव्या-
न्समानुपान् ॥ नाम्नाविंध्यावलीत्येवंभार्यास्यदयिताभवत् ॥ ३ ॥ युवतीनांसहस्रस्यप्रधानाशीलमंडना ॥ तयास-

हमहातेजा रेमेवैरोचनिर्मुने ॥४॥ भोगासक्तस्यदैत्यस्यवसतःसुतलेतदा ॥ दैत्यतेजोहरंप्राप्तंपातालंवैसुदर्शनं ॥ ५ ॥ चक्रेप्रविष्टेपातालेदानवानांभयंमहत् ॥ अभूद्धलहलाशब्दःक्षुभितार्णवसंनिभः ॥ ६ ॥ तंश्रुत्वासुमहच्छब्दंबलिःखड्गं समाददे ॥ आःकिमेतदितीत्थंचपप्रच्छासुरपुंगवः ॥ ७ ॥ ततोविंध्यावलिःप्राहसांत्वयंतीनिजंपतिं ॥ कोशेखड्गंसमाधायधर्मपत्नीशुचिव्रता ॥ ८ ॥ उवाचमधुरंवाक्यंदैत्यराजंसुनिश्चितं ॥ एतद्भागवतंचक्रंदैत्यचक्रक्षयंकरं ॥ ९ ॥ संपूजनीयंदैत्येंद्रवामनस्यमहात्मनः ॥ इत्येवमुक्त्वाचार्वंगीप्रयतासाविनिर्ययौ ॥ १० ॥ अथाभ्यागात्सहस्रारंविष्णोश्चक्रंसुदर्शनम् ॥ ततोऽसुरपतिःप्राहकृतांजलिपुटोमुने ॥ संपूज्यविधिवच्चक्रमिदंस्तोत्रमुदीरयन् ॥११॥ बलिरुवाच ॥ नमस्यामिहरेश्चक्रंदैत्यचक्रविदारणं ॥ सहस्रांशुंसहस्राभंसहस्रारंसुदर्शनं ॥ १२ ॥ नमस्यामिहरेश्चक्रंयस्यानाभ्यांपितामहः ॥ तुंगेत्रिशूलधृक्शर्वअरामूलेमहाद्रयः ॥ १३ ॥ अरासुसंस्थितादेवाःसेंद्रार्काश्चसपावकाः ॥ जवेयस्यस्थितोवायुरापोऽग्निःपृथिवीनभः ॥ १४ ॥ अरासंधिषुजीमूताःसौदाम्न्यृक्षाणितारकाः ॥ बाह्यतोमुनयोयस्यवालखिल्यादयस्तथा ॥ १५ ॥ तदायुधवरंदेवंवासुदेवस्यभक्तितः ॥ त्रिधापापंशरीरोत्थंवाग्जंमानसमेवच ॥ १६ ॥ तन्मेदहस्वदीप्तांशोविष्णोश्चक्रंसुदर्शनं ॥ यत्कलौबहुलंपापंपितृकंमातृकंतथा ॥१७॥ तन्मेहरस्वतरसानमस्तेत्वच्युतायुता ॥ आपदोममनश्यंतुव्याधयोयांतुसंक्षयं ॥ त्वन्नामकीर्तनाच्चक्रदुरितंयातुसंक्षयं ॥ १८ ॥ इत्येवमुक्त्वामतिमान्समभ्यर्च्याथभक्तितः ॥ संस्मरन्पुंडरीकाक्षंसर्वपापविनाशनं ॥ १९ ॥ पूजितंबलिनाचक्रंकृत्वानिस्तेजसोसुरान् ॥ निश्चक्रामाथपातालाद्विषुवेदक्षिणेमुने ॥ २० ॥ सुदर्शनेविनिष्क्रांतेबलिर्विक्लवतांगतः ॥ परमामापदंप्राप्यसस्मार[1] क-

१ यन्मे कुलोद्भवं पा० पु० ।

पितामहं ॥ २१ ॥ सचापिसंस्मृतःप्राप्तःसुतलंदानवेश्वरः ॥ दृष्ट्वातस्थौमहातेजाःसार्घपात्रबलिस्तदा ॥ २२ ॥ स्तत-
मभ्यर्च्यविधिनापितुःपीतरमीश्वरं ॥ कृतांजलिपुटोभूत्वाइदंवचनमब्रवीत् ॥ २३ ॥ संस्मृतोपिसमायातःसुविषण्णेनचे-
तसा ॥ तन्मेहितंचपथ्यंचश्रेयांसित्वंतदाशुभे ॥ २४ ॥ किंकार्यंतातसंसारेवसतापुरुषेणहि ॥ कृतेनयेनवैनास्यबंधः
समुपजायते ॥ २५ ॥ संसारार्णवमग्नानांनराणामल्पचेतसां ॥ तारणायभवेद्यस्तुतन्मेव्याख्यातुमर्हसि॥ २६ ॥ पुल-
स्त्यउवाच ॥ एतद्वचनमाकर्ण्यतत्पौत्राद्दानवेश्वरः ॥ विचिंत्यप्राहवचनंसंसारेयद्धितंपरं ॥ २७ ॥ प्रह्लादउवाच ॥
साधुदानवशार्दूलयत्तेजातामतिस्त्वियं ॥ प्रवक्ष्यामिहितांतेद्यतथान्येषांनृणामपि ॥२८॥ भवजलधिगतानांद्वंद्ववाताह-
तानांसुतदुहितृकलत्रत्राणभारार्दितानां ॥ विषयविषमतोयेमज्जतामप्लवानांभवतिशरणमेकोविष्णुपोतोनराणां ॥२९॥
येसंश्रिताहरिमनंतमनादिमध्यंनारायणंसुरगुरुंशुभदंवरेण्यं ॥ शुद्धंखगेंद्रगमनंकमलालयेशंतेधर्मराजशरणंनविशंतिधी-
राः ॥ ३० ॥ स्वपुरुषमभिवीक्ष्यपाशहस्तंवदतियमःकिलतस्यकर्णमूले ॥ परिहरमधुसूदनप्रसन्नान्प्रभुरहमन्यनृणां
नवैष्णवानां ॥ ३१ ॥ तथान्यदुक्तंनरसत्तमेनइक्ष्वाकुणाभक्तियुक्तेननूनं ॥ येविष्णुभक्ताःपुरुषाःपृथिव्यांयमस्यतेनि-
र्विषयाभवंति ॥३२॥ साजिह्वायाहरिंस्तौतितच्चित्तंयत्तदर्पितं ॥ तावेवकेवलौश्लाघ्यौयौतत्पूजाकरौकृतौ ॥३३॥ नूनंनतौ
करौप्रोक्तौवृक्षशाखाग्रपल्लवौ ॥ नयौपूजयितुंशक्तौहरिपादाम्बुजद्वयं ॥ ३४ ॥ नूनंतत्कंठशालूकमथवाप्रतिजिह्वि-
का ॥ रोगश्चान्योनसाजिह्वायानवक्तिहरेर्गुणान् ॥३५॥ शोचानीयःसबंधूनांजीवन्नपिमृतोनरः॥ यःपादपंकजंविष्णोर्न-
पूजयतिभक्तितः ॥ ३६ ॥ येनरावासुदेवस्यसततंपूजनेरताः ॥ मृताअपिनशोच्यास्तेसत्यंसत्यंमयोदितं ॥ ३७ ॥

१ मनादिमध्यं पा० ।

शारीरंमानसंवाग्जंमूर्तामूर्तंचराचरं । दृश्यंस्पृश्यमदृश्यंवातत्सर्वंकेशवात्मकं ॥ ३८ ॥ येनार्चितोहिभगवान्चतुर्द्धापि
त्रिविक्रमः ॥ तेनार्चितानसंदेहोलोकाःसामरदानवाः ॥३९॥ यथारत्नानिजलधेरसंख्येयानिपुत्रक ॥ तथागुणाश्चदेव-
स्यत्वसंख्येयाहिचक्रिणः ॥ ४० ॥ येशंखचक्राब्जकरंचशार्ङ्गिणंखगेंद्रकेतुंवरदंश्रियःपतिं ॥ समाश्रितास्तेनभवन्ति
दुःखिताःसंसारगर्तेनपतंतितेपुनः ॥ ४१ ॥ येषांमनसिगोविंदोनिवासीसततंभवेत् ॥ नतेपरिभवंयांतिनमृत्योरुद्विजं-
तिच ॥ ४२ ॥ देवंशार्ङ्गधरंविष्णुंयेप्रपन्नाःपरायणं ॥ नतेषांयमलोकोस्तिनचतेनरकौकसः ॥ ४३ ॥ सतांगतिंप्राप्नु-
वंतिश्रुतिशास्त्रविशारदाः ॥ यातिदानवशार्दूलविष्णुभक्ताव्रजंतितां ॥ ४४ ॥ यागतिर्दैत्यशार्दूलसंग्रामेनिहतात्मनां ॥
ततोधिकांगतिंयांतिविष्णुभक्तानरोत्तमाः ॥ ४५ ॥ यागतिर्धर्मशीलानांसात्विकानांमहात्मनां ॥ सागतिर्गदितादैत्यभ-
गवद्वेदिनामपि ॥ ४६ ॥ सर्वावासंवासुदेवंसूक्ष्ममव्यक्तविग्रहं ॥ प्रपश्यंतिमहात्मानस्तीर्थभूताभवच्छिदं ॥ ४७ ॥
प्रणिपत्ययथान्यायंसंसारेनपुनर्भवेत् ॥ कृतेषुवसतेनित्यंक्रीडन्नास्तेमितद्युते ॥ ४८ ॥ आसीनःसर्वदेहेषुकर्मभिर्नसब-
ध्यते ॥ येषांविष्णुःप्रियोनित्यंतेविष्णोःसततंप्रियाः ॥ ४९ ॥ नतेपुनःसंभवंतितद्भक्तास्तत्परायणाः ॥ ध्यायेद्दामोदरं
यस्तुभक्तिनम्रस्तथार्चयेत् ॥ ५० ॥ नहिसंसारपंकेस्मिन्मज्जतेदानवेश्वर ॥ कल्पमुत्थाययेभक्त्यास्मरंतिमधुसूदनं
॥५१॥ श्रावयंतिचशृण्वंतिदुर्गाण्यतितरंतिते ॥ हरिगाथामृतंपीत्वाबलेवैश्रोत्रभाजनैः ॥५२॥ प्रहृष्यतिमनोयेषांदुर्गा-
ण्यतितरंतिते ॥ येषांचक्रगदापाणौभक्तिरव्यभिचारिणी ॥ ५३ ॥ तेयांतिनियतंस्थानंयत्रयोगेश्वरोहरिः ॥ विष्णुध-
र्मप्रसक्तानांतेषांयापरमागतिः ॥ ५४ ॥ सातुजन्मसहस्रेणनतपोभिरवाप्यते ॥ किंजप्यैस्तस्यमंत्रैर्वाकिंतपोभिःकि-
माश्रमैः ॥ ५५ ॥ यस्यनास्तिपराभक्तिःसततंमधुसूदने ॥ वृथायज्ञोवृथादानंवृथाधर्मोवृथाश्रमं ॥ ५६ ॥ वृथातपश्च

कीर्तिश्चयोद्वेष्टिमधुसूदनं ॥ किंतस्यबहुभिर्मंत्रैर्भक्तिर्यस्यजनार्दने ॥ ५७ ॥ नमोनारायणायेतिमंत्रःसर्वार्थसाधकः ॥
विष्णुर्येषांजयस्तेषांकुतस्तेषांपराजयः ॥ ५८ ॥ येषामिंदीवरश्यामोहृदयस्थोजनार्दनः ॥ सर्वमंगलमांगल्यंवरेण्यंव-
रदंप्रभुं ॥५९ ॥ नारायणंनमस्कृत्यसर्वकर्माणिकारयेत् ॥ विष्टयोव्यतिपाताश्चयेऽन्येदुर्नीतिसंभवाः ॥ ६० ॥ तेना-
मस्मरणाद्विष्णोर्न्नाशंयांतिमहासुर ॥ तीर्थकोटिसहस्राणितीर्थकोटिशतानिच ॥ ६१ ॥ नारायणप्रणामस्यकलांनार्हं-
तिषोडशीं ॥ पृथिव्यांयानितीर्थानिपुण्यान्यायतनानिच ॥ ६२ ॥ तानिसर्वाण्यवाप्नोतिविष्णोर्नामानुकीर्तनात् ॥ प्रा-
प्नुवंतिनतांल्लोकान्व्रतिनोवातपस्विनः ॥ ६३ ॥ प्राप्यंतेयेतुकृष्णस्यनमस्कारपरैर्नरैः ॥ योप्यन्यदेवताभक्तोमिथ्या-
र्चयतिकेशवं ॥ ६४ ॥ सोपिगच्छतिसाधूनांस्थानंपुण्यकृतांमहत् ॥ सुसत्येनहृषीकेशंपूजयित्वातुयत्फलं ॥ ६५ ॥ सु-
चीर्णेतपसिनॄणांतत्फलंनकदाचन ॥ त्रिसंध्यंपद्मनाभंतुयेस्मरंतिसुमेधसः ॥ ६६ ॥ लभंतेतूपवासस्यफलंनास्त्यत्रसं-
शयः ॥ सततंशास्त्रदृष्टेनकर्मणाहरिमर्चय ॥ ६७ ॥ तत्प्रसादात्परांसिद्धिंबलेप्राप्स्यसिशाश्वतीं ॥ तन्मनाभवतद्भ-
क्तस्तद्याजीतंनमस्कुरु ॥ तमेवाश्रित्यदेवेशंसुखंप्राप्स्यसिपुत्रक ॥६८॥ आद्यंह्यनंतमजरंहरिमव्ययंचसर्वत्रगंब्रह्मपरं
पुराणं ॥ तेयांतिवैष्णवपदंध्रुवमक्षयंचयेमानवाविगतरागपराभवंति ॥ ६९ ॥ नारायणंसुरवरंसततंस्मरंतितेधौतपांडर-
पटाइवराजहंसाः ॥ संसारसागरजलस्यतरंतिपारंध्यायंतियेसततमच्युतमीशितारं ॥ ७० ॥ निष्कल्मषंसपदिपद्मद-
लायताक्षंध्यानेननतेनहतकिल्बिषचेतनास्ते ॥ मातुःपयोधररसंनपुनःपिबंतियेकीर्तयंतिवरदंवरपद्मनाभं ॥ ७१ ॥ शं-
खाब्जचक्रवरचापगदासिहस्तंपद्मालयावदनपंकजषट्पदाख्यं ॥ नूनंप्रयांतिसदनंमधुघातिनस्तेशृण्वंतियेभक्तिपराम-
नुष्याः॥ ७२ ॥ संकीर्त्यमानंभगवंतमाद्यमाजन्मपापंयदकारियैस्तु ॥ तेमुक्तपापाःसुखिनोभवंतियथामृतप्राशनतर्पिता-

श्च ॥ ७३ ॥ तस्माद्ध्यानंस्मरणंकीर्तनंवानामश्रवणंपठतांसज्जनानां ॥ कार्यैर्विष्णोःश्रद्दधानैर्मनुष्यैःपूजातुल्यंतत्प्रशं-
संतिदेवाः ॥ ७४ ॥ बाह्येनचांतःकरणेनयोगिष्वथार्चयेत्केशवमीशितारं ॥ पुष्पैश्चपत्रैर्ऋतुसंभवैश्चनूनंसपूज्योविधिव-
न्नरेण ॥ ७५ ॥ इतिश्रीवामनपुराणेभगवत्प्रशंसानामचतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ ॥
बलिरुवाच ॥ भवताकथितंसर्वंसमाराध्यजनार्दनं ॥ यागतिःप्राप्यतेलोकेसचाराध्यःकथंचन ॥१॥ केनार्चनेनदेवस्यप्री-
तिःसमुपजायते ॥ कानिदानानिशस्तानिप्रीणनायजगद्गुरोः ॥ २ ॥ उपवासादिकंकार्यंकस्यांतिथ्यांमहोदयं ॥ का-
निपुण्यानिशस्तानिविष्णुपुष्टिकराणिवै ॥ ३ ॥ यच्चान्यदपिकर्तव्यंहृष्टरूपैरनालसैः ॥ तदप्यशेषंदैत्येंद्रममाख्यातु-
मिहार्हसि ॥४॥ प्रह्लादउवाच ॥ श्रद्दधानैर्भक्तिपरैःसमुद्दिश्यजनार्दनं ॥ दीयंतेयानिदानानितानियांतिनवैक्षयं ॥ ५ ॥
ताएवतिथयःशस्तायास्वभ्यर्च्यजगत्पतिं ॥ तच्चित्तस्तन्मयोभूत्वाउपवासीनरोभवेत् ॥ ६ ॥ पूजितेषुद्विजेंद्रेषुपूजित-
स्तुजनार्दनः ॥ यस्तान्द्वेष्टिसमूढात्मासयातिनरकंध्रुवं ॥ ७ ॥ तानर्चयेन्नरोभक्त्याब्राह्मणान्विष्णुतत्परः ॥ एवमा-
हहरिःपूर्वंब्राह्मणामामकीतनुः ॥८॥ ब्राह्मणोनावमंतव्योबुधोवाप्यबुधोऽपिवा ॥ सोऽपिदिव्यातनुर्विष्णोस्तस्मात्तंह्यर्च-
येन्नरः ॥ ९ ॥ तान्येवचप्रशस्तानिकुसुमानिमहासुर ॥ यानिस्युर्वर्णयुक्तानिरसगंधयुतानिच ॥ १० ॥ विशेषतःप्रव-
क्ष्यामिपुण्यानितिथिभिःसह ॥ दानानीहप्रशस्तानिमाधवप्रीणनायतु ॥ ११ ॥ जातीशताह्वासुमनाःकुंदंबहुपुटंतथा ॥
बाणंचचंपकाशोकंकरवीरंचयूथिका ॥ १२ ॥ पारिभद्रंपाटलाचबकुलंगिरिशालिनी ॥ तिलकंजपाकुसुमंपीतकंतगरं
त्वपि ॥१३॥ एतानिहिप्रशस्तानिकुसुमान्यच्युतार्चने ॥ सुरभीणितथान्यानिवर्जयित्वातुकेतकीं ॥ १४ ॥ बिल्वपत्रंश-
मीपत्रंपत्रंभृंगमृगांकयोः ॥ तमालमालकीपत्रंशस्तंचहरिपूजने ॥ १५ ॥ एषामपिहिपुष्पाणिप्रशस्तान्यर्चनेविभोः ॥

पल्लवान्यपितेषांस्युःपत्राण्यर्चाविधौहरेः ॥ १६ ॥ वीरुधांचप्रवालेनबर्हिंपांचार्चयेन्नरः ॥ नानारूपैश्चानुभावैःकमलेंदीवरादिभिः ॥ १७॥ प्रवालैःशुचिभिःसूक्ष्मजलप्रक्षालितैर्बलैः ॥ वनस्पतीनामर्चेततथादूर्वाग्रपल्लवैः ॥ १८॥ तथैवप्रतिपूज्योसौपत्रकुड्मलपल्लवैः ॥ चंदनेनानुलिंपेतकुंकुमेनचयत्नतः ॥ १९ ॥ उशीरपद्मकाभ्यांसतथाकालीयकादिना ॥ महिषाख्यंकणंदारुसिह्लकंनागरंतथा ॥ २० ॥ शंखजातीफलंश्रीशेधूपनेस्युःप्रियाणिवै ॥ हविषासंस्कृतायेतुयवगोधूमशालयः ॥ २१ ॥ तिलमुद्गादयोमाषाव्रीहयश्चप्रियाहरेः ॥ गोदानानिपवित्राणिभूमिदानानियानिच ॥ २२ ॥ वस्त्रान्नस्वर्णदानानिप्रीतयेमधुघातिनः ॥ माघमासेतिलाःशस्तास्तिलधेनुश्चदानव ॥ २३ ॥ इंधनानिचदेयानिमाधवःप्रीयतामिति ॥ फाल्गुनेव्रीहयोवस्त्रंतथाकृष्णाजिनादिकं ॥ २४ ॥ गोविंदप्रीणनार्थंचदातव्यंपुरुषर्षभैः ॥ चैत्रेविचित्रवस्त्राणिशयनान्यासनानिच ॥ २५ ॥ विष्णोःप्रीत्यर्थमेतानिदेयानिब्राह्मणेषुच ॥ गंधशालीनिवस्तूनिवैशाखेसुरभीणिच ॥ २६ ॥ देयानिद्विजमुख्येभ्योमधुसूदनतुष्टये ॥ उदकुंभावधेनुंचतालवृंतंसचंदनं ॥ त्रिविक्रमस्यप्रीत्यर्थंदातव्यंसाधुभिःसदा ॥२७॥ सदाभवेत्पुत्रधनेनभार्यायायुतश्चयोविष्णुगतःसदाभवेत् ॥२८॥ शृणोतिनित्यंविधिवच्चभक्त्यासंपूजयन्यःप्रणतश्चविष्णुं ॥ सचाश्वमेधस्यसदक्षिणस्यफलंसमग्रंकिलहीनपापः ॥ २९ ॥ प्राप्नोतिदत्तस्यसुवर्णभूमेरश्वस्यगोनागरथस्यचैव ॥ नारीनरश्चापिचपादमेकंशृण्वन्शुचिःपुण्यतमःपृथिव्यां ॥ ३० ॥ स्नानेकृतेतीर्थवरेसुपुण्येगंगाजलेनैमिषपुष्करेवा ॥ कोकामुखेयत्प्रवदंतिविप्राःप्रयागमासाद्यचमाघमासे ॥ ३१ ॥ सतत्फलंप्राप्यचवामनस्यसंकीर्तयन्नान्यमनाःपदंहि ॥ गच्छेन्मयानारदतेद्यचोक्तंयद्राजसूयस्यफलंप्रयच्छेत् ॥ ३२ ॥ यद्भूमिलोकेसुरलोकलभ्येमहत्सुखंप्राप्यनरःसमग्रं ॥ प्राप्नोतिचास्यश्रवणान्महर्षेसौत्रामणेर्नास्तिचसंशयोमे ॥ ३३ ॥ रत्नस्यदानस्यचयत्फलंभवेत्सूर्य-

स्यचंद्रेग्रहणेचराहोः ॥ अन्यस्यदानेनफलंयथोक्तंबुभुक्षितेप्राप्तवरेचसाग्निके ॥ ३४ ॥ दुर्भिक्षसंपीडितपुत्रभार्येज्ञानी
सदापोषणतत्परेच ॥ देवाग्निविप्रर्षिरतेचपित्रोःसुतेतथाभ्रातरिज्येष्ठमासे ॥ ३५ ॥ यत्तेफलंतत्प्रवदंतिदेवाःसतत्फलं
लभतेचास्यपाठात् ॥ चतुर्दशंवामनमाहुरग्र्यंश्रुतेचयस्याघचयानिनाशं ॥ ३६ ॥ प्रयांतिनास्त्यत्रचसंशयोमेमहांति
पापान्यपिनारदाशु ॥ पाठात्संश्रवणाद्विप्रश्रवणादपिकस्यच ॥ ३७ ॥ नश्यंतिसर्वपापानिवामनस्यसदामुने ॥
उपानद्युगलंछत्रंलवणामलकादिकं ॥ ३८ ॥ आषाढेवामनप्रीत्यैदातव्यानिविपश्चिता ॥ मासिभाद्रपदेदद्यात्पायसं
मधुसर्पिषी ॥ ३९ ॥ हृषीकेशप्रीणनार्थंलवणंसगुडौदनं ॥ नीलंतुरगंवृषभंदधिताम्रायसादिकं ॥ ४० ॥ प्रीत्यर्थंपद्म-
नाभस्यदेयमाश्वयुजेनरैः ॥ रजतंकनकदीपान्मणिमुक्ताफलादिकं ॥ ४१ ॥ दामोदरस्यतुष्ट्यर्थंप्रदद्यात्कार्तिकेनरः ॥
खरोष्ट्राश्वतरान्नागाञ्शकटाद्यमजाविकं ॥ ४२ ॥ दातव्यंकेशवप्रीत्यैमासिमार्गशिरेनरैः ॥ प्रासादनगरादीनिगृहप्रा-
वरणादिकं ॥ ४३ ॥ वामनस्यतुतुष्ट्यर्थंपौषेदेयानिभक्तितः ॥ दासीदासमलंकारमन्नंषड्रससंयुतं ॥ ४४ ॥ पुरुषोत्तम-
स्यतुष्ट्यर्थंप्रदेयंसार्वकामिकं ॥ यद्यदिष्टतमंकिंचिद्यद्वाप्यस्यशुचिर्गृहे ॥ तत्तद्धिदेयंप्रीत्यर्थंदेवदेवस्यचक्रिणः ॥ ४५ ॥
यःकारयेन्मंदिरंकेशवस्यपुण्याँल्लोकान्सजयेच्छाश्वतान्वा ॥ दत्वारामान्पुष्पफलाभिपन्नान्भोगान्सभुंक्तेकामतः-
श्लाघनीयान् ॥४६॥ पितामहस्यपुरतःकुलान्यष्टोत्तराणितु ॥४७॥ कारयेदात्मनासार्धंविष्णोर्मंदिरकारकः ॥ इमाश्च
पितरोदेवागाथागायंतियोगिनः ॥ ४८ ॥ पुरतोयदुसिंहस्यह्यमोघस्यतपस्विनः ॥ अपिनःस्वकुलेकश्चिद्विष्णुभक्तोभ-
विष्यति ॥ ४९ ॥ हरिमंदिरकर्तायोभविष्यतिशुचिव्रतः ॥ अपिनःसंततौजायेद्विष्ण्वालयविलेपनः ॥ ५० ॥
संमार्जनंचधर्मात्माकरिष्यतिचभक्तितः ॥ अपिनःसंततौजातोध्वजंकेशवमंदिरे ॥ ५१ ॥ दास्यतेदेवदेवायदीपंपुष्पानु-

लेपनं ॥ अपिनःसकुलेभूयादेकादश्यांहियोनरः ॥ ५२ ॥ करिष्यत्युपवासंचसर्वपातकहानिदं ॥ महापातकयुक्तोवा पातकीचोपपातकी ॥ ५३ ॥ विमुक्तपापोभवतिविष्णवावसथचित्रकृत् ॥ इत्थंपितॄणांवचनंश्रुत्वानृपतिसत्तमः ॥ ५४ ॥ देवतायतनंभूम्यांस्वयंचालिखतासुर ॥ विभूतिभिःकेशवस्यकेशवायतनान्यथ ॥ ५५ ॥ चित्रयामासशुचिभिःपंचवर्णैस्तुचित्रकैः ॥ दीपपात्राणिविधिवद्दासुदेवालयेबले ॥ ५६ ॥ सुवर्णतैलपूर्णानिघृतपूर्णानिचस्वयं ॥ नानावर्णावैजयंत्योमहारजनरंजिताः ॥ ५७ ॥ मंजिष्ठानवरंगीयाःश्वेतपाटलिकाश्रिताः ॥ आरामाविविधाहृद्याःपुष्पाढ्याःफलशालिनः ॥ ५८ ॥ लतापल्लवसंछन्नादेवदारुभिरावृताः ॥ कारितालंकृतामंचाधिष्ठिताःकुशलैर्जनैः ॥ ५९ ॥ रागगंधर्वविधानज्ञैःरत्नसंस्कारिभिर्दृढैः ॥ तेषुनित्यंप्रपूज्यंतेयतयोब्रह्मचारिणः ॥ ६० ॥ श्रोत्रियादानसंपन्नादीनांधविकलादयः ॥ इत्थंसन्नृपतिर्भूत्वाश्रद्दधानोजितेंद्रियः ॥ ६१ ॥ ज्यामघोविष्णुनिलयंगतइत्यनुशुश्रुम ॥ सर्षपस्यसतैलेनमधुकालसिसंभवैः ॥ ६२ ॥ दीपप्रदानान्नरकानंधतामिस्रसंज्ञकान् ॥ तीर्त्वासभार्ययाब्रह्मन्विष्णुलोकमगात्ततः ॥ ६३ ॥ तमेवचाद्यापिबलेमार्गंज्यामघकारितं ॥ व्रतंतिनरशार्दूलाविष्णुलोकंजिगीषवः ॥ ६४ ॥ तस्मात्त्वमपिराजेंद्रकारयस्वालयंहरेः ॥ तमर्चयस्वयत्नेनब्राह्मणांश्चबहुश्रुतान् ॥ ६५ ॥ पौराणिकान्विशेषेणसदाचाररतान्शुचीन् ॥ वासोभिर्भूषणैरत्नैर्गोभिर्भूकनकादिभिः ॥ ६६ ॥ विभवेसातिदेवस्यप्रीणनंकुरुचक्रिणः ॥ एवंक्रियायोगरतस्यतेद्यनूनंपुरारिःशुभदोभविष्यति ॥ ६७ ॥ नरानसीदंतिबलेसमाश्रिताविभुंजगन्नाथमनंतमच्युतं ॥ प्रह्लादःसतदाचोक्त्वापुनर्नगरसध्यगात् ॥ ६८ ॥ पुलस्त्यउवाच ॥ इत्येवमुक्त्वावचनंदितीश्वरोवैरोचनंसत्यमनुत्तमंहि ॥ संपूजितस्तेनविमुक्तिमायथौसंपूर्णकामोहरिपादभक्तः ॥ ६९ ॥ गतेहितस्मिन्मुदितेपितामहेबलेर्बभौमंदिरमिंदुवर्णे ॥ महेंद्रशिल्पिप्रवरोथ

केशवंसकारयामासमहामहीयान् ॥ ७० ॥ स्वयंस्वभार्यासहितश्चकारदेवालयेमार्जनलेपनादिकाः ॥ क्रियामहात्मा
यवशर्कराद्याबलिंचकाराप्रतिमंमधुद्रुहः ॥ ७१ ॥ दीपप्रदानंस्वयमायताक्षीविंध्यावलीविष्णुगृहेचकार ॥ गेयंसध-
र्मग्रहणंचधीमान्पौराणिकैर्विप्रवरैरकारयत् ॥ ७२ ॥ तथाविधस्यासुरपुंगवस्यधर्मानुमार्गेप्रतिसंस्थितस्य ॥ जग-
त्पतिर्दिव्यवपुर्जनार्दनस्तस्थौमहात्माबलिरक्षणाय ॥ ७३ ॥ सूर्यायुताभंमुसलंप्रगृह्यनिघ्नन्सदुष्टानरियूथपालान् ॥
द्वारिस्थितोनप्रददौप्रवेशंप्राकारगुप्तौबलिनोगृहेतु ॥ ७४ ॥ द्वारिस्थितेधातरिरक्षपालेनारायणेसर्वगुणाभिरामे ॥
प्रासादमध्येहरिमीशितारमभ्यर्चयामाससुरर्षिमुख्यं ॥ ७५ ॥ सएवमास्तेसुरराड्बलिस्तुसमर्चयन्वैहरिपादपंकजे ॥
सस्मारनित्यंहरिभाषितानिसतस्यजातोविनयांकुशस्तु ॥ ७६ ॥ इदंचवृत्तंसपपाठदैत्यराड्स्मरन्सुवाक्यानिगुरोः
शुभानि ॥ तथ्यानिपथ्यानिपरत्रचेहपितामहस्येंद्रसमस्यवीरः ॥ ७७ ॥ येवृद्धवाक्यानिसमाचरंतिश्रुत्वादुरुक्ता-
न्यपिपूर्वतस्तु ॥ स्निग्धानिपश्चान्नवनीतशुद्धामोदंतितेनात्रविचार्यमस्ति ॥ ७८ ॥ आपद्भुजंगदष्टस्यमंत्रहीनस्यस-
र्वदा ॥ वृद्धवाक्यौषधान्येवकुर्वंतिकिलनिर्विषं ॥ ७९ ॥ वृद्धवाक्यामृतंपीत्वातदुक्तान्यनुमन्यच ॥ यातृप्तिर्जायतेपुं-
सांसोमपानेकुतस्तथा ॥ ८० ॥ आपत्तौपतितानांयेषांवृद्धानसंतिशास्तारः ॥ तेशोच्याबंधूनांजीवंतोऽपीहमृततुल्याः
॥ ८१ ॥ आपद्ग्राहगृहीतानांवृद्धाःसंतिनपंडिताः ॥ एषांमोक्षयितारोवैतेषांशांतिर्नविद्यते ॥ ८२ ॥ आपज्जलनि-
मग्नानांह्रियतांव्यसनोर्मिभिः ॥ वृद्धवाक्यैर्विनानूनंनैवोत्तारःकथंचन ॥ ८३ ॥ पुलस्त्यउवाच ॥ तस्माद्योवृद्धवाक्या-
निश्रृणुयाद्विदधातिवा ॥ ससद्यःसिद्धिमाप्नोतियथावैरोचनिर्बलिः ॥ ८४ ॥ इतिश्रीवामनपुराणेश्रीत्रिविक्रमचरितं
समाप्तम् ॥ पुलस्त्यउवाच ॥ एतन्मयापुण्यतमंपुराणंतुभ्यंतथानारदकीर्तितंवै ॥ श्रुत्वाचकीर्त्यापरयासमेतोभक्त्याचवि-

ष्णोःपदमभ्युपैति ॥ ८५ ॥ यथापापानिपूयंतेगंगावारिविगाहनात् ॥ तथापुराणश्रवणाद्दुरितानांहिनाशनं ॥ ८६ ॥
नतस्यरोगाजायंतेनविषंचाभिचारिकं ॥ शरीरेचकुलेब्रह्मन्यःशृणोतीहवामनं ॥ ८७ ॥ इदंरहस्यंपरमंतवोक्तंनवा-
च्यमेवंहरिभक्तिवर्जिते ॥ द्विजस्यनिंदारतिहीनतारतेसहेतुवाक्याद्दतपापसत्त्वे ॥ ८८ ॥ नमोनमःकारणवामनायना-
रायणायामितविक्रमाय ॥ श्रीशार्ङ्गचक्रासिगदाधरायनमोस्तुतस्मैपुरुषोत्तमाय ॥ ८९ ॥ इत्थंवदेद्योनियतंमनुष्यः
कृष्णभावनः ॥ तस्यविष्णुपदंमोक्षंददातिसुरपूजितः ॥ ९० ॥ वाचकायप्रदातव्यंगोभूस्वर्णविभूषणं ॥ वित्तशाठ्यं
नकर्तव्यंकुर्वन्श्रवणनाशकं ॥ ९१ ॥ त्रिसंध्यंचपठन्शृण्वन्सर्वपापप्रणाशनं ॥ असूयारहितोविप्रःसर्वसंपत्प्रदायकम्
॥ ९२ ॥ इतिश्रीवामनपुराणेपुलस्त्यनारदसंवादेपंचनवतितमोऽध्यायः ॥ ९५ ॥ शुभमस्तु ॥ श्रीकृष्णार्पितमस्तु ॥

॥ इदं वामनपुराणं संपूर्णम् ॥

इदं पुस्तकं गोन्धळेकरोपाव्हश्रीधरात्मजेन रावजीशर्मणा स्वीये जगद्धितेच्छुनाम्नि मुद्रणालये मुद्रितम् । शकाब्दाः १८०८ श्रावणमासः।

# अथ वामनपुराणस्य शुद्धिपत्रिका ।

| अध्यायाङ्काः | पत्रम् साङ्कम् | पत्रम् निरङ्कम् | पङ्क्तिः | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|---|---|
| १ | .... | १ | १ | भ्या | भ्यां |
| १ | .... | १ | ६ | तन्मे | तं मे |
| १ | १ | .... | ९ | त्रिनेत्रश्श्रुति | त्रिनेत्रःश्रुति |
| २ | २ | .... | ९ | दक्षेन | दक्षेण |
| २ | २ | .... | १५ | प्राग्भाव | प्रागभाव |
| २ | ३ | .... | ६ | सनद्ध | संनद्ध |
| २ | ३ | .... | ११ | ताडितःस्त | ताडितस्त |
| २ | ३ | .... | १५ | आंगत्ये | आगत्ये |
| २ | ३ | .... | १६ | बुध्यन्तं | बुद्ध्यन्तं |
| ३ | .... | ४ | ७ | दंअ | दं. |
| ३ | .... | ५ | ६ | तेनम् | तेन |
| ३ | .... | ५ | ११ | प्रतिविम्बिवते पु | प्रतिविम्बितेपु |
| ३ | ५ | .... | ११ | स्नास्यत | स्नातस्य |
| ३ | ५ | .... | १४ | वृत्ताच्युति | वृत्ताच्युति |
| ३ | ५ | .... | १४ | नान्ये | नान्या |
| ३ | ५ | .... | १५ | परिवारिना | परिवारिता |
| ३ | ५ | .... | १९ | मणि भि | मणिभि |
| ३ | ५ | .... | १९ | विशेपै | विशेपैः |
| ३ | ५ | .... | १९ | भस्मधसरः | भस्मधूसरः |
| ३ | ५ | .... | १९ | भुजङ्गेः | भुजङ्गैः |
| ३ | ५ | .... | १६ | शि ्वस्वरूपत्वं | शिवस्वरूपत्वं |
| ४ | .... | ६ | १० | परिप्प्लुता | परिप्लुता |
| ४ | .... | ६ | १२ | पतितांष्ट्वा | पतितां दृष्ट्वा |
| ४ | .... | ६ | १५ | मरवे | मखे |
| ४ | ६ | .... | १ | तछुत्वा | तच्छ्रुत्वा |
| ४ | ६ | .... | १ | वेचौरा | वचौरा |
| ४ | ६ | .... | १ | स्प्लुतो | प्लुतो |
| ४ | ६ | .... | १ | क्रुद्धःस्य | क्रुद्धस्य |
| ४ | ६ | .... | १ | क्रोधात्रनेत्रिस्य | क्रोधात्त्रिनेत्रस्य |
| ४ | ६ | .... | २ | द्रवान्मुने | द्रवामुने |
| ४ | ६ | .... | २ | गणासिंह | गणाःसिंह |
| ४ | ६ | .... | ४ | स्तस्थौ | स्तस्थौ |
| ४ | ६ | .... | ५ | त्पित्व | त्विव |
| ४ | ६ | .... | १२ | गणेश्वरंम् | गणेश्वरम् |

| अध्यायाङ्काः | पत्रम् साङ्कम् | पत्रम् निरङ्कम् | पङ्क्तिः | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|---|---|
| ४ | ६ | .... | १३ | ग्रहानमु | ग्रहानवसु |
| ४ | ६ | .... | १३ | रुद्रास्त्वे | रुद्रास्त्वे |
| ४ | .... | ७ | १४ | सूर्याद्भवाः | सूर्योद्भवाः |
| ५ | ८ | .... | ११ | कार्त्तिते | कीर्तिते |
| ५ | .... | ९ | १३ | प्रथमोथ | प्रममंथ |
| ६ | ९ | .... | ७ | शास्रो | मास्रे |
| ६ | १० | .... | ७ | विद्धो | विद्धो |
| ६ | .... | ११ | ४ | पुज्यः | पूज्य |
| ६ | .... | ११ | ११ | भर्तृ | भर्तृ |
| ६ | १२ | .... | १ | पटा | पुटा |
| ६ | १२ | .... | १० | सुंदरीम् | सुंदरीम् |
| ७ | १२ | .... | १४ | भुंजगे | भुजंगे |
| ७ | १२ | .... | १५ | विमक्ति | विभक्ति |
| ७ | १२ | .... | १५ | सुर्वर्णे | सुवर्णे |
| ७ | १३ | .... | ४ | तीर्थं | तीर्थं |
| ७ | १३ | .... | ९ | उतिष्ठध्वं | उत्तिष्ठध्वं |
| ७ | .... | १४ | २ | कांतें | कांते |
| ७ | .... | १४ | ७ | स्वरेणा | स्वरेणा |
| ७ | .... | १४ | ८ | सूनुःश्च | सूनुश्च |
| ७ | .... | १४ | ८ | पंचःषड् | पंचषड् |

| अध्यायाङ्काः | पत्रम् साङ्कम् | पत्रम् निरङ्कम् | पङ्क्तिः | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|---|---|
| ८ | .... | १६ | १ | शिछत्वा | शिछत्त्वा |
| ८ | .... | १६ | १४ | सहस्त्रं | सहस्रं |
| ८ | १६ | .... | १ | वदा | वद |
| ८ | १६ | .... | १ | दमून् | ञमून् |
| ९ | १६ | .... | १२ | समाध्या | समध्या |
| ९ | १७ | .... | ३ | लोको | लोकः |
| १० | १९ | .... | ९ | वरणे | चरणे |
| १० | १९ | .... | २ | संभिन्न | सभिन्न |
| ११ | २२ | .... | ३ | भुग्ययश्च | भुग्यश्च |
| ११ | .... | २३ | ५ | प्रवर | प्रवरं |
| १२ | .... | २३ | ६ | प्रावरंणे | प्रावरणे |
| १२ | .... | २३ | ९ | यद्विदिह | यद्विदिह |
| १४ | .... | २६ | १३ | चेका | चैका |
| १४ | २८ | .... | ४ | गार्हस्थ | गार्हस्थ्यं |
| १४ | २८ | .... | ५ | गार्हस्थ | गार्हस्थ्य |
| १५ | .... | २९ | १२ | भुवर्लोकं | भुवर्लोक |
| १६ | ३१ | .... | १५ | क्लीवत्व | क्लीवत्वमापन्न |
| १६ | .... | ३२ | १ | भ्यानैवेद्ये | भ्यानैवेद्यैः |
| १६ | ... | ३२ | १३ | परंमासैः | परंमासैः |
| १७ | ३२ | .... | १८ | धपं | धूपं |

| | | | | | |
|---|---|---|---|---|---|
| १७ | .... | ३२ | ६ | कौमुदकीं | कौमोदकीं |
| १७ | .... | ३३ | ८ | मोदाय | मादाय |
| १९ | ३६ | .... | ९ | शुल्काख्य | शुक्लाख्य |
| १९ | ३६ | .... | १० | दद्यात्स्व | दद्यांस्व |
| २० | ३७ | .... | ८ | स्तुवस्व | स्तुवंस |
| २० | .... | ३८ | ८ | द्राय | द्रावय |
| २० | .... | ३८ | १४ | पृथव्यां | पृथिव्याम् |
| २० | ३८ | .... | ६ | विवशु | विविशु |
| २० | ३८ | .... | १२ | ज्जता | ज्जाता |
| २१ | .... | ३९ | १५ | वामर्थ्येन | सामर्थ्येन |
| २१ | ३९ | .... | ७ | कुमदैः | कुमुदैः |
| २१ | ४० | .... | ४ | समुतिष्ठ | समुत्तिष्ठ |
| २२ | ४१ | .... | ७ | हर्षीकेश | हृषीकेश |
| २२ | .... | ४२ | २ | सुरत्तमाः | सुरसत्तमाः |
| २२ | .... | ४२ | ८ | कथ्यमानं | कथ्यमानं |
| ३१ | .... | ५० | १ | सत्वस्थः | सत्त्वस्थः |
| ३१ | ५१ | .... | ९ | संन्नो | संपन्नो |
| ३४ | ५४ | .... | १ | त्वद्दष्ट्वा | दृष्ट्वा |
| ३४ | .... | ५५ | ५ | गछे | गच्छे |
| ३५ | .... | ५६ | १ | दक्षिणाथ | दक्षिणार्थं |
| ३६ | .... | ५७ | ५ | दवदेवं | देवदेवं |

| | | | | | |
|---|---|---|---|---|---|
| ३७ | .... | ५९ | १५ | सास्यफलंलभेदिदी-भवः | स्तस्यफलंलभेदितिभावः |
| ३८ | .... | ६० | १५ | रधिरा | रुधिरा |
| ४१ | .... | ६२ | १४ | प्राप्नुवंति | प्राप्नुवंतु |
| ४३ | ६४ | .... | १४ | किमथपांशु | किमर्थंपांशु |
| ४५ | ६८ | .... | १२ | निर्धूततपापा | निर्धूतपापा |
| ४५ | .... | ६९ | ७ | पिवंते | पिबंति |
| ४६ | ६९ | .... | ६ | प्रतिष्ठतं | प्रतिष्ठितं |
| ४७ | ७२ | .... | ९ | रुध्वं | ऊर्ध्वं |
| ४७ | ७४ | .... | ९ | मधुश्चयुता | मधुच्युता |
| ४८ | ७५ | .... | ७ | मक्ति | भक्ति |
| ४८ | ७५ | .... | ९ | शृणुया | शृणुया |
| ५४ | ८४ | .... | १० | मुक्त्वा | सुक्त्वा |
| ५४ | ८५ | .... | ९ | वक्ष | वक्षं |
| ५७ | ९१ | .... | ५ | कृतिकाः | कृत्तिकाः |
| ५७ | .... | ९२ | ११ | लाह | लोह |
| ५७ | ९३ | .... | ५ | वेर्णाचं | वेर्णांच |
| ५८ | .... | ९५ | ९ | क्रुधो | क्रुद्धो |
| ५८ | .... | ९६ | ९ | मूर्ध्रि | मूर्ध्नि |
| ५९ | ९८ | .... | २ | निपपात | निपपात |
| ५९ | ९८ | .... | ६ | महीपृष्ठे | महीपृष्ठे |
| ६० | .... | ९९ | १ | क्षिप्य | क्षिप्य |

